मिप्रायः प्रदर्शितः। पुनः कथंभूतं प्ररूपणं ? सिद्धं-पूर्वाचार्यपरंपराप्रसिद्धं, न स्वरुचिविरचितमित्यर्थः। अनेनाचार्यः स्वस्य कर्तृतां परिहृत्य अनुवादमाह। पुनः कीदृशं प्ररूपणं ? शुद्धं-पूर्वापरविरोधादिदोषरहितत्वान्निर्मलं, अनेन सम्यग्ज्ञानिनां उपादेयत्वमस्य शास्त्रस्य प्रकाशितं भवति। किंकृत्वा ? पणमिय--प्रणम्य नमस्कृत्य, कं ? जिणिंदवरणेमिचंदं-कर्मारातीन् जयतीति जिनः, अपूर्वकरणपरिणामप्रविष्टप्रथमोपशमसम्यक्त्वाभिमुखसातिशयमिथ्यादृष्टयः, त एव इंद्राः परमैश्वर्यभाजः कर्मनिर्जराफलत्वात्। सकलैश्वर्याणां जिनेंद्राणां वरः-श्रेष्ठः, असंख्यातगुणहानिनिर्जराधिपतित्वात्। नेमिः-चामुंडरायनिर्मितमहापूतचैत्यालयस्थो नेमितीर्थंकरः, चंद्रयति-आह्लादयति भव्यान्, प्रकाशयति समस्तानिति चंद्रः भवातापाज्ञानतमोविनाशकत्वात्, नेमिश्चासौ चंद्रश्च नेमिचंद्रः, जिनेंद्रवरश्चासौ नेमिचंद्रश्च जिनेंद्रवरनेमिचंद्रः, तं जिनेंद्रवरनेमिचंद्रं जिनेंद्रं, कथंभूतं ? सिद्धं-समस्तभुवनविख्यातं, पुनरपि कथंभूतं ? शुद्धं-द्रव्यभावात्मकघातिकर्मरहितं, तथापि क्षुधादिदोषसंभवं वदंतं प्रत्याह-अकलंकमितिन विद्यंते कलंकाः-क्षुधादयोष्टादशदोषा यस्यासावकलंकः तं, गुणरत्नभूषणोदयं-गुणाः-अनंतज्ञानादय एव रत्नभूषणानि गुणरत्नभूषणानि तेषां उदयः-प्रकर्षः परमकाष्ठा यस्मिन्नसौ गुणरत्नभूषणोदयः, तं, इत्यसाधारणविशेषणैरशेषातिशयप्रकाशिभिः अमीभिः अन्येषामाप्ततावार्तामप्यसहमानैः अस्यैव भगवतः परमात्मता परमकृतकृत्यता अस्मदादीनां अकृतकृत्यानां परमशरणता च प्रतिपादिता चेत्यवसेयं। अथवा—

प्रणम्य, कं ? जिनेंद्रवरनेमिचंद्रं सकलात्मप्रदेशनिविडनिबद्धघातिकर्ममेघपटलविघटनप्रकटीभूतानंतज्ञानादिनवकेवललब्धित्वात् जिनः, निरुपमानपरमैश्वर्यसंपन्नत्वादिंद्रः, जिनश्चासौ इंद्रश्च जिनेंद्रः स्वकीयावबोधप्रभाभिर्व्याप्तत्रिकालत्रिभुवनविस्तार इति यावत्। वश्च रश्च वरौ चतुर्विंशतिरित्यर्थः। निजाद्भुतपुण्यमाहात्म्येन नागेंद्रनरेंद्रदेवेंद्रवृंदं निजपादारविंदद्वंद्वे नमयति इति नेमिः। यदि वा तीर्थरथप्रवर्तनपरत्वात् नेमिरिव नेमिः तीर्थंकरसमुदायः। चंद्रयति-आह्लादयति लोकत्रयनेत्रकैरववनानीति चंद्रस्तथाविधरूपसौंदर्यसंपन्नोदयः यद्रूपसंपदातुलायां इंद्रादिसौंदर्यसारसर्वस्वमपि परमाणूयति। नेमिश्चासौ चंद्रश्च नेमिचंद्रः वरसंख्याविशिष्टो नेमिचंद्रो वरनेमिचंद्रः। जिनेंद्रश्चासौ वरनेमिचंद्रश्च जिनेंद्रवरनेमिचंद्रः, तं। वृषभादिवीरावसानतीर्थंकरनिकुरंबमित्यभिप्रायः। शेषविशेषणानां पूर्ववत्संबंधः। अथवा—

प्रणम्य--नमस्कृत्य, कं ? जिनेंद्रवरनेमिचंद्रं, जयति-भिनत्ति विदारयति कर्मभूभृन्निवहमिति जिनः "नामैकदेशो नाम्नि प्रवर्तते" इति न्यायेन इंद्रस्य-इंद्रभूतेः देवेंद्रस्य वा वरः-गुरुः इंद्रवरः श्रीवर्धमानस्वामीत्यर्थः। नयति अनश्वरपदं विनेयनिवहमिति नेमिः। विश्वतत्त्वप्रकाशकत्वाच्चंद्रवच्चंद्रः, जिनश्चासाविंद्रवरश्चासौ नेमिश्चासौ चंद्रश्चासौ जिनेंद्रवरनेमिचंद्रश्च, तं पूर्ववदन्यत्। अथवा—

प्रणम्य, कं ? सिद्धं-सिद्धः निष्ठितः निष्पन्नः कृतकृत्यः सिद्धसाध्य इति यावत्, तं सिद्धं-सिद्धपरमेष्ठिनं जात्यपेक्षयात्रैकवचनं तेन सर्वत्र सर्वदा सर्वप्रकारेण सिद्धानां अविशेषेण ग्रहणं। कथंभूतं ? शुद्धं-ज्ञानावरणाद्यष्टविधद्रव्यभावात्मककर्मरहितं। भूयः कथंभूतं ? जिनेंद्रवरनेमिचंद्रं-अनेकभवगहनविषमव्यसनप्रापणहेतून् कर्मारातीन् जयतीति जिनः, इदनात्-परमैश्वर्ययोगाद्, राजते-शोभत इति इंद्रः, यथावस्थितमर्थं नयति-परिच्छिनत्ति इति नेमिः-बोधः, वरः-परमोऽनंतरूपो नेमिर्यस्यासौ वरनेमिः, चंद्रयति-आह्लादते परमसुखमनुभवतीति चंद्रः, सर्वत्र जात्यपेक्षयैकवचनं।

जिनश्चासौ इंद्रश्चासौ वरनेमिश्चासौ चंद्रश्च जिनेंद्रवरनेमिचंद्रः, तं। पुनरपि कथंभूतं ? अकलंकं-न विद्यंते कलंकाः-परवादिपरिकल्पितदोषा यस्यासावकलंक', तं। पुनरपि कीदृशं ? गुणरत्नभूषणोदयं गुणाः-परमावगाढसम्यक्त्वादयोऽष्टसंख्याविशिष्टाः, त एव रत्नभूषणानि, तेषां उदयः अनुभवनं प्रकृष्टा वा प्राप्तिर्यस्यासौ गुणरत्नभूषणोदयः, तं। अथवा—

प्रणम्य, कं ? कं-आत्मानं, कथंभूतं ? अकलं न विद्यते कला-शरीरं यस्यासौ अकलः, तं। पुनरपि कथंभूतं ? सिद्धं-नित्यमनादिधनं। भूयः कथंभूतं ? शुद्धं-शुद्धनिश्चयनयविषयं। पुनरपि कीदृशं ? जिनेंद्रवरनेमिचंद्रं जिनानां-असंयतसम्यग्दृष्टिप्रमुखानां, इंद्रः-स्वामी परमाराध्यो जिनेंद्रः, वरः-सर्ववस्तुषु सारीभूतः, नेमिचंद्रो ज्ञानसुखस्वभावः, जिनेंद्रश्चासौ वरश्चासौ नेमिचंद्रश्च जिनेंद्रवरनेमिचंद्रः, तं। पुनरपि कथंभूतं ? गुणरत्नभूषणोदयं-गुणानां रत्नभूषणस्य-रत्नवत्पूज्यस्य सम्यक्त्वस्य उदयः-उत्पत्तिः, यस्मादसौ गुणरत्नभूषणोदयः, तं। अथवा—

प्रणम्य, कं? सिद्धं-सिद्धपरमेष्ठिसमूहं, कथंभूतं ? शुद्धं-दग्धाष्टकर्ममलं, पुनः कथंभूतं ( क प्रणम्य ) जिनेंद्रवरनेमिचद्रं-जिनेंद्रः-अर्हत्समूहः, वराः-गणधरचक्रधरेंद्रप्रभृतयो भव्यपुंडरीकाः, त एव नेमयः-नक्षत्राणि तेषां चंद्र इव चंद्रः वरनेमिचंद्रः जिनेंद्रश्चासौ वरनेमिचंद्रश्च जिनेंद्रवरनेमिचद्रस्तं-अर्हत्परमेश्वरनिवहमित्यर्थः। कथंभूतं ? अकलंकं-दूरीकृतत्रिषष्ठिकर्ममलकलंकं। न केवलं तं, गुणरत्नभूषणोदयं च-गुणरूपाणि रत्नानि सम्यग्दर्शनज्ञानचारित्राणि तान्येव भूषणानि-आभरणानि, तेषां उदयः-समुदयः, यस्यासौ गुणभूषणोदयः, तं, आचार्योपाध्यायसाधुवर्गमित्यर्थः। अथवा-

प्रणम्य, कं ? जीवस्य प्ररूपणं, किंविशिष्टं ? सिद्धं- सम्यग्गुरूपदेशपूर्वकत्वेन अखंडप्रवाहरूपेण आयातं। पुनरपि कथंभूतं ? शुद्धं-प्रमाणाविरुद्धार्थप्रतिपादकत्वेन पूर्वापरप्रत्यक्षानुमानागमलोकस्ववचनादिविरोधैः अबाधितं। भूयः कथंभूतं ? जिनेंद्रवरनेमिचंद्रं-जिनेंद्रः-सर्वज्ञः, वरः-कर्ता यस्यासौ जिनेंद्रवरः-सर्वज्ञप्रणीत इति यावत्। एतेन वक्तुःप्रामाण्याद्वचनस्य प्रामाण्यमुपदर्शितं। यथावस्थितमर्थं नयति-प्रतिपादयति द्योतयतीति नेमिः, चंद्रयति आह्लादयति विकाशयति शब्दार्थालंकाराभ्यां श्रोतुर्मनःकुमुदकुड्मलानीति चंद्रः, जिनेंद्रवरश्चासौ नेमिश्चासौ चद्रश्च जिनेंद्रवरनेमिचंद्रः, तं। पुनरपि किं विशिष्टं ? अकलंकं-दूरोत्सारितशब्दार्थविषयदोपकलंकं। पुनरपि कथंभूतं ? गुणरत्नानां-रत्नत्रयरूपाणां भूषाणानां उदयः-उत्पत्तिः-संपत्तिर्वा यस्मादस्मदादीनां असौ गुणरत्नभूषणोदयः तं। अथवा-

प्रणम्य, कं ? जिनेंद्रवरनेमिचंद्रं जिनेंद्रवरनेमिचंद्राचार्यं, कथंभूतं ? सिद्धं-प्रसिद्धं तात्कालिकविश्वशास्त्रनिष्पन्नं वा। पुनरपि किं विशिष्टं ? शुद्धं-पंचविंशतिमलरहितसम्यक्त्वं निरतिचारचारित्रं देशकुलजातिशुद्धं वा। भूयः किंभूतं ? अकलंकं विशुद्धमनोवाक्कायसंयुक्तं। पुनः कथंभूतं ? गुणरत्नभूषणोदयं गुणरत्नभूषणश्चामुंडरायः-तस्य उदयः-अभिवृद्धिः, यस्मात् असौ गुणरत्नभूषणोदयस्तमिति। एवं इष्टविशिष्टदेवतानमस्कारकरणलक्षणं परममंगलमंगीकृत्य अनंतरं प्रकृतजीवप्ररूपणस्य अधिकारान् निर्दिशति—

मं०प्र०—वोच्छ-वक्ष्याम्यहं-व्यक्तं कथयिष्यामि, किं ? परूवणं-प्ररूपण-प्ररूप्यते अस्मिन्ननेनेति वा प्ररूपणं शास्त्र, कस्य ? जीवस्स जीवस्य—आत्मनः, जीवस्वरूपप्रतिपादकं शास्त्रं व्यक्तं कथयिष्यामीत्यर्थः। कथंभूतं प्ररूपणं ? गुणरयणभूसणुदयं गुणरत्नभूषणोदयं गुणाः- सम्यग्दर्शनादय एव रत्नभूषणानि

यस्यासौ गुणरत्नभूषणश्चामुंडरायः, तस्मादुदयः—उत्पत्तिर्यस्य शास्त्रस्य तद्गुणरत्नभूषणोदयं, चामुंडरायप्रश्नवशादस्योत्पत्तिप्रसिद्धेः । अथ वा गुणा एव रत्नभूषणानि यस्मिन्नसौ गुणरत्नभूषणो मोक्षः तस्य उदयः—उत्पत्तिः यस्मात् शास्त्रात् तद्गुणरत्नभूषणोदयं, मोक्षकारणमिदं शास्त्रं न पुनर्विकथादिवद्बंधकारणं । अनेन बंधक-बंध्यमान-बंधस्वामित्व-बंधहेतु-बंधप्रकाराणां पंचानां सिद्धांतार्थानां मध्ये बंधकस्य जीवस्य प्रतिपादकमिदं शास्त्रं जीवस्थान—जीवकांडनामद्वयप्रख्यातमहं वक्ष्यामीति शास्त्रकारस्याभिप्रायः प्रदर्शितः । पुनरपि कथंभूत जीवस्य प्ररूपणं ? सिद्धं—पूर्वाचार्यपरंपराप्रसिद्धं, न स्वरुचिविरचितमित्यर्थः । अनेनाचार्यः स्वकर्तृतां परिहृत्यानुवादकत्वमाह । पुनरपि किं विशिष्टं सुद्धं—शुद्धं पूर्वापरविरोधादिदोषरहितत्वान्निर्मलं, अनेन सम्यग्ज्ञानिनामुपादेयत्वमस्य शास्त्रस्य प्रकाशितं भवति । किंकृत्वा ? पणमिय—प्रणम्य—प्रकर्षेण मनोवाक्कायशुद्धिविशेषेण नत्वा—सम्यगाराध्य । कं ? जिणिंदवरणेमिचंदं जिनेंद्रवरनेमिचंद्रं-अनेकविषम ( भव ) गहनदु.खप्रापणहेतून् कर्मारातीन् जयंति-निर्जरयंतीति जिनाः-अपूर्वकरणपरिणामप्रविष्टप्रथमोपशमसम्यक्त्वाभिमुखसातिशयमिथ्यादृष्ट्यादयः त एव इंद्राः-परमैश्वर्यभाजः कर्मनिर्जराफलत्वात्सकलैश्वर्याणां जिनेंद्राणां वरः—श्रेष्ठः, असंख्यातगुणमहानिर्जराधिपतित्वात्, नेमिः—चामुंडरायनिर्मितमहापूतचैत्यालयस्थो नेमितीर्थंकरः, चंद्रयति—आह्लादयति भव्यान् प्रकाशयति च समस्तार्थानिति चंद्रः, भवतापाज्ञानतमोविनाशकत्वात्, नेमिश्चासौ चंद्रश्चासौ नेमिचंद्रः, जिनेंद्रवरश्चासौ नेमिचंद्रश्चासौ जिनेंद्रवरनेमिचंद्र, तं जिनेंद्रवरनेमिचंद्रं । पंचपरमेष्ठिनां मध्येऽर्हत्परमेष्ठिनः प्रधानत्वात्प्रथमतो नमस्कारः कृतः । कथंभूतं तं ? सिद्धं- सिद्धिः—स्वात्मोपलब्धिरस्यास्तीति सिद्धस्तं, सिद्धं । अस्ति सर्वज्ञः सुनिश्चितासंभवद्बाधकप्रमाणत्वादित्यादिप्रमाणतो वा सिद्धं । पुनरपि कथंभूतं ? सुद्धं-शुद्धं- घातिकर्मचतुष्टयरूपद्रव्यमलरहितं । पुनरपि कथंभूतं तं ? अकलंकं—न विद्यंते कलंकाः—अज्ञानमिथ्यात्वादयो भावमलाः, यस्यासावकलंकः तं अकलंकं । अनेन विशेषणद्वयेन द्रव्यभावकर्मरहितत्वात्केवलज्ञानादिवरक्षायिकलब्धिसंपदर्हत्परमेष्ठिनो दर्शिता । अत एव 'मोक्षार्थिनामर्हत्परमेष्ठ्येव नमस्कारार्हः' इति सूचितं । पुनरपि कथंभूतं तं ? गुणरत्नभूषणोदयं—गुणा ज्ञानादय एव रत्नभूषणानि तेषामुदयः परमप्रकर्षो यस्मिन्नसौ गुणरत्नभूषणोदयस्तं । अनेन भगवदर्हत्परमेष्ठिगुणानां सकललोकोत्तरत्वं प्रदर्शितं ।

अथवा सिद्धं--निष्पन्नं, कं—परमात्मानं प्रणम्य सिद्धपरमेष्ठिने प्रणम्येत्यर्थः । कथंभूतं ? शुद्धं-द्रव्यभावकर्ममलरहितं । पुनरपि कथंभूतं ? अकलं--न विद्यते कला--सकलदुःखाकरशरीरत्रयं, यस्य सः, अकलः तं । पुनरपि कथंभूतं ? गुणरत्नभूषणोदयं—केवलज्ञानादिगुणमणिमयाभरणप्रकर्षवंतं । पुनरपि कथंभूतं ? जिनेंद्रवरनेमिचंद्रं—जिनानां कर्मनिर्जरावतामिंद्राः—स्वामिनः--विध्वस्तघातिकर्माणोऽर्हंतः, तेषां वरः--ध्येयतया श्रेष्ठः, जिनेंद्रवरः सिद्धपरमेष्ठिनो विध्वस्तघात्यघातिकर्मत्वे चार्हद्भ्योऽपि श्रेष्ठत्वसंभवात् । नयति सकलद्रव्यगुणपर्यायान् प्रतिक्षणं पूर्वाकारपरिहारोत्तराकारावाप्तिद्रव्याकारास्थितिपरिवृत्तिलक्षणं परिणाममिति नेमिः--कालचक्रधारा तस्याश्चंद्रः प्रकाशकः, सिद्धपरमेष्ठिनोऽपि केवलज्ञानदर्शनोपयोगस्य कालद्रव्यकलितसकलद्रव्यगुणपर्यायप्रकाशकत्वप्रसिद्धेः । जिनेंद्रवरश्चासौ नेमिचंद्रश्चासौ जिनेंद्रवरनेमिचंद्रस्तं ।

अथवा अकलंकं--मिथ्यात्वादिदोषरहितं गणधराद्याचार्योपाध्यायसाधुपरमेष्ठिसमूहं प्रणम्य, कथंभूतं ? सिद्धं—पंचमकाले श्रीवर्धमानभट्टारकतीर्थप्रभावकत्वेन

१ धुरा इत्यपि (क) पुस्तके पाठ. ।

प्रसिद्धं, पुनरपि कथंभूतं ? शुद्धं–निर्मलं -निर्मलनिश्चयव्यवहाररत्नत्रयाराधकत्वेन परमपावनमित्यर्थः । शुद्धत्वाकलंकत्वविशेषणयोर्द्रव्यभावमलरहितत्वेन भेदोत्राऽपि ज्ञातव्यः । पुनरपि कथंभूतं ? जिनेंद्रवरनेमिचंद्रं--जिनेंद्रः--भगवदर्हत्परमेष्ठी, वरः--भर्ता, यस्य स जिनेंद्रवरः । अंतर्भावितसकलद्रव्यगुणपर्यायवर्तना कालचक्रधारा नेमिः, तस्याश्चंद्रः प्रकाशको नेमिचंद्रः, गणधरादिसाधुत्रयज्ञानोपयोगस्य प्रत्यक्षं परोक्षं वा कालद्रव्यसमाकलितसकलद्रव्यगुणपर्यायप्रकाशकत्वप्रसिद्धेः । जिनेंद्रवरश्चासौ नेमिचंद्रश्चासौ जिनेंद्रवरनेमिचंद्रस्तं । अत्र मोक्षमार्गोपदेशलक्षणपरमोपकारकर्तृत्वेनार्हत्परमेष्ठ्येव मोक्षार्थिनां परमगुरुरिति प्रथमतस्तन्नमस्कारो युक्तः । श्रीमद्गोतमगणधरपादैरपि वेदनाखंडस्यादौ 'णमोजिणाणं' इत्यादिना भूतबलिभट्टारकेणमहाकर्मप्रकृतिप्राभृतस्य प्रथमसिद्धांतस्यादौ 'णमो अरिहंताणं' इत्यादिना गृद्धपिच्छाचार्येणापि तत्त्वार्थशास्त्रस्यादौ 'मोक्षमार्गस्य नेतारं' इत्यादिना अर्हन्नमस्कारस्यैव परममंगलतया प्रथममुक्तत्वात् । लोकेऽपि 'नहि कृतमुपकारं साधवो विस्मरंति' इत्युपकारस्यैव प्राधान्येनाश्रयणात् । परीक्षकव्यवहारेऽपि—

"अभिमतफलसिद्धेरभ्युपायः सुबोधः प्रभवति स च शास्त्रात्तस्य चोत्पत्तिराप्तात् ।
इति भवति स पूज्यस्तत्प्रसादात्प्रबुद्धैर्नहि कृतमुपकारं साधवो विस्मरंति ॥"

इति भगवन्नर्हन्नमस्कारस्यैव मुख्यतया दर्शनात् ।

अथवा चामुंडरायस्य जीवप्ररूपणशास्त्रकर्तृत्वमाश्रित्य मंगलसूत्रं व्याख्यायते । तद्यथा–जीवस्य प्ररूपणं वक्ष्यामि--अहं चामुंडरायार्यः कर्ता, किंकृत्वा ? प्रणम्य, कं जिनेंद्रवरनेमिचंद्रं -जिनेंद्राः वराः- भर्तारः, यस्यासौ जिनेंद्रवरः । जिनानां–कर्मनिर्जरावतां, इंद्रौ जिनेंद्रौ--अर्हत्सिद्धौ अथवा जिनः–इंद्रः- स्वामी येषां ते जिनेंद्राः–आचार्योपाध्यायसाधवः, एवं जिनेंद्रवरः पंचपरमेष्ठ्याराधक इत्यर्थः । जिनेंद्रवरश्चासौ नेमिचंद्रश्चासौ जिनेंद्रवरनेमिचंद्रः तं, पंचपरमेष्ठ्याराधनासमुद्भूतदर्शनविशुद्ध्यादिगुणसंपन्नं स्वस्य परमगुरु नेमिचंद्राचार्यं प्रणम्येत्यर्थः । कथंभूतं ? सिद्धं--तात्कालिकस्वपरसमयश्रुताधारत्वेन प्रसिद्धं पुनरपि कथंभूतं ? शुद्धं--दर्शनमोहादिद्रव्यमलरहित । पुनरपि कथंभूतं ? अकलंकं -मिथ्यात्वादिभावमलरहितं । पुनरपि कथंभूतं ? गुणरत्नभूषणोदयं--गुणरत्नभूषणस्य–चामुंडरायस्य, उदयः--अभ्युदयः यस्मादसौ गुणरत्नभूषणोदयः, तं । अस्मिन् पक्षेऽप्यर्हदादिनमस्काराः पूर्ववत् ज्ञातव्याः । अथवा स्वगुरुनमस्कारेणैव परमेष्ठिनमस्कारः कृतः स्वगुरोरेव परमेष्ठित्वाभ्युपगमात् । ननु मलं गालयतीति, मंग पुण्यं लात्यादत्ते अस्मादिति वा मंगलमिति निरुक्तिसिद्धमलगालनपुण्यादानलक्षणमंगलप्रयोजनस्य सिद्धिः परमेष्ठिनमस्कारात्कथमिति चेत् ? उच्यते, "नेष्टं विहंतुं शुभभावभग्नरसप्रकर्षः प्रभुरंतरायः । तत्कामचारेण गुणानुरागान्नुत्यादिरिष्टार्थकृदर्हदादेः ।" इति वचनेन परमजिनेंद्रगुणस्तोत्रादेर्विघ्नलक्षणमलविध्वंसनस्य मंगलफलस्य अर्हदादिगुणानुरागरूपविशुद्धिविशेषानुगृहीततद्गुणस्तोत्रादेरभिनवपुण्यास्रवरूपमंगादानस्य च मंगलफलस्य सुप्रसिद्धत्वात् । अस्य शास्त्रस्य निमित्तं चामुंडरायस्य प्रश्नः । हेतुः प्रयोजनं गुरुशिष्यपरंपरोपदेशः । परिमाणं–अर्थतोऽनंतरूपं, शब्दतो गाथासूत्राणां पंचविंशत्युत्तरा सप्तशती । नाम जीवप्ररूपणं जीवकांडं जीवस्थानमिति वा । कर्ता पुनः--मूलतंत्रकर्ता, उत्तरतंत्रकर्ता, उत्तरोत्तरतंत्रकर्ता चेति त्रिविधः । तत्र मूलतंत्रकर्ता सर्वभाषात्मकदिव्यध्वनिप्रवर्तकश्रीवर्धमानतीर्थंकरः । उत्तरतंत्रकर्ता ज्ञानर्द्धिसंपन्नो द्वादशांगांगबाह्यश्रुतस्कंधप्रवर्तको–गोतमगणधरदेवः । उत्तरोत्तरतंत्रकर्ता–जीवकांडशास्त्रकारो नेमिचंद्रसैद्धांतिकचक्रवर्ती जिनेंद्रवरनेमिचंद्र-

मित्यनेन विशेषणेन सूचितः । एवं मंगलादिषडधिकारसूचनपुरस्सरं जीवप्ररूपणप्रतिज्ञासूत्रं संक्षेपेण व्याख्यातं ॥ १ ॥ अथ परमेष्ठिनमस्काररूपमंगलपूर्वकं जीवस्वरूपप्ररूपणप्रतिज्ञासूत्रमुक्त्वा मध्यमरुचिशिष्यापेक्षया जीवप्ररूपणभेदानाह—

स० चं०—अहं वक्ष्यामि अहं कहिए मैं जु हौं ग्रंथकर्ता सो वक्ष्यामि कहिये कहौंगा करौंगा, किं ?-किसहि करौंगा ? प्ररूपणं कहिये व्याख्यान अथवा अर्थकौं प्ररूपै वा अर्थ याकरि प्ररूपिये ऐसा जु ग्रंथ ताहि करौंगा। कस्य प्ररूपणं ? किसका प्ररूपण कहौंगा ? जीवस्य कहिये च्यारि प्राणनिकरि जीवै है जीवैगा जीया ऐसा जीव जो आत्मा तिस जीवके भेदका प्रतिपादन करणहारा शास्त्र मैं कहौंगा ऐसी प्रतिज्ञा करी। इस प्रतिज्ञाकरि इस शास्त्रकै संबंधाभिधेय शक्यानुष्ठान इष्टप्रयोजनपना है। तातैं बुद्धिवंतनिकरि आदर करना योग्य कह्या है। तहां जैसा संबंध होइ तैसा ही जहां अर्थ होइ सो संबंधाभिधेय कहिये। बहुरि जाके अर्थके आचरण करनेकी सामर्थ्य होइ सो शक्यानुष्ठान कहिये। बहुरि जो हितकारी प्रयोजनलिए होइ सो इष्टप्रयोजन कहिये। कथंभूतं प्ररूपणं ? जाकौं कहौंगा सो कैसा है प्ररूपण ? गुणरत्नभूषणोदयं—गुण जे सम्यग्दर्शनादिक तेई भये रत्न सोई है आभूषण जाकै ऐसा जो गुणरत्नभूषण चामुंडराय तिसतैं है उदय कहिये उत्पत्ति जाकी ऐसा शास्त्र है जातैं चामुंडरायके प्रश्नकें वशतैं याकी उत्पत्ति प्रसिद्ध है अथवा गुणरूप जो रत्न सो भूषयति कहिये शोभै जिहिविषै ऐसा गुणरत्नभूषण मोक्ष ताकी है उदय कहिये उत्पत्ति जातैं ऐसा शास्त्र है। भावार्थ—यहु शास्त्र मोक्षका कारण है। बहुरि विकथादिरूप बंधका कारण नाहीं है। इस विशेषणकरि बंधक १ बंध्यमान २ बंधस्वामी ३ बंधहेतु ४ बंधभेद ५ ये पंच सिद्धांतके अर्थ हैं। तहां कर्मबंधका कर्ता संसारी जीव सो बंधक बहुरि मूल उत्तर प्रकृतिबंध सो बंध्यमान, बहुरि यथासंभव बंधका सद्भावलीये गुणस्थानादिक सो बंधस्वामी, बहुरि मिथ्यात्वादि आस्रव सो बंधहेतु, बहुरि प्रकृति स्थिति आदि बंधभेद इनका निरूपण है तातैं गोम्मटसारका द्वितीयनाम पंचसंग्रह है तिहिविषैं बंधक जो जीव ताका प्रतिपादन करणहारा यहु शास्त्र जीवस्थान वा जीवकांड इनि दोय नामानिकरि विख्यात ताहि मैं कहौंगा। ऐसा शास्त्रके कर्ताका अभिप्राय यहु विशेषण दिखावै है। बहुरि कथंभूतं प्ररूपणं ? कैसा है प्ररूपण ?

सिद्धं कहिये पूर्वाचार्यनिकी परंपरायकरि प्रसिद्ध है अपनी रुचिकरि नाहीं रचनारूप किया है। इस विशेषणकरि आचार्य अपना कर्तापनाकौं छोडि पूर्व आचार्यादिकनिका अनुसारकों कहे हैं। पुनः किंविशिष्टं प्ररूपणं ? वहुरि कैसा है प्ररूपण ? शुद्धं कहिये पूर्वापर विरोधकों आदि देकरि दोषनिकरि रहित है तातैं निर्मल है। इस विविशेषणकरि सम्यग्ज्ञानी जीवनिके उपादेयपना इस शास्त्रका प्रकाशित कीया है। किंकृत्य ? कहाकरि ? प्रणम्य कहिये प्रकर्षपने नमस्कारकरि प्ररूपण करौ हौं। किं-किसहि ? जिनेंद्रवरनेमिचंद्रं-कर्मरूपी वैरीनिकौं जीतै सो जिन। अपूर्वकरण परिणामकौं प्राप्त प्रथमोपशमसम्यक्त्वकौं सन्मुख सातिशयमिथ्यादृष्टि ते जिन कहिये। तेई भए इंद्र कर्मनिर्जरारूप ऐश्वर्य ताका भोक्ताकौं आदि देकरि सर्वजिनेंद्रनिविषैं वर कहिये श्रेष्ठ असंख्यातगुणी महानिर्जराका स्वामी ऐसा चामुंडरायकरि निर्मापित महापूत चैत्यालयविषैं विराजमान नेमिनामा तीर्थंकर देव सोई भव्यजीवनिकौं चंद्रयति कहिये आह्लाद करै वा समस्त वस्तुनिकौं प्रकाशै अथवा संसार आताप अर अज्ञान अंधकारका नाश करनहारा चंद्र ऐसा जिनेंद्रवरनेमिचंद्र, कैसा है ? अकलंकं कहिए कलंकरहित, ताकौं नमस्कार करि जीवका प्ररूपण मैं कहौंगा। अथवा अन्य अर्थ करैं हैं–कं प्रणम्य ? किसहि नमस्कारकरि जीवका प्ररूपण करौं हौं ? जिनेंद्रवरनेमिचंद्रं नेमिचंद्रनामा जिनेंद्रतीर्थंकर देव ताहि नमस्कारकरि जीवकी प्ररूपणा करौं हौं। कैसा है सो ? सिद्धं कहिये समस्तलोकविषैं विख्यात है। वहुरि कैसा है ? शुद्धं कहिये द्रव्यभावस्वरूपघातिया कर्मनिकरि रहित है। तथापि ताकौं कोई संशयी क्षुधादिदोषका संभव कहै है तिस प्रति कहैं हैं–कैसा है सो ? अकलंक कहिये नाहीं विद्यमान है कलंक कहिये क्षुधादिक अठारहदोष जाके ऐसा है। वहुरि कैसा है ? गुणरत्नभूषणोदयं–गुण जे अनंत ज्ञानादिक तेई भए रत्नके आभूषण तिनिका है उदय कहिये उत्कृष्टपना जाविषैं ऐसा है इसप्रकार अन्यविषैं न पाईए ऐसे असाधारण विशेषण समस्त अतिशयनिके प्रकाशक अन्यके आप्तपनैंकी वार्ताकौं भी जे सहैं नाहीं तिनि इनि विशेषणनिकरि इस ही भगवानके परम आप्तपना परम कृतकृत्यपना हम आदिदै जे अकृतकृत्य हैं तिनकें शरणपना प्रतिपादन किया है ऐसा जानना।

अथवा अन्य अर्थ कहै हैं--कं प्रणम्य ? किसहि नमस्कार करि जीवका प्रतिपादन करौं हौ ? जिनेंद्रवर-नेमिचंद्रं-सकल आत्माके प्रदशनिविषैं सघन बंधे जे घाति कर्मरूप मेघपटल तिनके विघटनतैं प्रकटीभूत भए, अनंतज्ञानादिक नव केवल लब्धिपनां तातैं जिन कहिये बहुरि अनौपम परम ईश्वेरताकरि संपूर्णपनां होनेकरि इंद्र कहिये। जिन सोई जो इंद्र सो जिनेंद्र अपने ज्ञानके प्रभाव करि व्याप्त भया है तीनकाल संबंधी तीन लोकका विस्तार जाकैं ऐसा जिनेंद्र, वर कहिये अक्षर संख्याकरि चौवीस, कैसैं 'कटपयपुरस्थवर्णैः' इत्यादि सूत्र अपेक्षा य र ल व विषैं वकार चौथा अक्षर ताका च्यारिका अंक, अर रकार दूसरा अक्षर ताका दोयका अंक, अंकनिकी वाई तरफसे गति है ऐसैं वरशब्दकरि चौवीसका अर्थ भया। बहुरि अपने अद्भुत पुण्यके माहात्म्यतैं नागेंद्र नरेंद्र देवेंद्रका समूहकौं अपने चरणकमलविषैं नमावे सो नेमि कहिये। अथवा धर्मतीर्थरूपी रथके चलावने विषैं सावधान है तातैं जैसैं रथके पहेकैं नेमि धुरी हो है तैसैं सो तीर्थंकरनिका समुदाय धर्मरथविषैं नेमिं कहिये है। बहुरि चंद्रयति कहिये तीनलोकके नेत्ररूप चंद्रवंशी कमलवननिकौं आह्लादित करै सौ चंद्र कहिये अथवा जाकै तैसा रूपकी संपदाका संपूर्ण उदय होय है जिसरूप संपदाके तौलनके विषैं इंद्रादिकनिकी सुंदरताकी समीचीन सर्वस्व भी परमाणू समान हलका हो है सो जो नेमि सोई चंद्र सो नेमिचंद्र वर-चौवीस संख्या लिए जो नेमिचंद्र सो वरनेमिचंद्र जो जिनेंद्र सोई वरनेमिचंद्र सो जिनेंद्रवरनेमिचंद्र कहिए वृषभादि वर्धमानपर्यंत तीर्थंकरनिका समुदाय ताहि नमस्कार करि जीवका प्ररूपण कहौ हौं ऐसा अभिप्राय है, अवशेष सिद्ध आदि विशेषणनिका पूर्वोक्त प्रकार संबंध जानना।

अथ वा अन्य अर्थ कहै हैं--प्रणम्य कहिये नमस्कार करि, किं? किसहि? जिनेंद्रवरनेमिचंद्रं जयति कहिये जीतै भेदै विदारै कर्मपर्वतसमूहकौं सो जिन कहिए। बहुरि नामका एकदेश संपूर्णनामविषैं प्रवर्तै है इस न्यायकरि इंद्र कहिये इंद्रभूति ब्राह्मण ताका वा इंद्र कहिये देवेंद्र ताका वर कहिए गुरु ऐसा इंद्रवर श्रीवर्धमानस्वामी,

१ ख पुस्तकमें अन्य अर्थकौं यह भी पाठ है। २ ख पुस्तकमें ऐश्वर्यताकरि यह भी पाठ है। ३ ख पुस्तकमें कमल तिनिकौं यह पाठ है।

५

बहुरि 'नयति' कहिए अविनश्वर पदकों प्राप्तकरै शिष्य समूहकौं सो नेमि कहिये बहुरि समस्त तत्त्वनिकौं प्रकाशै है चंद्रवत् तातैं चंद्र कहिये। जिन सोई इंद्रवर सोई नेमि सोई चंद्र ऐसा जिनेंद्रवरनेमिचंद्र वर्धमानस्वामी ताहि नमस्कारकरि जीवका प्ररूपण करौ हौं। अन्य संबंध पूर्वोक्त प्रकार जानना।

अथवा अन्य अर्थ कहै हैं-प्रणम्य नमस्कार करि। कं? किसहि सिद्धं कहिये सिद्ध भया वा निष्ठित संपूर्ण भया वा निष्पन्न जो होना था सो हूवा वा कृतकृत्य जो करता था सो जानै कीया वा सिद्धसाध्य सिद्ध भया है साध्य जाकैं ऐसा सिद्धपरमेष्ठी बहुत हैं तथापि जाति एक है तातैं द्वितीया विभक्तिका एकवचन कह्या तिह करि सर्वक्षेत्रविषैं सर्वकालविषैं सर्वप्रकारकरि सिद्धनिका सामान्यपनैं करि ग्रहण करना सो सर्वसिद्धसमूहकौं नमस्कार करि जीवका प्ररूपण करौं हौं ऐसा अर्थ जानना। सो कैसा है? शुद्धं कहिये ज्ञानावरणादि आठ प्रकार द्रव्यभाव स्वरूप कर्मकरि रहित है। बहुरि कैसा है? जिनेंद्रवरनेमिचंद्र-अनेक संसारवन संबंधी विषम कष्ट दैनेकौं कारण कर्म वैरी ताहि जीतैं सो जिन बहुरि इंदन कहिये परम ईश्वरताका योग ताकरि राजन कहिए शोभै सो इंद्र बहुरि यथार्थ पदार्थनिकौं नयति कहिये जानै सो नेमि कहिये ज्ञान, वर कहिए उत्कृष्ट अनंतरूप जाके प.इए सो वरनेमि बहुरि चंद्रयति कहिए आह्लादरूप होइ परम सुखका अनुभव सो चंद्र इहां सर्वत्र जाति अपेक्षा एकवचन जानना सो जो जिन सोई इंद्र सोई वरनेमि सोई चंद्र ऐसा जिनेंद्रवरनेमिचंद्र सिद्ध है। बहुरि कैसा है? अकलंकं कहिए नाही विद्यमान है कलंक कहिए अन्यमतीनिकरि कल्पना कीया दोष जाकै ऐसा है। बहुरि कैसा है? गुणरत्नभूषणोदयं गुण कहिए परमावगाढ सम्यक्त्वादि आठ गुण तेई भए रत्न आभूषण तिनिका है उदय कहिए अनुभवन वा उत्कृष्ट प्राप्ति जाकैं ऐसा है।

अथवा अन्य अर्थ कहैं हैं-प्रणम्य नमस्कारकरि कं? किसहि? कं कहिए आत्मद्रव्य ताहि नमस्कारकरि जीवका प्ररूपण करौं है। कैसा है? अकलं कहिये नाही विद्यमान है कल कहिये शरीर जाके ऐसा है। बहुरि कैसा है? सिद्धं कहिए नित्य अनादि निधन है। बहुरि कैसा है? शुद्धं कहिये शुद्धनिश्चयनयका गोचर है। बहुरि कैसा है?

जिनेंद्रवरनेमिचंद्रं-जिन जे असंयत सम्यग्दृष्टी आदि तिनका इंद्र कहिये स्वामी है, परम आराधने योग्य है। बहुरि वर कहिये समस्तपदार्थनिविषैं सारभूत है। बहुरि नेमिचंद्र कहिये ज्ञान सुखस्वभावकौं धरे है। सो जिनेंद्र सोई वर सोई नेमिचंद्र ऐसा जिनेंद्रवरनेमिचंद्र आत्मा है। बहुरि कैसा है ? गुणरत्नभूषणोदयं गुणानां कहिये समस्त गुणनिविषैं रत्न कहिये रत्नवत् पूज्य प्रधान ऐसा जो सम्यक्त्वगुण ताकी है उदय कहिये उत्पत्ति जाकैं वा जातैं आत्मानुभवतैं सम्यक्त्व हो है तातैं आत्मा गुणरत्नभूषणोदयं है।

अथवा अन्य अर्थ कहे हैं-प्रणम्य नमस्कारकरि, कं ? किसहि ? सिद्धं कहिये सिद्ध परमेष्ठीनिके समूहकौं, सो कैसा है ? शुद्धं कहिये दग्ध किए हैं आठ कर्ममूल जिहि। बहुरि किसहि ? जिनेंद्रवरनेमिचंद्रं जिनेंद्र कहिये अर्हंत परमेष्ठीनिका समूह सो वराः कहिये उत्कृष्ट जीव गणधर चक्रवर्ती इंद्र धरणेंद्रादिक भव्यप्रधान तेई भए नेमि कहिये नक्षत्र तिनिविषैं चंद्र कहिये चंद्रमावत् प्रधान ऐसा जिनेंद्र सोई वरनेमिचंद्र ताहि अर्हत्परमेश्वरनिके समूहकौं, सो कैसा है ? अकलंकं कहिए दूरकीया है तरेसठिकर्मप्रकृतिरूपमलकलंक जानै ऐसा है। केवल तिसहीको नमस्कार करि नाही, बहुरि गुणरत्नभूषणोदयं गुणरूपी रतन सम्यग्दर्शन ज्ञान चारित्र तेई भए भूषण कहिए आभूषण आभरण तिनिका है उदय कहिए समुदाय जाके ऐसा आचार्य उपाध्याय साधुसमूह ताकौं ऐसैं सिद्ध अरहंत आचार्य उपाध्याय साधुरूप पंचपरमेष्ठीनिकौं नमस्कार करि जीवका प्ररूपण करौं हौं।

अथवा अन्य अर्थ कहै हैं—प्रणम्य कहिये नमस्कार करि कं कहिए किसहि, जीवस्य प्ररूपणं कहिए जीवनिका निरूपण वा ग्रंथ ताहि नमस्कार करि कहौं हौ। सो कैसा है ? सिद्धं कहिए सम्यक् गुरुनिका उपदेश पूर्वकपनैं करि अखंडित प्रवाहरूपकरि अनादितैं चल्या आया है। बहुरि कैसा है ? शुद्धं कहिए प्रमाणतैं अविरोधी अर्थका प्रतिपादकपनैं करि पूर्वापरतैं प्रत्यक्षतैं अनुमानतैं आगमतैं लोकतैं निजवचनादितैं विरोध तिनिकरि अखंडित है। बहुरि कैसा है 'जिनेंद्रवरनेमिचंद्रं-जिनेंद्र कहिये सर्वज्ञ सो है वर कहिए कर्ता जाका ऐसा जिनेंद्रवर कहिए सर्वज्ञप्रणीत है। इस विशेषणकरि वक्ताके प्रमाणपनातैं वचनका प्रमाणपना दिखाया।

बहुरि यथावस्थित अर्थकौं नयति कहिए प्रतिपादन करै प्रकासै सो नेमि कहिए। बहुरि चंद्रयति कहिए आह्लादित करै विकासै शब्द अर्थ अलंकारनिकरि श्रोतानिके मनरूपी गद्रू (कमल) लनिकौं सो चंद्र कहिए जिनेंद्रवर सोई नेमि सोई चंद्र ऐसा जिनेंद्रवरनेमिचंद्र प्ररूपण है। बहुरि कैसा है ? अकलंकं कहिए दूरहीतैं छोड्या है शब्द अर अर्थ गोचर दोषकलंक जिहि ऐसा है। बहुरि कैसा है ? गुणरत्नभूषणोदयं--गुणरत्न जे रत्नत्रयरूप भूषण कहिये आभूषण तिनकी है उदय कहिए उत्पत्ति वा प्राप्ति हम आदि जीवनिकै जातैं ऐसा गुणरत्नभूषण प्ररूपण है।

अथवा अन्य अर्थ कहै हैं—चामुंडरायके जीवप्ररूपणशास्त्रका कर्तापनैका आश्रयकरि मंगलसूत्र व्याख्यान करिए है। भावार्थ इस गोम्मटसारका मूलगाथाबंधग्रंथकर्ता नेमिचंद्र आचार्य है ताकी टीका कर्णाटकदेशभाषाकरि चामुंडराय करी है ताकै अनुसारि केशवनामा ब्रह्मचारी संस्कृतटीका करी है सो चामुंडरायकी अपेक्षा इससूत्रका अर्थ करिए है—अहं जीवस्य प्ररूपणं वक्ष्यामि मैं जु हौं चामुंडराय सो जीवका प्ररूपण रूप ग्रंथका टिप्पण ताहि कहौंगा। किं कृत्वा? कहाकरि ? प्रणम्य नमस्कार करि, कं ? किसहि ? जिनेंद्रवरनेमिचंद्र जिनेंद्र है वर कहिए भर्ता स्वामी जाका सो जिनेंद्रवर इहां जिन कहिये कर्मनिर्जरासंयुक्त जीव तिनि विषै इंद्र कहिए स्वामी अर्हंत सिद्ध, बहुरि जिन हैं इंद्र कहिए स्वामी जिनिका ऐसे आचार्य उपाध्याय साधु ऐसैं जिनेंद्र शब्दकरि पंच परमेष्ठी आए तिनिका आराधनतैं उपजैं जे सम्यग्दर्शनादिक गुण जिंनिकरि संयुक्त अपना परमगुरु नेमिचंद्र आचार्य ताहि नमस्कारकरि जीव प्ररूपणा कहौंगा। सो कैसा है ? सिद्ध कहिये प्रसिद्ध है वा वर्तमान कालविषै प्रवृत्तिरूप समस्त शास्त्रनिमैं निष्पन्न है। बहुरि कैसा है ? शुद्धं कहिये पचीस मलरहित चारित्र जाकै पाइये है वा देश कुल जातिकर शुद्ध है। बहुरि कैसा है अकलंकं कहिए विशुद्ध मन वचन काय संयुक्त है। बहुरि कैसा है ? गुणरत्नभूषणोदयं-गुणरत्नभूषण कहिए चामुंडराय राजा ताकै है उदय कहिये ज्ञानादिककी वृद्धि जातैं ऐसा नेमिचंद्र आचार्य है। ऐसैं इष्टविशेषरूप देवतानिकौं नमस्कार करना है लक्षण जाका ऐसा परम मंगलकौं अंगीकार करि याकै अनंतर अधिकारभूत जीवप्ररूपणके अधिकारनिकौं निर्देश करै हैं ॥ १ ॥

## गुणजीवा पज्जत्ती पाणा सण्णा य मग्गणाओ य।
## उबओगोवि य कमसो वीसं तु परूबणा भणिदा ॥ २ ॥

गुणजीवाः पर्याप्तयः प्राणाः संज्ञाश्च मार्गणाश्च।
उपयोगोऽपि च क्रमशः विंशतिस्तु प्ररूपणा भणिताः ॥ २ ॥

जी० प्र०—अत्र चतुर्दश गुणस्थानानि, अष्टानवतिर्जीवसमासाः, षट् पर्याप्तयः, दश प्राणाः, चतस्रः संज्ञाः, चतस्रो गतिमार्गणाः, पंचेंद्रियमार्गणाः, षट् कायमार्गणाः, पंचदश योगमार्गणाः, तिस्रः वेदमार्गणाः, चतस्रः कषायमार्गणाः, अष्टौ ज्ञानमार्गणाः, सप्त संयममार्गणाः, चतस्रः दर्शनमार्गणाः, षट् लेश्यामार्गणाः, द्वे भव्यमार्गणे, षट् सम्यक्त्वमार्गणाः, द्वे संज्ञिमार्गणे, द्वे आहारकमार्गणे, द्वे उपयोगमार्गणे इत्येताः जीवप्ररूपणा विंशतिर्भणिताः। अत्र गुण्यते-परिच्छिद्यते द्रव्याद् द्रव्यांतरमनेनेति गुणः। कर्मोपाधिसापेक्षज्ञानदर्शनोपयोगचैतन्यप्राणेन जीवंतीति जीवाः। ते जीवाः सम्यगासते एष्विति जीवसमासाः। परि-समंतात्, आप्तिः पर्याप्तिः शक्तिनिष्पत्तिरित्यर्थः। जीवंति-प्राणंति जीवितव्यव्यवहारयोग्या भवंति जीवा यैस्ते प्राणाः। आगमप्रसिद्धा वांछा संज्ञा अभिलाष इति यावत्। यकाभिः यासु वा जीवा मृग्यंते ता मार्गणाः, मार्गयिता भव्यपुंडरीकस्तत्त्वार्थश्रद्धालुरित्यर्थः, मृग्याः चतुर्दशमार्गणाविशिष्टात्मानः। मृग्यस्य कारणतां अधिकरणतां वा प्राप्ता गत्यादयः मार्गणाः। मार्गणोपायो ज्ञानदर्शनसामान्यमुपयोगः। एतासां प्ररूपणानां साधारणार्थप्रतिपादनमुक्तं ॥ २ ॥ अथ संग्रहनयापेक्षया प्ररूपणाद्वैविध्यं मनसि धृत्वा गुणस्थानमार्गणास्थानप्ररूपणयोः संज्ञांतरमाह—

मं० प्र०—गुणश्च जीवश्च गुणजीवौ इति गुणस्थानजीवसमासलक्षणे द्वे प्ररूपणे, पर्याप्तिरिति तृतीया प्ररूपणा, प्राणा इति चतुर्थी प्ररूपणा, अत्र प्राणशब्दस्य एकवचनांतप्रयोगाभावात् बहुवचनांतनिर्देशः, न प्ररूपणाबहुत्वापेक्षः। संज्ञा चेति पंचमी प्ररूपणा, चशब्दः पंचानां प्ररूपणानां समुच्चयार्थः। मार्गणाश्चेति चतुर्दशप्ररूपणाः, तथैव गतींद्रियादिचतुर्दशभेदेन मार्गणास्थानानां सविस्तरं वक्ष्यमाणत्वात्। अत्रतनचशब्दोऽपि पूर्वप्ररूपणाभिः सह एतासां चतुर्दशमार्गणास्थानाख्यप्ररूपणानां समुच्चयार्थः। एवमेकोनविंशतिप्ररूपणा उद्दिष्टा। उपयोगोऽपि चेति विंशतितमा प्ररूपणा। अत्र अपिचेत्यव्ययद्वयं मिलितमेव पूर्वप्ररूपणाभिः सह अस्याः प्ररूपणायाः समुच्चयार्थं तथा बहुलं प्रयोगदर्शनात्। एवं विंशतिसंख्यागुणस्थानादयः प्ररूपणाः क्रमशः भगवदर्हद्गणधरशिष्यप्रशिष्यादिगुरुपर्वागतया परिपाट्या अनुक्रमेण भणिताः। परमागमे पूर्वाचार्यैः प्रतिपादिताः। अनेन स्वकर्तृत्वं परिहृत्य ता एव मध्यमरुचिशिष्यापेक्षया संक्षिप्य वक्ष्यामीति भव्यजनानुग्रहो दृश्यते। तुशब्देन सामान्येन एका प्ररूपणा विशेषेण विंशतिः प्ररूपणाः इति विभागो लक्ष्यते। गुणादिशब्दानां निरुक्त्यर्थादयस्तत्तत्प्रकरणेष्वाचार्येण स्वयमेव वक्ष्यंते इति हास्माभिर्नोच्यते ॥ २ ॥ अथ संक्षेपरुचिशिष्यापेक्षया प्ररूपणाद्विप्रकारप्रदर्शनार्थमाह—

स० चं०—इहां चौदह गुणस्थान अठ्याणवै जीवसमास छह पर्याप्ति दश प्राण च्यारि संज्ञा मार्गणाविषै च्यारि गतिमार्गणा, पांच इंद्रिय मार्गणा, छह कायमार्गणा पंद्रह योगमार्गणा, तीन वेदमार्गणा, च्यारि कषायमार्गणा, आठ ज्ञानमार्गणा, सात संयममार्गणा, च्यारि दर्शनमार्गणा, छह लेश्यामार्गणा, दोय भव्यमार्गणा, छह सम्यक्त्वमार्गणा, दोय संज्ञिमार्गणा, दोय आहारमार्गणा, दोय उपयोग ऐसैं ये जीवप्ररूपणा वीस कहीं हैं। इहां निरुक्ति कहिये है- गुण्यते कहिये जाणिये द्रव्यतैं द्रव्यांतरकौं याकरि सो गुण कहिये बहुरि कर्म उपाधिकी अपेक्षासहित ज्ञानदर्शन उपयोगरूप चैतन्यप्राणकरि जीवै हैं ते जीव सम्यक् प्रकार आसते कहिये स्थितिरूप होंइ इनि विषैं ते जीवसमास है। बहुरि परि कहिये समंततातैं आप्ति कहिये प्राप्ति सो पर्याप्ति है। शक्तिकी निष्पन्नताका होना सो पर्याप्ति जानना। बहुरि प्राणंति कहिये जीवैं हैं जीवितव्यरूप व्यवहारकौं योग्य हो हैं जीव जिनिकरि ते प्राण हैं बहुरि आगमविषै प्रसिद्ध बांछा संज्ञा अभिलाषा ऐ एकार्थ हैं। बहुरि जिनकरि वा जिनविषैं जीव हैं ते मृग्यंते कहिये अवलोकिये ते मार्गणा हैं तहां अवलोकनहारा मार्गयिता[1] तो भव्यनिविषै उत्कृष्ट प्रधान तत्त्वार्थश्रद्धावान जीव जानना। अवलोकन योग्य मृग्य चौदह मार्गणानिके विशेषलिये आतमा जानना। बहुरि अवलोकना मृग्यताका साधनकौं वा अधिकरणकौं जे प्राप्त ते गति आदि मार्गणा हैं बहुरि मार्गणा जो अवलोकन ताका जो उपाय सो ज्ञान दर्शनका सामान्य भावरूप उपयोग है ऐसैं इन प्ररूपणानिका साधारण अर्थका प्रतिपादन कह्या ॥२॥ आगै संग्रहनयकी अपेक्षाकरि प्ररूपणाका दोयप्रकारको मनविषैं धरि गुणस्थान मार्गणास्थानरूप दोय प्ररूपणानिके नामांतर कहैं हैं—

**संखेओ ओघोत्ति य गुणसण्णा सा च मोहजोगभवा।**
**वित्थारादेसोत्ति य मग्गणसण्णा सकम्मभवा ॥ ३ ॥**

[1] पुस्तकमें मृगयिता पाठ है।

**संक्षेप ओघ इति च गुणसंज्ञा सा च मोहयोगभवा ।**
**विस्तार आदेश इति च मार्गणासंज्ञा स्वकर्मभवा ॥ ३ ॥**

जी० प्र०—संक्षेप इति ओघ इति च गुणस्थानस्य संज्ञा अनादिनिधनार्षे रूढा प्रसिद्धा, सा च संज्ञा मोहयोगभवा-मोहयोगाभ्यां संजाता भवति । संज्ञावतां गुणस्थानानां मोहयोगप्रभवत्वात् तत्संज्ञाया अपि तत्प्रभवत्वमुपचारेण उक्तं। चशब्दात् सामान्यमित्यपि गुणस्थानस्य संज्ञा भवतीति ज्ञातव्यं । तथा विस्तार आदेशश्चेति मार्गणास्थानस्य संज्ञा भवति। सा च स्वाभिधानप्रत्ययव्यवहारनिमित्तकर्मोदयाद्भवति। अत्रापि प्राग्वत् तत्संज्ञाया अपि तत्प्रभवत्वोपचारो ज्ञातव्यः। चशब्दाद्विशेष इत्यपि मार्गणाया अनुक्तसंज्ञा भवति ॥ ३ ॥ अथ प्ररूपणाद्वैविध्ये शेषप्ररूपणानामंतर्भावं प्ररूपयति—

मं०प्र०—गुणस्थानप्ररूपणा मार्गणास्थानप्ररूपणा चेति द्वे एव प्ररूपणे संक्षेपतो भवतः,जीवसमासादि शेषप्ररूपणानां मार्गणास्थानप्ररूपणायामेवांतर्भावसंभवात्। तत्र सक्षेप इति ओघ इति च गुणस्थानस्य संज्ञा सा च मोहोदयात् योगाच्च भवति इति मोहयोगभवा। तथाहि दर्शनमोहस्य मिथ्यात्वकर्मण उदयान्मिथ्यादृष्टिः । अनंतानुबंधिकषायोदयात्सासादनसम्यग्दृष्टिः । सम्यङ्मिथ्यात्वोदयात्सम्यग्मिथ्यादृष्टिः । अप्रत्याख्यानकषायोदयात् असंयतसम्यग्दृष्टिः । प्रत्याख्यानकषायोदयाद्देशसंयतः, तीव्रसंज्वलनकषायोदयात्प्रमत्तसयतः । मंदसंज्वलनकषायोदयादप्रमत्तसंयतः । मंदतरसंज्वलनकषायोदयादपूर्वकरणः । मंदतमसंज्वलनकषायोदयादनिवृत्तिकरणः । सूक्ष्मकृष्टिगतसंज्वलनलोभोदयात्सूक्ष्मसांपरायः । समस्तचारित्रमोहोपशमादुपशांतकषायः । समस्तचारित्रमोहनिरवशेषक्षयात्क्षीणकषायः । कायवाग्मनःकर्मलक्षणयोगसद्भावात्सयोगकेवली । तादृग्योगाभावादयोगकेवली । विस्तार आदेश इति च मार्गणासंज्ञा । सा च स्वस्वयोग्यनामादिकर्मोदयाद्भवतीति स्वकर्मभवा । तथाहि-गतिनामकर्मोदयाद्गतिः । इंद्रियजातिनामकर्मोदयात् स्पर्शनादिज्ञानावरणक्षयोपशमाच्च इंद्रियं । त्रसस्थावरनामकर्मोदयात्कायः । शरीरनामकर्मोदयाद्योगः । द्रव्यवेदोदयाद्वेदः । द्रव्यकषायोदयात्कषायः । ज्ञानावरणस्य क्षयोपशमात्क्षयाच्च ज्ञानं । चारित्रमोहस्य क्षयोपशमादुपशमात्क्षयाच्च संयमः । दर्शनावरणस्य क्षयोपशमात् क्षयाच्च दर्शनं । शरीरवर्णनामकर्मोदयाद् द्रव्यलेश्या । योगकषायानुरंजनाद्भावलेश्या । मोक्षहेतुपरिणामभवनाद्भव्यत्वं । दर्शनमोहस्योपशमादेः सम्यक्त्वं । नोइंद्रियज्ञानावरणाक्षयोपशमादेः संज्ञित्वं । औदारिकादिशरीरनामकर्मोदयादाहारित्वमिति वक्ष्यमाणगुणस्थानमार्गणास्थानप्रकरणेषु आगमानुसारेण योजयितव्यं। प्रज्ञावतां संक्षेपरुचीनां गुणस्थानमार्गणास्थानप्ररूपणाद्वयेनैव जीवभेदस्वरूपणस्य ज्ञातुं शक्यत्वात् ॥ ३ ॥ अथ गुणस्थानमार्गणास्थानाभ्यामन्यासा प्ररूपणानामंतर्भावप्रदर्शनार्थमाह—

स०चं०—संक्षेप ऐसी ओघ ऐसी गुणस्थानकी संज्ञा अनादिनिधन ऋषिप्रणीत मार्गविषैं रूढ है प्रसिद्ध है। गुणस्थानकाही संक्षेप वा ओघ ऐसा भी नाम है। बहुरि सो संज्ञा 'मोहयोगभवा' कहिए दर्शन चारित्रमोह वा मन वचन काय योग तिनिकरि उपजी है। इहां संज्ञाके धारक गुणस्थाननिकैं मोह योगतैं उत्पन्नपना है तातैं तिनकी

संज्ञाकैं भी मोह योगकरि उपजना उपचारकरि कह्या है। बहुरि सूत्रविषैं चकार कह्या है तातैं सामान्य ऐसी भी गुणस्थानकी संज्ञा है ऐसा जानना। बहुरि तैसैंही विस्तार आदेश ऐसी मार्गणास्थानकी संज्ञा है। मार्गणाका विस्तार आदेश ऐसा नाम है। सो यह संज्ञा अपना अपना मार्गणाका नामकी प्रतीतिके व्यवहारकौं कारण जो कर्म ताके उदयतैं हो हैं। इहां भी पूर्ववत् संज्ञाके कर्मतैं उपजनेका उपचार जानना। निश्चयकरि संज्ञा तौ शब्दजनित ही है। बहुरि चकारतैं विशेष ऐसी भी मार्गणास्थानकी संज्ञा गाथाविषैं विना कही भी जाननी ॥३॥ आगै प्ररूपणाका दोयप्रकारपनाविषैं अवशेषप्ररूपणानिका अंतर्भूतपना दिखावै हैं—

**आदेसे संलीणा जीवा पज्जत्तिपाणसण्णाओ ।**
**उवओगोवि य भेदे वीसं तु परूवणा भणिदा ॥ ४ ॥**

आदेशे संलीना जीवाः पर्याप्तिप्राणसंज्ञाश्च ।
उपयोगोऽपि च भेदे विंशतिस्तु प्ररूपणा भणिताः ॥ ४ ॥

जी० प्र०—मार्गणास्थानप्ररूपणायां जीवसमासाः, पर्याप्तयः, प्राणाः, संज्ञा, उपयोगश्च इति पंच प्ररूपणाः संलीनाः—सम्यगंतर्भूता इत्यर्थः। तथा सति गुणस्थानप्ररूणं मार्गणास्थानप्ररूपणमिति संग्रहनयापेक्षया प्ररूपणाद्वयमेव प्ररूपितं जातं। अथ कस्यां मार्गणायां का प्ररूपणा अंतर्भूतेति चेद्गाथात्रयेणाह—

मं०प्र०—अभेदविवक्षायां जीवसमासपर्याप्तिप्राणसंज्ञाः, उपयोगोऽपि च इत्येताः पंचप्ररूपणा आदेशे मार्गणास्थानप्ररूपणायां संलीनाः सम्यगंतर्भूताः, तासां तस्याः कथंचिदभेदसंभवात्। एवं संक्षेपरुचिशिष्यापेक्षया गुणस्थानमार्गणास्थानभेदेन द्विविधा प्ररूपणा सिद्धा भवति। भेदे तु पुनर्विवक्षिते सति मध्यमरुचिशिष्यापेक्षया विंशतिः प्ररूपणाः कथिताः युक्ता एव ॥ ४ ॥ अत्र जीवसमासादिपंचप्ररूपणांतर्भावविभाग प्रदर्शयितुं गाथात्रयमाह—

स० चं०—मार्गणास्थानप्ररूपणाविषैं जीवसमास पर्याप्ति प्राण संज्ञा उपयोग ए पांच प्ररूपणा संलीना कहिए गर्भित है किसीप्रकार तिनि मार्गणाभेदनिविषैं अंतर्भूत हैं। तैसैं होतैं गुणस्थानप्ररूपण अर मार्गणास्थानप्ररूपण

ऐसैं संग्रहनय अपेक्षाकरि प्ररूपणा दोयही निरूपित हो हैं ॥ ४ ॥ आगै किस मार्गणाविषैं कौन प्ररूपणा गर्भित है ? सो तीन गाथानि करि कहै हैं—

**इंदियकाये लीणा जीवा पज्जत्तिआणभासमणो ।**
**जोगे काओ णाणे अक्खा गदिमग्गणे आऊ ॥ ५ ॥**

इंद्रियकाययोर्लीना जीवाः पर्याप्त्यानभाषामनांसि ।
योगे कायः ज्ञाने अक्षीणि गतिमार्गणायामायुः ॥ ५ ॥

जी० प्र०–इंद्रियमार्गणायां कायमार्गणायां च जीवसमासाः पर्याप्तयः आनपानभाषामनोबलप्राणाश्चांतर्भूताः । कथं ? इति चेत् जीवसमासानां पर्याप्तीनां च इंद्रियकायाभ्यां तादात्म्यकृतप्रत्यासत्तिसंभवात् सामान्यविशेषकृतप्रत्यासत्तिसंभवाद्वा पर्याप्तीनां धर्मधर्मिकृतप्रत्यासत्तिसंभवाच्च । उच्छ्वासनिश्वासवाग्मनोबलप्राणानां च स्वकारणतत्तत्पर्याप्त्यंतर्भावविषयेऽपि तेषामपि अंतर्भावस्यापि न्याय्यत्वात् तत्रैवांतर्भाव्यंते(?) योगमार्गणायां कायबलप्राणोंतर्भूतः । जीवप्रदेशपरिस्पंदलक्षणकाययोगरूपकार्ये तद्बलाधानलक्षणकायबलप्राणस्वरूपकारणस्य स्वरूपसामान्यविशेषकृतप्रत्यासत्तिविशेषसद्भावात् कार्यकारणकृतप्रत्यासत्तिर्भवति । ज्ञानमार्गणायां इंद्रियाणि अंतर्भूतानि इंद्रियावरणक्षयोपशमोद्भूतलब्धिरूपेंद्रियाणां ज्ञानेन सह तादात्म्यकृतप्रत्यासत्तिसद्भावात् । गतिमार्गणायां आयुःप्राणोंतर्भूतः गत्यायुषोरन्योन्याजहद्वृत्तिलक्षणप्रत्यासत्तिसद्भावात् ॥ ५ ॥

मं०प्र०–इंद्रियमार्गणायां कायमार्गणायां च जीवसमासाः, पर्याप्तयः, उच्छ्वासनिश्वासभाषामनोबलप्राणाश्च लीनाः-यथासंभवमंतर्भूताः । तत्र इंद्रियकाययोर्जीवसमासानां स्वरूपस्वरूपवद्भावप्रत्यासत्त्या सामान्यविशेषभावप्रत्यासत्त्या वा अंतर्भावः । इंद्रियकायं स्वरूपं जीवसमासाः स्वरूपवंतः । अथवा इंद्रियकायौ विशेषौ जीवसमासः सामान्यमिति तत्र तदंतर्भावस्य युक्तत्वात् । तयोरेव पर्याप्तीनां धर्मिधर्मभावप्रत्यासत्त्या अंतर्भावः । इंद्रियकायौ धर्मिणौ पर्याप्तयो धर्मा इति धर्मिणि धर्माणामंतर्भावस्य युक्तत्वात् । तयोरेव उच्छ्वासनिश्वासभाषामनोबलप्राणानां कार्यकारणभावप्रत्यासत्त्या अंतर्भावः कार्यभूतानामुच्छ्वासनिश्वासभाषामनोबलप्राणानां स्वकारणभूतपर्याप्त्यंतर्भावस्थाने अंतर्भावस्य युक्तत्वात् । योगे कायबलप्राणा अंतर्भूताः । कायबलं स्वरूपं योगः स्वरूपवानिति स्वरूपस्वरूपवद्भावप्रत्यासत्त्या अथवा योगः सामान्य कायबलं विशेष इति सामान्यविशेषभावप्रत्यासत्त्या योगे कायबलांतर्भावस्य युक्तत्वात् तयोः शरीरनामकर्मोदयसमुद्भूतत्वेन तथाभावसंभवात् । ज्ञाने–ज्ञानमार्गणायां अक्षीणि–इंद्रियबलप्राणाः कार्यकारणभावप्रत्यासत्त्या अंतर्भूताः कार्यभूतं ज्ञानं प्रति इंद्रियज्ञानावरणक्षयोपशमरूपस्य इंद्रियबलस्य कारणत्वेन तत्र तदंतर्भावस्य युक्तत्वात् । गतिमार्गणायां–आयुःप्राणः अन्योन्याजहद्वृत्तिप्रत्यासत्त्या अंतर्भूतः गतिनामकर्मायुष्कर्मणोरुदयस्य साहचर्यनियमात् ॥ ५ ॥

स०चं०—इंद्रियमार्गणाविषै बहुरि कायमार्गणाविषैं जीवसमास अर पर्याप्ति अर सासोश्वास भाषा मनबल प्राण ए अंतर्भूत हैं। कैसैं हैं ? सो कहै हैं—जीवसमास अर पर्याप्ति इनिकैं इंद्रिय अर कायसहित तादात्म्यकरि कीया हूवा एकत्वसंभवै है। जीवसमास अर पर्याप्ति ए इंद्रियकायरूपही हैं। बहुरि सामान्यविशेषकरि कीया हूवा एकत्व संभवै है। जीवसमास पर्याप्ति अर इंद्रिय कायविषैं कहीं सामान्यका ग्रहण है, कहीं विशेषका ग्रहण है। बहुरि पर्याप्तिनिकै धर्म धर्मीकरि कीया हुवा एकत्व संभवै है पर्याप्ति धर्म है इंद्रिय काय धर्मी हैं तातैं जीवसमास अर पर्याप्ति ए इंद्रिय काय मार्गणाविषै गर्भित जानने। बहुरि उश्वास वचनबल मनबल प्राणनिकै अपनां कारणभूत उश्वास भाषा मनःपर्याप्ति जहां अंतर्भूता भया तिसविषैं अंतर्भूतपना न्यायही है। तातैं एऊ तहां ही इंद्रिय कायमार्गणाविषै गर्भित भए। बहुरि योग मार्गणाविषैं कायबल प्राण गर्भित है। जातैं जीवके प्रदेशनिका चंचलहोनैं रूप लक्षणधरै काययोगरूप जो कार्य तीहिविषैं तिसकायबल रूप लक्षणधरैं कायबल प्राणस्वरूप जो कारण ताकैं अपने स्वरूपका सामान्य विशेषकरि कीया एकत्वविशेषका सद्भाव है। तातैं कार्यकारण करि कीया एकत्व ही है। बहुरि ज्ञानमार्गणाविषैं इंद्रिय प्राण गर्भित है। जातैं इंद्रियरूप मतिश्रुतावरणके क्षयोपशमतैं प्रकट जे लब्धिरूप इंद्रिय तिनकैं ज्ञानसाहित तादात्म्यकरि कीया एकत्वका सद्भाव है बहुरि गति मार्गणाविषैं आयुः प्राण गर्भित है। जातैं गति और आयुके परस्पर अजहद्वृत्ति है। गति आयुविना नाही, आयु गति विना नाहीं सो इस लक्षणकरि एकत्व संभवै है ॥ ५ ॥

**मायालोहे रदिपुव्वाहारं कोहमाणगह्मि भयं।**
**वेदे मेहुणसण्णा लोहह्मि परिग्गहे सण्णा ॥ ६ ॥**

मायालोभयोः रतिपूर्वकमाहारं क्रोधमानकयोर्भयं।
वेदे मैथुनसंज्ञा लोभे परिग्रहे संज्ञा ॥ ६ ॥

जी० प्र०—मायाकषाये लोभकषाये च आहारसंज्ञांतर्भूता आहाराकांक्षाया रतिकर्मोदयपूर्वकत्वसद्भावात्. रतिकर्म मायालोभकषाययोश्च रागहेतुकषायांतःप्रविष्टत्वात् । क्रोधकषाये मानकषाये च भयसंज्ञांतर्भूता भयहेतुषु द्वेषहेतुत्वेन द्वेषरूपक्रोधमानयोः कार्यकारणप्रत्यासत्तिसंभवात् । वेदमार्गणायां मैथुनसंज्ञांतर्भूता कामोद्रेकवशीकृतमिथुनकृत्यं साभिलापसंभोगरूपं तत् वेदोदयजनितपुरुषाद्यभिलाषकार्यमिति कार्यकारणभावप्रत्यासत्तिसद्भावात् । लोभकषाये परिग्रहसंज्ञांतर्भूता लोभकषाये सत्येव मूर्छास्वभावस्य परिग्रहाभिलाषस्य संभवात् अत्र कार्यकारणप्रत्यासत्तिरेवेति जानीहि ॥ ६ ॥

मं०प्र०—मायालोभकषाययोराहारसंज्ञा स्वरूपस्वरूपवद्भावप्रत्यासत्त्या अंतर्भूता । रतिपूर्विका आहारसंज्ञा रागस्वरूपं रागविशेषौ मायालोभौ स्वरूपवंतौ इति तत्र तदंतर्भावो युक्तः । क्रोधमानकषाययोर्भयसंज्ञा स्वरूपस्वरूपवद्भावप्रत्यासत्त्या अंतर्भूता । भयं द्वेषस्वरूपं क्रोधमानौ तु द्वेषविशेषौ स्वरूपवंतौ इति तत्र तदंतर्भावो युक्तः । वेदे-वेदमार्गणायां मैथुनसंज्ञा कार्यकारणभावप्रत्यासत्त्या अंतर्भूता । कार्यभूतां मैथुनसंज्ञां प्रति वेदस्य कारणत्वेन तत्र तदंतर्भावस्य युक्तत्वात् । लोभकषाये परिग्रहसंज्ञा कार्यकारणभावप्रत्यासत्त्या अंतर्भूता कार्यभूतां परिग्रहसंज्ञां प्रति लोभस्य कारणत्वेन तत्र तदंतर्भावस्य युक्तत्वात् ॥ ६ ॥

स० चं०--मायाकषाय अर लोभकषायविषैं आहारसंज्ञा गर्भित है जातैं आहारकी वांछा रतिनामकर्मके उदयकौं पहिले भएं हो है । बहुरि रतिकर्म है सो माया लोभकषाय रागकौं कारण है तहां अंतर्भूत है । बहुरि क्रोधकषाय अर मानकषायविषैं भयसंज्ञा गर्भित है । जातैं भयके कारणनिविषैं दोषका कारणपना है जातैं द्वेषरूप जे क्रोध मान कषाय तिनकैं कार्यकारण अपेक्षा एकत्व संभवै है । बहुरि वेदमार्गणा विषैं मैथुनसंज्ञा अंतर्भूत है जातैं कामका तीव्रपनाका वशीभूतपनाकरि कीया स्त्री पुरुष युगलरूप जो मिथुनका कार्य अभिलाषसहित संभोगरूप सो वेदका उदयकरि निपज्या पुरुषादिकका अभिलाषरूप कार्य है । ऐसैं कार्यकारणभावकरि एकत्वका सद्भाव है । बहुरि लोभकषायविषैं परिग्रहसंज्ञा अंतर्भूत है जातैं लोभकषाय होतैं ही ममत्वभावरूप जो परिग्रहका अभिलाष ताका संभव है तातैं यहां कार्यकारण भाव अपेक्षा एकत्व है । ऐसा हे भव्य ! तू जाणि ॥६॥

**सागारो उवजोगो णाणे मग्गह्मि दंसणे मग्गे ।**
**अणगारो उवजोगो लीणोत्ति जिणेहिं णिद्दिट्ठं ॥ ७ ॥**

**साकार उपयोगः ज्ञानमार्गणायां, दर्शनमार्गणायां ।**
**अनाकार उपयोगः लीन इति जिनैर्निर्दिष्टं ॥ ७ ॥**

जी० प्र०—ज्ञानमार्गणायां साकारोपयोगोऽन्तर्भूतः ज्ञानावरणवीर्यांतरायक्षयोपशमसमुद्भूतज्ञातृव्यापारसन्निधाने एव विशेषग्रहणलक्षणस्य ज्ञानस्य समुत्पत्तेः कार्यकारणकृतप्रत्यासत्तिसंभवात् । दर्शनमार्गणायां च अनाकारोपयोगोंतर्भूतः दर्शनावरणवीर्यांतरायक्षयोपशमविजृंभितार्थसामान्यग्रहणव्यापारे सत्येव अर्थसामान्यग्रहणलक्षणस्य दर्शनस्य समुत्पत्तेः कार्यकारणभावघटनात् अयमंतर्भावः इति प्रागुक्तरीत्या जिनैरर्हदादिभिर्निर्दिष्टः—कथितः न पुनः स्वरुचिविरचित इत्यर्थः। एवं जीवसमासादीनां मार्गणास्थानेंऽतर्भावसमर्थनेन गुणस्थानमार्गणास्थानप्ररूपणाद्वयं प्रतिपाद्य पुनर्भेदविवक्षया विंशतिः प्ररूपणाः प्रागुक्ता एव उच्यंते । भणिता इति पदेन विंशतिप्ररूपणानां परमागमप्रसिद्धानां प्रकाशनेन तद्विशेपकथनेन स्वातंत्र्यपरिहृतं जातं इत्ययं न्यायस्तथैव योज्यते । अथ तासां विंशतिप्ररूपणानां मध्ये प्रथमोद्दिष्टगुणस्थानप्ररूपणाप्रतिपादनार्थं प्रथमं गुणस्थानशब्दस्य निरुक्तिपूर्वकमर्थं कथयति—

मं०प्र०—ज्ञानमार्गणायां साकारोपयोगः स्वरूपस्वरूपवद्भावप्रत्यासत्त्या अंतर्भूतः। साकारोपयोगत्वं सविकल्पग्रहणत्वं स्वरूपं ज्ञानं स्वरूपवत् इति तत्र तदंतर्भावो युक्तः । दर्शनमार्गणायां—अनाकारोपयोगः स्वरूपस्वरूपवद्भावप्रत्यासत्त्या अंतर्भूतः, अनाकरोपयोगत्वं निर्विकल्पग्रहणत्वं स्वरूपं, दर्शनं स्वरूपवत् इति तत्र तदंतर्भावो युक्तः । इत्येवं प्रकारेण इंद्रियकायमार्गणादिषु जीवसमासादीना पंचप्ररूपणानामंतर्भावविधानं जिनैरर्हदादिभिर्निर्दिष्टमिति शास्त्रस्य प्रामाण्यं शास्त्रकारेण प्रदर्शितं । ७ । अथ यथोद्देशस्तथा निर्देश इति न्यायमाश्रित्य प्रागुद्दिष्टानां विंशतिप्ररूपणानां मध्ये प्रथमोद्दिष्टाया गुणस्थानप्ररूपणाया निर्देशं आरभमाणः प्राह—

स० चं०—ज्ञानमार्गणाविषैं साकार उपयोग गर्भित है। जातैं ज्ञानवरण वीर्यांतरायके क्षयोपशमतैं उत्पन्न ज्ञानका परिणमनका निकटपना होतैंहीं विशेषग्रहण रूप लक्षणधरैं जो ज्ञान ताकी उत्पत्ति है । तातैं कार्यकारणकरि कीया एकत्वसंभवै है। बहुरि दर्शनमार्गणाविषैं अनाकार उपयोग गर्भित है। जातैं दर्शनावरण वीर्यांतरायके क्षयोपशम करि प्रकटभया पदार्थका सामान्यग्रहणरूप व्यापार होते ही पदार्थका सामान्यग्रहणरूप लक्षण धरैं जो दर्शन ताकी उत्पत्ति है। तातैं कार्यकारण भाव बनै है। ऐसैं यह गर्भितभाव पूर्वोक्तरीति करि जिन जे अर्हंतादिक तिनिकरि निर्दिष्ट कहिए कह्या है। बहुरि अपनी रुचि करि रच्या हुवा नाहीं है ऐसैं जीवसमासादिकनिकैं मार्गणास्थानविषैं गर्भितभावका समर्थनकरि गुणस्थान अर मार्गणास्थान ए प्ररूपणा दोय प्रतिपादन-

करि बहुरि भेदविवक्षाकरि वीसप्ररूपणा पूर्वैं कहीं तेई कहिए है। पूर्वैं गाथाविषैं 'भणिताः' ऐसा पद कह्या ताकरि वीस प्ररूपणा परमागमविषैं प्रसिद्ध हैं तिनिका प्रकाशन करि तिनिका विशेष कथनविषैं स्वाधीनपना अपनी इच्छाके अनुसारि कहना सो छोड्या है। ऐसैं यह न्याय तैसैं हीं जोडिए है ॥७॥ आगैं तिनि वीसप्ररूपणानिविषैं पहलैं कही जो गुणस्थानप्ररूपणा ताका प्रतिपादनिके अर्थि प्रथम गुणस्थानशब्दकी निरुक्तिपूर्वक अर्थ कहै हैं—

## जेहिं दु लक्खिज्जंते उदयादिसु संभवेहिं भावेहिं।
## जीवा ते गुणसण्णा णिद्दिट्ठा सव्वदरसीहिं ॥ ८ ॥

यैस्तु लक्ष्यंते उदयादिषु संभवैर्भावैः।
जीवास्ते गुणसंज्ञा निर्दिष्टाः सर्वदर्शिभिः ॥ ८ ॥

जी० प्र०—मोहनीयादिकर्मणां उदयोपशमक्षयोपशमक्षयपरिणामरूपेषु अवस्थाविशेषेषु सत्सु संजायमानैर्यैर्भावैः-जीवस्य मिथ्यात्वादिपरिणामैः, गुण्यंते—लक्ष्यंते दृश्यंते लांछ्यंते वा जीवास्ते जीवपरिणामाः गुणस्थानसंज्ञा भवंतीति सर्वदर्शिभि-सर्वज्ञैः, निर्दिष्टाः-कथिताः। अनेन गुणशब्दनिरुक्तिप्रधानसूत्रेण मिथ्यात्वादयोऽयोगिकेवलित्वपर्यंता जीवपरिणामविशेषाः त एव गुणस्थानानीति प्रतिपादितं भवति। (अथ तेषां पंचभावानां निरुक्तिरुच्यते) स्वस्थितिक्षयवशादुदयनिषेके गलतां कार्मणस्कंधानां फलदानपरिणतिः-उदयः, तस्मिन् भव औदयिकः। प्रतिपक्षकर्मणामुदयाभावः उपशमः तस्मिन् भव औपशमिकः। प्रतिपक्षकर्मणां पुनरुत्पत्त्यभावेन नाशः क्षयः तस्मिन् भवः क्षायिकः। प्रतिपक्षकर्मणामुदये विद्यमाने यो जीवगुणांशो दृश्यते सक्षयोपशमः तस्मिन् भवः क्षायोपशमिकः। उदयादिनिरपेक्षः परिणामः तस्मिन् भवः पारिणामिकः। एवमौदयिकादीनां पंच भावानां सामान्यार्थं प्रतिपाद्य विस्तरतः अग्रे तन्महाधिकारे प्रतिपादयिष्यति ॥८॥ अथ तानि गुणस्थानानि गाथाद्वयेन उद्दिशति—

मं० प्र०—दर्शनमोहनीयादिकर्मणामुदयादिषु—उदयोपशमक्षयक्षयोपशमपरिणामेषु अवस्थाविशेषु सत्सु संभवैः—उत्पद्यमानैः, यैर्भावैः—औदयिकादिभिःमिथ्यादर्शनादिभिः परिणामैः, जीवा गुण्यंते लक्ष्यंते लांछ्यंते ते भावा गुणसंज्ञा गुणनामान इति सर्वदर्शिभिः- अर्हदादिभिः, निर्दिष्टाः प्रकथिताः ॥ ८ ॥ अथ तद्गुणस्थाननामोद्देशार्थं गाथाद्वयमाह—

स०चं०—मोहनीय आदि कर्मनिका उदय उपशम क्षय क्षयोपशम परिणामरूप जे अवस्थाविशेष तिनकौं होते संतै उत्पन्नभए जे भाव कहिए जीवके मिथ्यात्वादिक परिणाम तिनकरि गुण्यंते कहिए लखिए वा देखिए

वा लांछित करिए जीव ते जीवके पारिणाम गुणस्थानसंज्ञाके धारक हैं ऐसा सर्वदर्शी जे सर्वज्ञदेव तिनकरि निर्दिष्टाः कहिए कहे हैं। इस गुणशब्दकी निरुक्तिकी प्रधानतालीए सूत्रकरि मिथ्यात्वादिक अयोगकेवलीपनापर्यंत भए जीवके परिणामविशेष तेई गुणस्थान हैं ऐसा प्रतिपादन कीया है। तहां अपनी स्थितिके नाशके वशतें उदयरूप निषेकविषैं गले जे कार्माण स्कंध तिनका फलदेनेरूप जो परिणमन सो उदय है ताकौं होतैं जो भाव होइ सो औदयिक भाव है। वहुरि गुणका प्रतिपक्षी जे कर्म तिनका उदयका अभाव सो उपशम है। ताकौं होते संतैं जो होय सो औपशमिक भाव है। वहुरि प्रतिपक्षी कर्मनिका वहुरि न उपजै ऐसा नाश होना सो क्षय ताकौं होतैं जो होइ सो क्षायिक भाव है। वहुरि प्रतिपक्षी कर्मनिका उदय विद्यमान होतैं भी जो जीवके गुणका अंश देखिए सो क्षयोपशम, ताकौं होतैं जो होइ सो क्षायोपशमिक भाव है। वहुरि उदयादिक अपेक्षातें रहित सो परिणाम है ताकौं होतैं जो होइ सो पारिणामिक भाव है। ऐसैं औदयिक आदि पंचभावनिका सामान्य अर्थ प्रतिपादनकरि विस्तारतैं आगै तिनि भावनिका महा अधिकारविषैं प्रतिपादन करिसी ॥ ८ ॥ आगैं ते गुणस्थान गाथा दोयकरि नाममात्र कहे हैं—

मिच्छो सासण मिस्सो अविरदसम्मो य देसविरदो य।
विरदा पमत्त इदरो अपुव्व अणियट्टि सुहमो य ॥ ९ ॥
उबसंत खीणमोहो सजोगकेवलिजिणो अजोगी य।
चउदस जीवसमासा कमेण सिद्धा य णादव्वा ॥ १० ॥

मिथ्यात्वं सासनः मिश्रः अविरतसम्यक्त्वं च देशविरतश्च।
विरताः प्रमत्तः इतरः अपूर्वः अनिवृत्तिः सूक्ष्मश्च ॥ ९ ॥

**उपशांतः क्षीणमोहः सयोगकेवलिजिनः अयोगी च ।**
**चतुर्दश जीवसमासाः क्रमेण सिद्धाश्च ज्ञातव्याः ॥ १० ॥**

जी०प्र०—मिथ्या–अतत्त्वविषया दृष्टिः–श्रद्धा यस्यासौ मिथ्यादृष्टिः। नाम्नि उत्तरपदश्चेति दृष्टिपदस्य लोपात् मिच्छो इत्युक्तं। अयं भेदः अग्रेऽपि ज्ञातव्यः। सह आसादनेन ( सम्यक्त्व ) विराधनेन वर्तत इति सासादना, सासादना सम्यग्दृष्टिर्यस्यासौ सासादनसम्यग्दृष्टिः। अथवा आसादनेन सम्यक्त्वविराधनेन सह वर्तमानः सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिः। इदं भूतपूर्वन्यायेन सम्यग्दृष्टित्वं ज्ञातव्यं। सम्यक्त्वमिथ्यात्वमिश्रो मिश्रः। सम्यक्-समीचीना दृष्टिः–तत्त्वार्थश्रद्धानं यस्यासौ सम्यग्दृष्टिः। स चासौ अविरतश्च अविरतसम्यग्दृष्टिः। देशतः–एकदेशतः, विरतो देशविरतः संयतासंयत इत्यर्थः। अत्र विरतपदं उपरितनसर्वगुणस्थानवर्तिनां संयमित्वमेव ज्ञापयति। प्रमाद्यतीति प्रमत्तः। इतरः–अप्रमत्तः। अपूर्वा करणाः–परिणामा यस्यासौ अपूर्वकरणः। निवृत्तिः–परिणामविशेषः, न विद्यते निवृत्तिरूपः करणो यस्यासावनिवृत्तिकरणः। सूक्ष्मः सांपरायः–कषायः, यस्यासौ सूक्ष्मसांपरायः। उपशांतो मोहो यस्यासौ उपशांतमोहः। क्षीणो मोहो यस्यासौ क्षीणमोहः। घातिकर्माणि जयति स्मेति जिनः, केवलज्ञानमस्यास्तीति केवली, स चासौ जिनश्च केवलिजिनः, योगेन सह वर्तते इति सयोगः, स चासौ केवलिजिनश्च सयोगकेवलिजिनः। योगः अस्यास्तीति योगी, न योगी अयोगी, अयोगी केवलिजिनः इत्यनुवर्तनात् अयोगी चासौ केवलिजिनश्च अयोगिकेवलिजिनः। एते मिथ्यादृष्ट्याद्ययोगिकेवलिजिनावसानाः चतुर्दशजीवसमासाः गुणस्थानानीति ज्ञातव्याः। कथमियं जीवसमास इति संज्ञा गुणस्थानस्य जाता ? इति चेत् जीवाः समस्यंते–संक्षिप्यंते एष्विति जीवसमासाः। अथवा जीवाः सम्यगासते एष्विति जीवसमासाः। इत्यत्र प्रकरणसामर्थ्येन गुणस्थानान्येव जीवसमासशब्देन उच्यंते। एते सकर्माणो जीवा यथा लोके संति विनष्टकृत्स्नकर्माणः सिद्धपरमेष्ठिनोऽपि संतीति ज्ञातव्याः भवंति। क्रमेण सिद्धाश्चेति क्रमशब्देन पूर्वं घातिकर्माणि क्षपयित्वा सयोगायोगिकेवलिगुणस्थानयोर्यथायोग्यकालं स्थित्वा अयोगिकेवलिचरमसमये शेषाघातिकर्माणि निरवशेषाणि क्षपयित्वा सिद्धा भवंतीत्ययं क्रमो ज्ञाप्यते। अनेन ज्ञापकेन युगपत्सकलकर्मक्षयत्वं सर्वदाकर्माभावात् सदामुक्तत्वं च परमात्मनो निराकृतं जातं ॥ ९-१० ॥ अथ गुणस्थानेषु औदयिकादिभावानां संभवं दर्शयति—

मं० प्र०—नामैकदेशेन नाम गृह्यते इति न्यायेन मिथ्या इति मिथ्यादृष्टिर्गृह्यते। सासादन इति सासादनसम्यग्दृष्टिः। अत्र प्राकृते विभक्तिलोपः। मिश्रः सम्यग्मिथ्यादृष्टिः, अविरतसम्यग्दृष्टिश्च, अत्र अविरतशब्दः अंतदीपकत्वेन अधस्तनमिथ्यादृष्ट्यादिगुणस्थानानामविरतत्वं सूचयति। चशब्दः परस्परसमुच्चयार्थः। देशविरतश्च संयतासंयतश्च। अत्र चशब्दोऽपि समुच्चयार्थः। विरताः, अयं विरतशब्द आदिदीपकः, वक्ष्यमाणाः प्रमत्तादयः सर्वेऽपि विरता एवेऽति सूचयति। विरता इति न गुणस्थानांतर तादृगागमाभावात्। प्रमत्तः–प्रमत्तविरतः, इतरः–अप्रमत्तविरतः, अपूर्वः–अपूर्वकरणः, अनिवृत्तिः–अनिवृत्तिकरणः। सूक्ष्मश्च सूक्ष्मसांपरायश्च अत्रापि गुणस्थानत्रये 'नामैकदेशो नाम्नि प्रवर्तते' इति न्याय. आश्रयणीयः। चशब्दः प्रमत्तादिसमुच्चयार्थः। अपूर्वकरणादयस्त्रयोऽपि उपशमकक्षपकश्रेण्योः साधारणाः संभवंति-अपूर्वकरणः, उपशमकः क्षपकश्चेत्यादि ॥ ९ ॥

मं० प्र०—उपशांतः—उपशांतमोहः, अयं उपशमकश्रेण्यामेव । क्षीणमोहः—क्षीणकपायः, अयं क्षपकश्रेण्यामेव । सयोगकेवलिजिनः अत्र सयोगत्वमंत्यदीपकत्वेन मिथ्यादृष्ट्यादीनां सर्वेषामपि सयोगत्वं सूचयति । केवलित्वमादिदीपकत्वेन उत्तरेषामयोगानां सिद्धानां च केवलित्वं सूचयति । जिनत्व मध्यदीपकत्वेन असंयतसम्यग्दृष्ट्यादीनामयोगानां च कर्मारिजयसंभवाज्जिनत्वं सूचयति । अयं सयोगकेवलिजिनः सर्वज्ञवीतरागः परमात्मा, अयोगी च—अयोगिकेवलिजिनश्च अयमपि सर्वज्ञवीतरागः परमात्मा, क्षीणकषायांतानामधस्तनगुणानां केवलज्ञाना त्वात् अन्यथता-असर्वज्ञता ज्ञातव्या । एते मिथ्यादृष्ट्यादयः अयोगिकेवलिपर्यंताश्चतुर्दश जीवसमासाः । गुणस्थानानि क्रमेण मिथ्यादृष्टिः प्रथमं गुणस्थानं, सासादनसम्यग्दृष्टिर्द्वितीयं गुणस्थानमित्याद्यनुक्रमेण ज्ञातव्यं । जीवाः सम्यगासते एष्विति जीवसमासाः गुणस्थानानीत्यर्थः । ननु कर्मोदयादिजनितजीवपरिणामानाम संख्येयलोकप्रमितत्वसंभवात्कथं चतुर्दशत्वमिति चेत् ? न, जातिद्वारेण मिथ्यादृष्ट्याद्यभिधानप्रत्ययव्यवहारयोग्यतया चतुर्दशत्वाविरोधात् । न ह्यसंख्येयलोकमात्रेषु परिणामेषु तद्व्यवहारो घटेत् तथा वक्तुं ज्ञातुं चाशक्यत्वात् । एवं संसारिजीवाना गुणस्थानभेदं प्रदर्श्य मुक्तजीवानामभेदेन नामोद्देशं करोति । सिद्धाश्चेति सिद्धा —निष्पन्नस्वरूपाः कृतकृत्याः संतीति क्रियाध्याहारः सर्वत्र ज्ञातव्यः । तेन चतुर्दशगुणस्थानवर्तिनः संसारिणो जीवाः संति । अतीतसंसाराः सिद्धाश्च संतीति सत्प्ररूपणा ॥ १० ॥ अथास्मिन् गुणस्थाने अयं भावो वर्तते इति औदयिकादिपंचभावानां गुणस्थानेषु प्रतिनियता वृत्तिं गाथाचतुष्टयेनाह—

स.चं.—मिथ्या कहिए अतत्त्वगोचर है दृष्टि कहिए श्रद्धा जाकी सो मिथ्यादृष्टि है 'नाम्न्युत्तरपदस्त्र' ऐसा व्याकरण सूत्रकरि दृष्टिपदका लोपकरतैं 'मिच्छो' ऐसा कह्या है । यहु भेद आगें भी जानना । वहुरि आसादन जो विराधना तिहिं सहित वर्तै सो सासादना, सासादना है सम्यग्दृष्टि जाकै सो सासादनसम्यग्दृष्टि है । अथवा आसादन कहिए सम्यक्त्वका विराधन तींहि सहित जो वर्तमान सो सासादन वहुरि सासादन अर सो सम्यग्दृष्टि सो सासादन सम्यग्दृष्टि है[1] । यहु पूर्वै भया था सम्यक्त्व तिस न्यायकरि इहां सम्यग्दृष्टिपना जानना । वहुरि सम्यक्त्व अर मिथ्यात्वका जो मिश्रभाव सो मिश्र है । वहुरि सम्यक् कहिए समीचीन है दृष्टि कहिए तत्त्वार्थश्रद्धान जाकैं सो सम्यग्दृष्टि अर सोई अविरत कहिए असंयमी सो अविरतसम्यग्दृष्टि है । वहुरि देशतः कहिए एकदेशतैं विरत कहिए संयमी सो देशविरत है संयतासंयत है ऐसा अर्थ जानना । इहां जो विरत पद है सो ऊपरिके सर्वगुणस्थानवर्तीनिकैं संयमीपनाकौं जनावै है । वहुरि प्रमाद्यति कहिये प्रमाद करै सो प्रमत्त है वहुरि इतर कहिए प्र-

1 'सासादन जो सम्यग्दृष्टि' यह पाठ ख पुस्तकमें है ।

पर्याप्त निर्वृत्ति अपर्याप्त लब्धि अपर्याप्त भेद तिनिकरि गुणनी। इहां दूसरी तीसरी दोय पंक्ति अप्रथमा हैं तथापि दूसरी पंक्ति कांठेही कही तींहिकरि अप्रथमा ऐसैं शब्दकरि अवशेष रही पंक्ति तीसरी सोई ग्रहण करी है। भावार्थ--एककौं आदिदेकरि उगणीस पर्यंत जीवसमासके स्थान कहे तिनिका सामान्यरूप ग्रहणकीएं एक आदि एक एक बधते उगणीस पर्यंत स्थान हो हैं। इहां सामान्यविषैं पर्याप्तादि भेद गर्भित जानने। बहुरि तिनही एक एकके पर्याप्त अपर्याप्त भेद कीएं दोयकौं आदि देकरि दोय दोय बधते अडतीस पर्यंत स्थान हो हैं। इहां अपर्याप्तविषैं निर्वृति अपर्याप्त लब्धि अपर्याप्त दोऊ गर्भित जानने। बहुरि तिनही एक एकके पर्याप्त निर्वृत्ति अपर्याप्त लब्धि अपर्याप्त भेद कीयें तिनिकौं आदि देकरि तीन तीन बधते सत्तावन पर्यंत स्थान हो हैं इहां जुदे जुदे भेद जानने। अब कहे भेदनिकी यंत्रमें रचना अंकनिकरि लिखिये है---

जीवसमासके स्थानकनिका यंत्र।

| सामान्य अपेक्षा स्थान | पर्याप्त अपर्याप्त अपेक्षा स्थान | पर्याप्त निर्वृ-त्तिअपर्याप्त लब्धिअप-र्याप्त अपेक्षा स्थान |
|---|---|---|
| १ | २ | ३ |
| २ | ४ | ६ |
| ३ | ६ | ९ |
| ४ | ८ | १२ |
| ५ | १० | १५ |
| ६ | १२ | १८ |
| ७ | १४ | २१ |
| ८ | १६ | २४ |
| ९ | १८ | २७ |
| १० | २० | ३० |
| ११ | २२ | ३३ |
| १२ | २४ | ३६ |
| १३ | २६ | ३९ |
| १४ | २८ | ४२ |
| १५ | ३० | ४५ |
| १६ | ३२ | ४८ |
| १७ | ३४ | ५१ |
| १८ | ३६ | ५४ |
| १९ | ३८ | ५७ |
| १९० | ३८० | ५७० |

अब इनि पंक्तिनिका जोड देनेके अर्थि करण सूत्र कहिए है-'मुहभूमीजोगदले पदगुणिदे पदधणं होदि' मुख आदि अर भूमि अंत इनिकौं जोड़ैं आधाकरि पद जो स्थान प्रमाण तींहिकरि गुणैं सर्वपदधन हो है। सो प्रथम पंक्तिविषैं मुख येक अर भूमी उगणीस जोडैं वीस ताका आधा दश पद उगणीसकरि गुणैं येकसौ निवै सर्वजोड हो है। बहुरि द्वितीय पंक्तिविषैं मुखदोय, भूमी अड़तीस जोडे चालीस आधा कीएं वीस पद उगणीसकरि गुणे तीनसै असी सर्व जोड हो है। बहुरि तीसरी पंक्तिविषैं मुख तीन, भूमी सत्तावन जोडे साठि आधा कीएं तीस पद उगणीसकरि गुणै पांचसै सत्तरि सर्व जोड हो है ॥ ७८ ॥ आगैं एकेंद्रिय विकलत्रय जीव समासनिकरि मिले हूए ऐसे पंचेंद्रियसंबंधी जीवसमास स्थानके विशेषनिकौं गाथा दोयकरि कहे हैं—

**इगिवण्णं इगिविगले असण्णिसण्णिगयजलथलखगाणं ।**
**गब्भभवे समुच्छे दुतिगं भोगथलखेचरे दो दो ॥ ७९ ॥**
**अज्जवमलेच्छमणुए तिदुभोगभूमिजे दो दो ।**
**सुरणिरये दो दो इदि जीवसमासा हु अडणउदी ॥८०॥**

एकपंचाशत् एकविकले असंज्ञिसंज्ञिगतजलस्थलखगानां ।
गर्भभवे सम्मूर्छे द्वित्रिकं भोगस्थलखेचरे द्वौ द्वौ ॥ ७९ ॥
आर्यम्लेच्छमनुष्ययोस्त्रयो द्वौ भोगकुभोगभूमिजयोर्द्वौ द्वौ ।
सुरनिरयोर्द्वौ द्वौ इति जीवसमासा हि अष्टानवतिः ॥ ८० ॥

जी० प्र०—एकेंद्रियसप्तयुगलद्वित्रिचतुरिंद्रियाः पर्याप्तनिर्वृत्यपर्याप्तलब्ध्यपर्याप्ता इत्येकेंद्रियविकलेंद्रियेषु एकपंचाशत् । तिर्यग्गतौ कर्मभूमिजलस्थलखचरास्त्रयोऽपि प्रत्येकमसंज्ञिसंज्ञिनौ भूत्वा षट्, ते च गर्भजेषु पर्याप्तनिर्वृत्यपर्याप्तौ संमूर्छिमेषु च पर्याप्तनिर्वृत्यपर्याप्तलब्ध्यपर्याप्ता इति

त्रिंशत् । भोगभूमिसंज्ञिगर्भजस्थलखचरौ पर्याप्तनिर्वृत्यपर्याप्तौ भूत्वा चत्वारः, एवं तिर्यक्पंचेंद्रियस्य चतुस्त्रिंशत् । कर्मभूमौ मनुष्याणां आर्यखंडे गर्भजेषु पर्याप्तनिर्वृत्यपर्याप्तौ संमूर्छिमे तु लब्ध्यपर्याप्त एवेति त्रयः, म्लेच्छखंडे गर्भजेषु पर्याप्तनिर्वृत्यपर्याप्तौ द्वौ, भोगकुभोगभूम्योर्गर्भजे पर्याप्तनिर्वृत्यपर्याप्ताविति चत्वारः, मिलित्वा मनुष्यगतौ नव । देवनारकौपपादिकयोः प्रत्येक पर्याप्तनिर्वृत्यपर्याप्ताविति चत्वारः । एवं चतुर्गतिषु पचेंद्रियजीवसमासस्थानानि सप्तचत्वारिंशत् । एतानि च एकविकलेंद्रियाणामेकपचाशता मिलित्वा अष्टानवतिर्भवंतीति सूत्रतात्पर्यं । अत्र विवक्षया स्थावराणां द्वाचत्वारिंशत् ४२, विकलेंद्रियाणां नव ९, तिर्यक्पंचेंद्रियाणां चतुस्त्रिंशत् ३४, देवानां द्वौ २, नारकाणां द्वौ २, मनुष्याणां नव ९ । सर्वाणि मिलित्वा अष्टानवतिः ९८। अमूनि संसारिणामेव न मुक्तानां विशुद्धचैतन्यनिष्ठज्ञानदर्शनोपयोगयुक्तत्वेन तेषां त्रसस्थावरभेदाभावात् संसारिणस्त्रसस्थावरा इति सूत्रसद्भावात्॥ ७९। ८० ॥ अथोक्तेभ्यो विशेपजीवसमासकथकमपराचार्योक्तं गाथासूत्रत्रयमाह–

मं० प्र०—एकद्वित्रिचतुरिंद्रियसंबंधिषु सप्तदशसु जीवसमासेषु पर्याप्तनिर्वृत्यपर्याप्तलब्ध्यपर्याप्तैस्त्रिभिर्गुणितेषु एकपंचाशदुत्तरविशेषजीवसमासा भवंति तत्र सर्वत्र अप्रतिहतवृत्त्या पर्याप्तादित्रयस्य संभवात् । तज्जीवाना सर्वेषा समूर्छनजन्मत्वात् । तिर्यग्गतौ, कर्मभूमौ जलचरस्थलचरखचराणा, असज्ञिपचेंद्रियाणा संज्ञिपंचेंद्रियाणां च गर्भभवेषु पर्याप्तनिर्वृत्यपर्याप्तौ द्वौ द्वौ जीवसमासौ तत्र लब्ध्यपर्याप्तकासभवात् इति द्वादशजीवसमासाः । तत्रैव सम्मूर्छिमेषु पर्याप्तादित्रयसद्भावात् त्रयस्त्रयो जीवसमासाः इत्यष्टादश मिलित्वा कर्मभूमौ त्रिंशत् । भोगभूमौ स्थलचरखचराणां संज्ञिपंचेंद्रियाणा गर्भभवेषु द्वौ द्वौ पर्याप्तनिर्वृत्यपर्याप्तकौ इति चत्वारः, तत्र जलचराणा विकलेंद्रियाणां असज्ञिना सम्मूर्छिमाना चाभावात्, इति तिर्यग्गतौ पचेंद्रियजीवसमासाः चतुस्त्रिंशत् ॥७९॥

म० प्र०—मनुष्यगतौ कर्मभूमौ आर्यखडे पर्याप्तनिर्वृत्यपर्याप्तलब्ध्यपर्याप्तास्त्रयो जीवसमासाः । म्लेच्छखडे लब्ध्यपर्याप्तकाभावात् द्वौ जीवसमासौ । भोगभूमौ कुभोगभूमौ च द्वौ द्वौ जीवसमासौ तत्रापि लब्ध्यपर्याप्तकाभावात् । एवं मनुष्यगतौ मिलित्वा नव । देवगतौ द्वौ । नरकगतौ द्वौ । उभयत्रापि लब्ध्यपर्याप्तकाभावात् । एवं चतुर्गतिषु पंचेंद्रियजीवसमासाः सप्तचत्वारिंशत् प्राक्तनैकविकलेंद्रियजीवसमासैरेकपचाशता सह एतेषु मिलितेषु सर्वजीवसमासाः अष्टानवतिः खलु–स्फुटं परमागमकोविदैर्ज्ञातव्याः ॥ ८० ॥ अथ श्रीमाधवचंद्रत्रैविद्यदेवा योनिप्ररूपणायां आकारयोनिप्ररूपणार्थं गाथाद्वयमाह--

स. चं. पृथ्वी अप् तेज वायु नित्यनिगोद इतरनिगोदके सूक्ष्म वादर भेदकरि छह युगल अर प्रत्येकवनस्पतीका सप्रतिष्ठित अप्रतिष्ठित भेदकरि एक युगल ऐसैं एकेंद्रियके सात युगल बहुरि वेंद्री तेंद्री चौंद्रीं ए तीन ऐसैं ए सतरह भेद पर्याप्त निर्वृत्ति अपर्याप्त लब्धि अपर्याप्त भेदकरि तीन तीन प्रकार हैं ऐसैं एकेंद्रिय विकलेंद्रियनिविषैं इक्यावन भेद भये । बहुरि पंचेंद्रियरूप तिर्यंच गतिविषैं कर्मभूमिके तिर्यंच तीनप्रकार हैं । तहां जे जलविषैं गमनादिकरैं ते जलचर अर जे भूमिविषैं गमनादि करैं ते स्थलचर अर जे आकाशविषै उडना आदि गमनादि करैं ते नभचर तीनों प्रत्येक संज्ञी असंज्ञी भेदरूप हैं तिनिके छह भए । बहुरि ते छहौं गर्भज अर सन्मूर्छन ही हैं । तहां गर्भज-

विषैं पर्याप्त अर निवृत्ति अपर्याप्त ए दोय भेद संभवै हैं तिनिके बारह भए। बहुरि सन्मूर्छनविषैं पर्याप्त निवृत्ति अपर्याप्त लब्धि अपर्याप्त ऐ तीन भेद संभवै हैं तिनिके अठारह भए ऐसैं कर्मभूमियां पंचेंद्रियतिर्यचके तीस भेद भये। बहुरि भोग भूमिविषैं संज्ञी ही हैं असंज्ञी नाहीं। बहुरि स्थलचर अर नभचर ही हैं जलचर नाहीं। बहुरि पर्याप्त निवृति अपर्याप्त ही हैं लब्धि अपर्याप्त नाहीं। तातैं संज्ञी स्थलचर नभचरके पर्याप्त निवृत्यपर्याप्त-भेदकरि च्यारि भए ऐसैं तिर्यंच पंचेंद्रियके चौंतीस भेद भये। बहुरि मनुष्यनिके कर्मभूमिविषैं आर्यखंडविषैं तौ गर्भजके पर्याप्त निवृत्ति अपर्याप्तकरि दोय भेद अर सन्मूर्छनका लब्धि अपर्याप्तरूप एक भेद ऐसैं तीन भए। बहुरि म्लेच्छखंडविषैं गर्भजही हैं ताके पर्याप्त निर्वृत्ति अपर्याप्तकरि दोय भेद बहुरि भोगभूमि अर कुभोग-भूमि इन दोऊनिविषैं गर्भज ही हैं तिनके पर्याप्त निवृत्ति अपर्याप्तकरि दोय दोय भेद भए च्यारि भेद मिलि-करि मनुष्यगतिविषैं नव भेद भए। बहुरि देवनारकी औपपादिक हैं तिनिके पर्याप्त निवृत्ति अपर्याप्त भेदकरि दोय दोय भेद होई च्यारि भेद ऐसैं च्यारि गतिनिविषैं पंचेंद्रियके जीवसमासके स्थान सैंतालीस हैं। बहुरि ए सैंतालीस अर एकेंद्री विकलेंद्रियके इक्यावन मिलिकरि अठ्याणवै जीवसमास स्थान हो हैं ऐसा सूत्रनिका तात्पर्य जानना। इहां विवक्षाकरि स्थावरनिके बियालीस विकलेंद्रियनिके नव तिर्यंच पंचेंद्रियनिके चौंतीस देवनिके दोय नारकीनिके दोय मनुष्यनिके नव सर्वमिलि अठ्याणवे भए। ऐसैं ए कहे जीवसमासके स्थान ते सं-सारी जीवनिके जानने मुक्तजीवनिके नाहीं हैं। जातैं विशुद्ध चैतन्यस्वरूप ज्ञान दर्शन उपयोगका संयुक्तपनां करि तिन मुक्तजीवनिके त्रस स्थावर भेदनिका अभाव है। अथवा 'संसारिणस्त्रसस्थावराः' ऐसा तत्त्वार्थ सू-त्रविषैं वचन है तातैं ए भेद संसारी जीवनिके ही जानने॥ ७९, ८०॥ अब कहे जे जीवसमास तिनितैं विशेष जीवसमासका कहनहारा अन्य आचार्यकरि कह्या हूवा गाथा सूत्र कहै हैं—

**सुद्दखरकुजलतेवा णिच्चचदुग्गदिणिगोदथूलिदरा।**

पदिठिदरपंचपात्तियवियलतिपुण्णा अपुण्णदुगा ॥ १ ॥
इगिविगले इगिसीदी असण्णिसण्णिगयजलथलखगाणं ।
गब्भभवे सम्मुच्छे दुतिगतिभोगथलखेचरे दो दो ॥२॥
अज्जसमुच्छिगिगब्भे मलेच्छभोगतियकुणरछपणत्तीससये ।
सुराणिरये दो दो इदि जीवसमासा हु छहियचारिसयं ॥ ३ ॥

शुद्धखरकुजलतेजोनित्यचतुर्गतिनिगोदस्थूलेतराः ।
प्रतिष्ठितेतरपंचप्रत्येकविकलत्रयः पूर्णाः अपूर्णद्विकाः ॥
एकविकले एकाशीतिः असंज्ञिसंज्ञिगतजलथलखगानां ।
गर्भभवे सम्मूर्च्छे द्वित्रिगा त्रिभोगथलखेचरे द्वौ द्वौ ॥
आर्यसंमूर्छिगर्भे म्लेच्छभोगत्रयकुनरषट्पंचत्रिंशतशतं ।
सुरनिरये द्वौ द्वौ इति जीवसमासाः खलु षडधिकचतुःशती ॥

जी० प्र–मृदादिरूपपृथ्वीकायिकः पाषाणादिरूपखरपृथ्वीकायिकः अप्कायिकः तेजस्कायिकः वायुकायिकः नित्यनिगोदः इतरनिगोदः परनामचतुर्गतिनिगोदश्चेति सप्तापि स्थूलसूक्ष्मभेदाच्चतुर्दश । तृणं वल्ली गुल्मः वृक्षः मूलं चेति पंचापि प्रत्येकवनस्पतयो निगोदशरीरैः प्रतिष्ठिताप्रतिष्ठितभेदाद्दश । द्वींद्रियस्त्रींद्रियश्चतुरिंद्रियश्चेति विकलेंद्रियास्त्रयः । एतेषु सप्तविंशतयेकेंद्रियविकलेंद्रियभेदेषु पर्याप्तनिर्वृत्यपर्याप्तलब्ध्यपर्याप्तभेदादेकाशीतिः । पचेंद्रियेषु कर्मभूम्यसंज्ञिसंज्ञिभेदजलचरस्थलचरखचरेषु षट्स्वपि गर्भजेषु पर्याप्तनिर्वृत्यपर्याप्तभेदाद् द्वादश । तत्संमूर्छिमेषु पर्याप्तनिर्वृत्त्यपर्याप्तलब्ध्यपर्याप्तभेदादष्टादश । उत्कृष्टमध्यमजघन्यभोगभूमीनां संज्ञिस्थलचारखचराविति षट्सु पर्याप्तनिवृत्त्यपर्याप्तभेदाद्द्वादश

**कुम्मुणणयजोणीए तित्थयरा दुविहचक्कवट्टी य।
रामा वि य जायंते सेसाये सेसगजणो दु॥ ८२॥**

कूर्मोन्नतयोनौ तीर्थकराः द्विविधचक्रवर्तिनश्च।
रामा अपि च जायंते शेषायां शेषकजनस्तु॥ ८२॥

जी० प्र—कूर्मोन्नतयोनौ तीर्थंकराः सकलचक्रवर्तिन. अर्धचक्रवर्तिनः प्रतिवासुदेवा बलदेवाश्चोत्पद्यंते अपिशब्दान्नेतरजनाः। शेषवंशप-
त्रयोनौ शेषजना एवोत्पद्यंते न तीर्थंकरादयः॥ ८२॥ अथ जन्मभेदनिर्देशपूर्वकं गुणयोनीर्निर्दिशति--

म० प्र०-कूर्मपृष्ठवदुन्नता योनिः कूर्मोन्नतयोनिः, तस्या तीर्थंकराः, द्विविधचक्रवर्तिनश्च-सकलचक्रवर्तिनः अर्धचक्रवर्तिनश्च वासुदेवप्रतिवासुदेवाः,
रामा अपि च बलदेवा अपि च जायते-उत्पद्यते। शेषायां वंशपत्रयोनौ-वंशपत्रसदृशयोनौ तु पुनः शेषा जना जायते॥ ८२॥ अथ गुणयोनिप्ररूपणार्थं
ग्रंथकारा गाथाषट्कमाहुः--

सं० च०—कूर्मोन्नतयोनिविषैं तीर्थंकर वा सकलचक्रवर्ती वा अर्धचक्रवर्ती नारायण प्रतिनारायण वा बल-
भद्र उपजैं हैं। अपि शब्दकरि अन्य कोई नाहीं उपजै है बहुरि अवशेष वंशपत्र योनिविषैं अवशेष जन उपजैं हैं
तीर्थंकरादि नाहीं उपजैं हैं॥ ८२॥ आगैं जन्म भेदनिका निर्देशपूर्वक गुणयोनिकौं निर्देश करैं हैं—

**जम्मं खलु संमुच्छणगब्भुववादा दु होदि तज्जोणी।
सच्चित्तसीदसंउडसेदरमिस्सा य पत्तेयं॥ ८३॥**

जन्म खलु संमूर्छनगर्भोपपादास्तु भवति तद्योनयः।
सचित्तशीतसंवृतसेतरमिश्राश्च प्रत्येकं॥ ८३॥

जी० प्र०—सम्मूर्छनगर्भोपपादाः संसारिजीवानां जन्मभेदा भवति। सं समंतात्, मूर्छनं जायमानजीवानुग्राहकाणां शरीराकारपरिणम-

नगोग्यपुद्गलस्कंधानां समन्ततः मूर्छनं सम्मूर्छनं । जायमानजीवेन शुक्रशोणितरूपपिंडस्य गरणं -शरीरतया उपादानं गर्भः । उपपदनं संपुटशय्योष्ट्रमुखाकारादिषु लघुनांतर्मुहूर्तेनैव जीवस्य जननं उपपादः । इति संमूर्छिमादिभिर्निरुक्तिसिद्धास्तद्योनयः जीवशरीरग्रहणाधाराः यथासंभवं सचित्तशीतसंवृताः सेतरा मिश्राश्चेति नवविधा भवति । तासु संमूर्छनादय एव प्रत्येकं यथासंभव संभवति । चित्तेन चेतनेन सह वर्तंते इति सचित्ताः प्राण्यतःप्रदेशपरिगृहीतपुद्गलस्कंधाः इत्यर्थः । तद्विपरीता अचित्ताः । तदुभयात्मका मिश्राः । प्रादुर्भूतशीतस्पर्शाः पुद्गलाः शीताः । अभिव्यक्तोष्णस्पर्शाः पुद्गला उष्णाः । तदुभयात्मकाः पुद्गला मिश्राः । दुरुपलक्ष्यः-गुप्ताकारः पुद्गलस्कंधः संवृतः । प्रकटाकार उपलक्षणीयः पुद्गलस्कंधो विवृतः । तदुभयात्मकः पुद्गलस्कंधो मिश्रः ॥ ८३ ॥ अथ संमूर्छनादीनां स्वामिनिर्देशं करोति--

मं० प्र०---संसारिजीवाना जन्म -उत्पत्तिः पूर्वभवशरीरं त्यक्त्वा पुनरुत्तरभवशरीरग्रहण । यद्यपि परमार्थतः विग्रहगतौ प्रथमसमये उत्तरभवप्रथमपर्यायप्रादुर्भावो जन्म । पूर्वपर्यायविनाशोत्तरपर्यायप्रादुर्भावयोरंगुलिऋजुत्वविनाशवक्रत्वोत्पादवदेककालत्वात् तथापि सम्मूर्छनादिरूपेण पुद्गलपिंडादानस्य तत्प्रथमपर्याये अभावात् तत्समीपशरीरग्रहणप्रथमसमयपर्यायोत्पाद एव जन्मसमीपं जन्म इत्युपचारेणोच्यते । गंगातट गंगेति यथा गंगायां घोष इत्युपचर्यते उपचारनिमित्तस्य सामीप्यस्य सद्भावात् अथवा ऋजुगत्यपेक्षया उत्तरभवप्रथमसमये एव सम्मूर्छनादिरूपशरीरग्रहणविशिष्टतत्प्रथमपर्यायोत्पादस्य पूर्वभवचरमपर्यायविनाशस्य च युगपत्संभवात् मुख्यमेव जन्मलक्षणं । तद्भेदास्तु पुनः सम्मूर्छनगर्भोपपादाः, खलु स्फुट जन्म भवतीति संबंधः । 'सम्मूर्छनगर्भोपपादा जन्म' इति तत्त्वार्थशास्त्रेऽप्युक्तत्वात् । सं--समतात् सर्वदिग्गतस्य शरीरयोग्यपुद्गलपिंडस्य मूर्छन गर्भोपपादविलक्षणं शरीराकारेण परिणमनं संमूर्छनं । शरीरपरिणतिकारणशुक्रशोणितस्य गरण स्वीकारो गर्भः । रूढिशब्दोऽयं पोतादिजन्मवाची । उपेत्य संपुटशय्यां, उष्ट्रकादिकं वा आश्रित्य पदनं--शरीरपरिणामयोग्यपुद्गलस्कंधस्य गमन--प्राप्तिः, उपपादः, रूढिशब्दोऽयं देवनारकाणामेव जन्मवाची । अथवा सम्मूर्च्छनगर्भोपपादाद्यानाश्रित्य जन्म भवतीति गोम्मटपंचिकाकारादीनामभिप्रायः । तस्य जन्मनः योनय -उत्पत्तिस्थानानि प्रत्येकं सम्मूर्छनगर्भोपपादाना जन्मविशेषाणां यथासभवं सचित्तादिगुणविशिष्टाः संभवति । तद्यथा--चित्तेन--चेतनेन सह वर्तते यः पुद्गलपिंडः स साचित्तः । शीतः बहुलशीतस्पर्शः । संवृतः--अंतर्निगूढावयवः । एते त्रयोऽपि सेतराः- इतरैः--अचित्तोष्णविवृतैः सह वर्तमानाः । चेतनराहितः पुद्गलपिंडः अचित्तः । बहुलोष्णस्पर्शः--उष्णः । सुप्रकटावयवः--विवृतः । मिश्राश्च उभयगुणामिश्रिताः--सचित्ताचित्तमिश्रः । शीतोष्णमिश्रः । संवृतविवृतमिश्रश्चेति ॥ ८३ ॥

सं० च०---सम्मूर्छन १ गर्भज २ उपपाद ३ ए तीन संसारी जीवनिके जन्मके भेद हैं। सं कहिए समस्तपनेंकरि मूर्छनं कहिए जन्म धरता जो जीव ताकौं उपकारी ऐसे जे शरीरके आकार परिणमने योग्य पुद्गलस्कंध तिनिका स्वयमेव प्रकट होना सो सम्मूर्छन जन्म है। बहुरि जन्म धरता जीवकरि शुक्र शोणितरूप पिंडका गरणं कहिए अपना शरीररूप ग्रहण करना सो गर्भ है। बहुरि उपपादनं कहिए संपुट शय्या वा उष्ट्रादि मुखाकार

योनिविषै लघु अंतर्मुहूर्त कालकरि ही जीवका उपजना सो उपपाद है। असे तीन प्रकार जन्म भेद हैं। भावार्थ-माता पितादिकका निमित्तविना स्वयमेव शरीराकार पुद्गलका प्रकट होनेकरि जीवका उपजना सो सम्मूर्छन जन्म है। बहुरि माताका रुधिर अर पिताका वीर्यरूप पुद्गलका शरीररूप ग्रहणकरि जीवका उपजना सो गर्भ जन्म है। बहुरि देवनिका संपुटशय्याविषै नारकीनिका उष्ट्रमुखादि आकाररूप योनि स्थानकनिविषै लघु अंतर्मुहूर्तकरि संपूर्ण शरीरकरि जीवका उपजना सो उपपाद जन्म है। ऐसैं तीनप्रकार जन्म भेद जानने। बहुरि इनि सम्मूर्छनादिकरि तिनि जीवनिकी योनि कहिए। जीवके शरीर ग्रहणका आधारभूत स्थान ते यथासंभव नव प्रकार हैं-सचित्त १ शीत २ संवृत ३ इनिके प्रतिपक्षी इतर अचित्त ४ उष्ण ५ विवृत ६ बहुरि इनिके मिलनेसे मिश्र सचित्ताचित्त ७ शीतोष्ण ८ संवृतविवृत ९ ऐसैं नव प्रकार हैं। बहुरि ते योनि सम्मूर्छनादिकनिविषैं प्रत्येक यथासंभव जानना। तहां चित्त कहिए अन्य चेतन तींहिकरि सहित वर्तै ते सचित्त हैं। अन्य प्राणीकरि पूर्वै ग्रहे हूवे पुद्गल स्कधं सचित्त कहिए। बहुरि तातैं विपरीत अन्य प्राणीनिकरि न ग्रहे जे पुद्गलस्कंध ते अचित्त हैं बहरि सचित्त अचित्त दोऊ रूप जे पुद्गलस्कंध ते मिश्र हैं। बहुरि प्रगट है शीत स्पर्श जिनके ऐसे पुद्ग ते शीत हैं। बहुरि प्रगट है उष्णस्पर्शन जिनिकैं ऐसे पुद्गल ते उष्ण हैं। बहुरि शीत उष्ण दोऊरूप जे पुद्गल ते मिश्र हैं। बहुरि प्रगट जाकौं न अवलोकिए ऐसा गुप्त आकार जाका सो पुद्गलस्कंध संवृत है। बहुरि प्रकट आकाररूप जाकौं अवलोकिए ऐसा पुद्गल स्कंध सो विवृत है। बहुरि संवृत विवृत दोऊरूप पुद्गल स्कंध सो मिश्र है। ऐसैं जीव उपजनेके आधाररूप पुद्गल स्कंध तिनिके नव प्रकार जानने। भावार्थ--गुणकौं धरैं त्रैलोक्यविषैं यथासंभव जीव जहां उपजैं ऐसे योनिरूप पुद्गल स्कंध तिनिके भेद नव हैं ॥८३॥ आगे सम्मूर्छनादिक जन्म भेदके जे स्वामी हैं तिनिकौं निर्देश करै हैं--

## पोतजरायुजअंडजजीवणं गब्भ देवणिरयाणं।

# उववादं सेसाणं सम्मुच्छणयं तु णिद्दिट्ठं ॥ ८४ ॥

पोतजरायुजांडजजीवानां गर्भः देवनारकाणां।
उपपादः शेषाणां सम्मूर्छनकं तु निर्दिष्टं ॥ ८४ ॥

जी० प्र०——किंचित्परिवरणमंतरेण परिपूर्णावयवो योनिनिर्गममात्रेणैव परिस्पंदादिसामर्थ्योपेतः पोतः । जालवत्प्राणिपरिवरणं विततमांसशोणितं जरायुः, तस्मिन् जातो जरायुजः । शुक्रशोणितपरिवरणं उपात्तकाठिन्यं नखत्वक्सदृशं परिमंडलमंडं तस्मिन् जातोंडजः । एषां जीवानां गर्भ एव जन्म । चतुर्णिकायदेवानां नारकाणां च धर्मादिभवानामुपपाद एव जन्म । उक्तजीवेभ्यः शेषाणां एकद्वित्रिचतुरिंद्रियाणां केषांचित्पंचेंद्रियाणां लब्ध्यपर्याप्तमनुष्याणां च संमूर्च्छनमेव जन्मेति प्रवचने निर्दिष्टं -कथितं ॥ ८४ ॥ अथ सचित्तादियोनिभेदानां संमूर्छनादिजन्मभेदेषु संभवासंभवं गाथात्रयेण निर्दिशति——

मं० प्र०——अंडजजरायुजवर्जिताः संजातमात्रव्यक्तांगोपांगोपेताः पोताः । गर्भे शिशूना मांसशोणितमेदोमयं कवचप्रायं परिवरणं जरायुः, तत्र जाता जरायुजाः । शुक्रशोणितयोः कठिनावयवं परिवरण परिमंडल अड, तत्र जाता अडजाः, तेषां पोतजरायुजाडजाना जीवानां गर्भो नाम जन्म भवति तेषामेव गर्भ', तेषा गर्भएवेति नियमद्वयं ज्ञातव्यं । देवनारकाणामेव उपपादः, उपपाद एव देवनारकाणामिति च नियमद्वयमत्रापि । शेषाणां पोतजरायुजांडजेभ्यः देवनारकेभ्यश्चान्येषां तिर्यग्मनुष्याणा सम्मूर्छनमेव शेषणामेव सम्मूर्छनमिति च नियमद्वयमत्रापि निर्दिष्ट--परमागमे प्रतिपादितं । तुशब्दः सर्वत्र नियमविशेषसूचनार्थं ॥ ८४ ॥

सं० च०——किछू भी शरीर ऊपरि आवरण विना संपूर्ण है अवयव जाका अर योनितैं निकसता ही चलनादिककी सामर्थ्य ताकरि संयुक्त ऐसा जो जीव सो पोत कहिए। बहुरि जालवत् प्राणीका शरीर ऊपरि आवरण मास लोही जामें विस्ताररूप पाइए ऐसा जो जरायु ताविषै जो जीव उपज्या जो जरायुज कहिए। बहुरि शुक्र लोही मय आवरण कठिनताकों लीएं नखकी चामडी समान गोल आकार धरै सो अंड तींहिविषै उपज्या जो जीव सो अंडज कहिए। इनि पोत जरायुज अंडज जीवनिकै गर्भरूप ही जन्मका भेद जानना। बहुरि च्यारि प्रकार देव अर धर्मादिविषै उपजे नारकी तिनिकैं उपपाद ही जन्मका भेद है। इनि कहे जीवनिविना अन्य सर्व एकेंद्री वेंद्री तेंद्री चौंद्री अर केई पंचेंद्री तिर्यंच अर लब्धि अपर्याप्तक मनुष्य इनिकैं सम्मूर्छन ही जन्मका

भेद पाइए है ऐसा सिद्धांतविषै कह्या है ॥ ८४ ॥ आगै सचित्तादि योनिभेदनिका सम्मूर्छनादि जन्मभेदविषै संभवपना असंभवपना गाथा तीनिकरि दिखावै हैं—

**उपवादे अच्चित्तं गब्भे मिस्सं तु होदि सम्मुच्छे ।**
**सच्चित्तं अच्चित्तं मिस्सं च य होदि जोणी हु ॥८५॥**

उपपादे अचित्ता गर्भे मिश्रा तु भवति संमूर्छे ।
सचित्ता अचित्ता मिश्रा च च भवति योनिर्हि ॥ ८५ ॥

जी० प्र०—देवनारकसंबंध्युपपादजन्मभेदे अचित्तैव योनिः स्यात् । गर्भजन्मनि सचित्ताचित्तमिश्र एव पुद्गलस्कंधो योनिः स्यात् । संमूर्छनजन्मनि तु पुनः सचित्ता अचित्ता उभया चेति त्रिविधा योनिर्भवति ॥ ८५ ॥

मं० प्र०—सम्मूर्छनगर्भोपपादेषु सचित्तादियोनयो विभज्यंते । तद्यथा—उपपादे अचित्त एव अन्यजीवानाश्रयैव योनिः संपुटशय्योष्ट्रकादिषु विवक्षितजीवोत्पत्तेः प्रागचेतनत्वादेव सचित्तमिश्रत्वासंभवात् । गर्भे तु पुनः मिश्र एव भवति पुरुषशरीराद्गलितेन आचितेन शुक्रेण मिश्रस्य स्त्रीशोणितस्य च सचित्तस्य मिश्रयोनित्वसंभवात् केवलाचित्तस्य शुक्रस्य केवलसचित्तस्य स्त्रीशोणितस्य च योनित्वासंभवात् । संमूर्छे सचित्तः, अचित्तः मिश्रश्च योनिर्भवति गर्भोपपादरहितप्रदेशेषु क्वचित् सचित्ते एव क्वचिदचित्ते एव क्वचिन्मिश्रे एव पुद्गलस्कंधे जीवानामुत्पत्तिसंभवात् । 'मिस्स च य' इत्यत्र द्वितीयश्चशब्दः सर्वत्र नियमार्थ ॥८५॥

सं० च०—देव नारकी संबंधी जो उपपाद जन्मका भेद तींहिविषै अचित्त ही योनि है तहां योनिरूप पुद्गलस्कंध सर्व अचित्त ही हैं। गर्भजन्मका भेदविषै सचित्त अचित्त दोऊरूप मिश्र ही पुद्गल स्कंधरूप योनि है तहां योनिरूप पुद्गल स्कंधविषै कोई पुद्गल सचित्त हैं कोई अचित्त हैं। बहुरि सम्मूर्छन जन्मविषै सचित्त अचत्त मिश्र ए तीन प्रकार योनि पाइए है। कहीं योनिरूप पुद्गल स्कंध सचित्त ही हैं कहीं अचित्त ही हैं कहीं मिश्र हैं ॥ ८५ ॥

**उपपादे सीदुसणं सेसे सीदुसणमिस्सयं होदि ।**

## उववादेयक्खेसु य संउड वियलेसु विउलं तु ॥८६॥

उपपादे शीतोष्णे शेषे शीतोष्णमिश्रका भवंति ।
उपपादैकाक्षेषु च संवृता विकलेषु त्रिवृता तु ॥ ८६ ॥

जी० प्र०—उपपादजन्मनि शीतोष्णे द्वे योनी स्यातां । शेषे गर्भजन्मनि संमूर्छनजन्मनि च प्रत्येकं शीता उष्णा मिश्रा चेति तिस्रो योनयः स्युः । (तेजस्कायिकेषु उष्णैव योनिः स्यात्) उपपादजेषु एकेंद्रियेषु च संवृतैव योनिः स्यात् । विकलेंद्रियेषु विवृतैव योनिः स्यात्॥८६॥

मं० प्र०—उपपादे क्वचित् शीतः क्वचिदुष्णः इति द्वावेव योनी भवतः । रत्नप्रभायाः प्रभृति धूमप्रभाविलानां त्रिचतुर्भागपर्यंतेषु विलेषु उष्णस्पर्शस्यैव, धूमप्रभायाश्चतुर्भागादारभ्य महातमःप्रभापर्यंतेषु विलेषु शीतस्पर्शस्यैव भावात् । शेषे गर्भे सम्मूर्छने च शीतः, उष्णः, मिश्रश्चेति त्रयोऽपि योनयो भवंति । उपपादे एकेंद्रियसंमूर्छने च सवृत एव योनिः संपुटशय्योष्ट्रकाद्युपपादस्थानाना विवक्षितजीवोत्पत्त्यनंतर पुनरपरजीवोत्पत्तेः प्राक् नियमेन संवृतत्वात् । तु—पुनः, विकलेषु- विकलेंद्रियसम्मूर्छने विवृत एव योनिर्भवति ॥ ८६ ॥

सं० च०—उपपाद जन्मभेदविषै शीत अर उष्ण ए दोय योनि हैं--योनिरूप पुद्गल स्कंध शीत हैं वा उष्ण हैं । तहां नारकीनिके रत्नप्रभाका विलनितै लगाइ धूमप्रभा विलनिका तीन चौथा भाग पर्यंत विलनिविषै उष्ण योनि ही है । बहुरि धूमप्रभा विलनिका चौथा भागतैं लगाइ महातम प्रभाका विलनिपर्यंत विलनिविषै शीत योनि ही है । ऐसा विशेष जानना । बहुरि अवशेष गर्भ जन्म भेदविषै अर सम्मूर्छन जन्मके भेदविषै शीत उष्ण मिश्र तीनों योनि हैं । कोई योनिरूप पुद्गलस्कंध शीत ही हैं, कोऊ उष्ण ही हैं, कोऊ योनिरूप पुद्गल स्कंधविषैं कोई पुद्गल शीत है कोई उष्ण है तातैं मिश्र हैं । तहां तेजस्कायिक जीवनिविषै उष्ण ही योनि है । तहां योनिरूप पुद्गल स्कंध उष्ण ही है । बहुरि जलकायिक जीवनिविषै शीत ही योनि है तहां योनिरूप पुद्गल स्कंध शीत ही हैं । बहुरि उपपादज देव नारकी अर एकेंद्रिय इनविषै संवृत ही योनि है जहां उपजैं ऐसा योनिरूप पुद्गल स्कंध सो अप्रकट आकाररूप ही है । बहुरि विकलेंद्रियविषै विवृत योनि ही है जहां उपजैं ऐसा योनिरूप पुद्गल स्कंध सो प्रकट ही है ॥ ८६ ॥

**गब्भजजीवाणं पुण मिस्सं णियमेण होदि जोणी हु ।**
**सम्मुच्छणपंचक्खे वियलं वा विउलजोणी हु ॥ ८७ ॥**

गर्भजजीवानां पुनः मिश्रा नियमेन भवति योनिर्हि ।
संमूर्छनपंचाक्षयोः विकलं वा विवृतयोनिर्हि ॥ ८७ ॥

जी० प्र०---गर्भजजीवानां पुनः संवृतविवृताभ्यां मिश्रा एव योनिः स्यात् । संमूर्छनजपंचेंद्रियेषु विकलेंद्रियवद्विवृतैव योनिः स्यात्॥८७॥
अथ योनिप्रभेदसंख्योद्देशपुरस्सरमुपसंहारमाह---

मं० प्र०---गर्भजजीवानां गर्भे पुनर्विशेषेण संवृतविवृतयोः मिश्र एव योनिर्नियमेन भवति पुरुषशरीराद्गलितस्य शुक्रस्य विवृतरूपस्य स्त्रीशोणितस्य च संवृतरूपस्य मिश्रणात् मिश्रः । अय गर्भे एव नान्यत्रेति नियमशब्दार्थः । पंचाक्षाणां -पचेंद्रियाणा, सम्मूर्छने विकलानामिव विवृतयोनिरेव खलु--स्फुटं भवति । वियलवेति छंदःपूरणार्थं विकलेंद्रियसादृश्यार्थं वा ॥ ८७ ॥ अथ पूर्वोक्तगुणयोन्युपसंहारपूर्वक योनिविशेषसंख्या प्ररूपयति--

सं० च०---बहुरि गर्भज जीवनिकै संवृत विवृत दोऊ मिश्ररूप योनि हैं जहां उपजैं ऐसा योनिरूप पुद्गल स्कंधविषै किछू प्रकट किछू अप्रकट हैं। बहुरि सम्मूर्छन पंचेंद्रियनिविषै विकलेंद्रियवत् विवृत योनि ही है ॥ ८७ ॥ आगैं योनिभेदनिकी संख्याका उद्देशके आगै कथनका संकोचनिकौं कहै हैं--

**सामण्णेण य एवं णव जोणीओ हवंति वित्थारे ।**
**लक्खाण चदुरसीदी जोणीओ होंति णियमेण ॥ ८८ ॥**

सामान्येन च एवं नव योनयो भवंति विस्तारे ।
लक्षाणां चतुरशीतिः योनयो भवंति नियमेन ॥ ८८ ॥

जी० प्र०---एवं--उक्तप्रकारेण, सामान्येन--संक्षेपेण, नव योनयो भवंति । विस्तरेण तु चतुरशीतिलक्ष्योनयो भवति नियमेन ॥ ८८ ॥
अथ तासां योनीनां विस्तरसंख्यां दर्शयति--

मं० प्र०---एवं-उक्तप्रकारेण, सामान्येन-संक्षेपेण नव योनयो भवंति, विस्तारे--योनिविशेषे विवक्षिते सति लक्षाणां चतुरशीतिर्योनयो नियमेन अवश्यं-भावेन भवंति । चशब्दः संक्षेपेण नवैवेति नियमार्थः ॥ ८८ ॥ अथ योनिविशेषसंख्यासभवस्थाननिर्देशार्थमाह--

सं० च०---ऐसैं पूर्वोक्त प्रकारकरि सामान्येन कहिए संक्षेपकरि नव योनि हैं। बहुरि विस्तारकरि चौरासी लाख योनि हैं नियमकरि। भावार्थ—जीव उपजनेका आधारभूत पुद्गल स्कंधका नाम योनि है। ताके सामान्यपनै नव भेद हैं विस्तारकरि तिसहीके चौरासी लाख भेद हैं ॥ ८८ ॥ आगैं तिनि योनिनिकी विस्तारकरि संख्या दिखावै हैं—

**णिच्चिदरधादुसत्त य तरुदस वियलंदियेसु छच्चेव ।**
**सुरणिरयतिरियचउरो चोद्दस मणुए सदसहस्सा ॥ ८९ ॥**

नित्येतरधातुसप्त च तरुदश विकलेंद्रियेषु षट् चेव ।
सुरनिरयतिर्यक्चतस्रः चतुर्दश मनुष्ये शतसहस्राः ॥ ८९ ॥

जी० प्र०—नित्यनिगोदेतरनिगोदपृथिवीकायिकाप्कायादिकतेजस्कायिकवायुकायिकेषु एतेषु षट्सु अपि स्थानेषु प्रत्येकं सप्त सप्त लक्षयोनयो भवंति। मिलित्वा द्वाचत्वारिंशल्लक्षाणि भवंति । तरुषु प्रत्येकवनस्पतिकायिकेषु दशलक्षयोनयो भवंति । विकलेंद्रियरूपद्वित्रिचतुरिंद्रियेषु प्रत्येकं द्वे द्वे लक्षयोनयो भवंति, मिलित्वा षट् । सुरेषु नारकेषु तिर्यग्पंचेंद्रियेषु च प्रत्येकं चतुश्चतुर्लक्षयोनयो भवंति । मिलित्वा द्वादशलक्षाणि । मनुष्येषु चतुर्दशलक्षयोनयो भवंति । एवं समस्तसंसारिजीवानां योनयः सर्वा मिलित्वा चतुरशीतिलक्षसंख्या प्रतिपत्तव्या ॥ ८९ ॥ अथ गत्याश्रयेण जन्म गाथाद्वयेनाह—

मं० प्र०--नित्यनिगोदेषु, इतरेषु -चतुर्गतिनिगोदेषु, धातुषु पृथिव्यप्तेजोवायुकायिकेषु एवं षट्सु स्थानेषु प्रत्येकं सप्त सप्त शतसहस्राणि लक्षाणि योनिविशेषा भवंति, मिलित्वा द्वाचत्वारिंशल्लक्षाणि तरुषु--वनस्पतिकायिकेषु दशशतसहस्राणि भवंति । विकलेंद्रियेषु द्वित्रिचतुरिंद्रियेषु प्रत्येकं द्वे द्वे लक्षे, मिलित्वा षडेव। देवनारकतिर्यक्षु प्रत्येक चत्वारि लक्षाणि मिलित्वा द्वादशलक्षाणि । मनुजेषु चतुर्दशलक्षाणि सर्वाणि संपिंडितानि चतुरशीतिर्लक्षाणि संसारिजीवाना चतुर्गतिषु योनिविशेषा भवंति ॥ ८९ ॥ अथ संमूर्छनादित्रयस्य गतींद्रियवेदमार्गणासु यथासंभवं प्रवृत्तिस्थानं प्ररूपयितुं गाथाचतुष्टयमाह—

सं० च०—नित्यनिगोद १ इतरनिगोद २ अर धातु कहिए पृथ्वी कायिक ३ जलकायिक ४ तेजस्कायिक ५ वातकायिक ६ इनि छहौं स्थाननिविषैं प्रत्येक सात सात लाख योनि हैं। बहुरि तरु जो प्रत्येक वनस्पती तिनिविषैं दशलाख योनि हैं बहुरि विकलेंद्रीरूप वेंद्री तेंद्री चौंद्री इनिविषैं प्रत्येक दोय दोय लाख योनि हैं। बहुरि देव नारकी पंचेंद्री तिर्यंच इनिविषैं प्रत्येक च्यारि च्यारि लाख योनि हैं। बहुरि मनुष्यनिविषैं चौदह लाख योनि हैं। ऐसैं समस्त संसारी जीवनिके योनि सर्व मिलि चौरासी लाख संख्यारूप प्रतीति करनी ॥८९॥
आगैं गतिनिका आश्रयकरि जन्म भेदकौं गाथा दोय करि कहै हैं—

**उबबादा सुरणिरया गब्भजसमुच्छिमा हु णरातिरिया।**
**सम्मुच्छिमा मणुस्साऽपज्जता एयविलक्खा॥ ९० ॥**

उपपादाः सुरनिरयाः गर्भजसंमूर्छिमा हि नरातिर्यंचः।
सम्मूर्छिमा मनुष्या अपर्याप्ता एकविकलाक्षाः॥ ९० ॥

जी० प्र०—उपपादजाः सुरा नारकाश्च भवंति। गर्भजाः संमूर्छिमाश्च खलु-स्फुटं यथासंभवं मनुष्याः तिर्यंच एव भवंति। केवलसंमूर्छिमा एव लब्ध्यपर्याप्तकमनुष्या एकेंद्रिया विकलेंद्रियाश्च भवंति॥ ९०॥

मं० प्र०—सुराः निरयाश्च—नारकाश्च उपपादाः—औपपादिका एव। निरयाः—नारकविलानि तत्रस्था जीवा निरया इत्युपचारतः। उपपादः—जन्मविशेषः तत्र भवा अपि उपपादा इत्युपचारशब्दोय। एवमुत्तरोत्तरमुपचारशब्दा ज्ञातव्याः। नराः तिर्यंचश्च गर्भजाश्च सम्मूर्छिमाश्च खलु नियमेन भवति। अपर्याप्ताः—लब्ध्यपर्याप्तमनुष्या सम्मूर्छिन एव। एकविकलाख्याश्च एकेंद्रियाः, विकलेंद्रियाश्च सम्मूर्छिमा एवेति नियमो ज्ञातव्यः॥ ९०॥

सं० च०—देव अर नारकी उपपाद जन्मसंयुक्त हैं। बहुरि मनुष्य अर तिर्यंच ए गर्भज अर सम्मूर्छन यथासंभव होहैं। तहां लब्धि अपर्याप्तक मनुष्य अर एकेंद्रिय विकलेंद्रिय केवल सम्मूर्छन ही हैं॥ ९०॥

**पंचक्खतिरिक्खाओ गब्भजसम्मुच्छिमा तिरिक्खाणं।**

**भोगभुमा गब्भभवा नरपुण्णा गब्भजा चेव ॥ ९१ ॥**

पंचाक्षतिर्यंचः गर्भजसम्मूर्छिमा तिरश्चां।
भोगभूमा गर्भभवा नरपूर्णा गर्भजाश्चैव ॥ ९१ ॥

जी० प्र०-पचेंद्रियतिर्यंचो गर्भजाः संमूर्छिमाश्च भवंति । तिर्यक्षु भोगभूमिजा गर्भभवा एव। नरपर्याप्तका गर्भजा एव भवंति ॥ ९१ ॥ अथौपपादिकादिषु लब्ध्यपर्याप्तकत्वस्य संभवासंभवं कथयति–

मं० प्र०--पचेंद्रियतिर्यंचः गर्भजाश्च सम्मूर्च्छिमाश्च भवति, इदं संभववचनं । तिरश्चां मध्ये भोगभूमा--भोगभूमिभवाः, तिर्यंचो गर्भभवा एव । अथ-वा--णं ननु अहो शिष्येति सबोधनार्थमव्ययं । नरपूर्णाः पर्याप्तमनुष्या गर्भजा एव ॥ ९१ ॥

स० च०--पंचेंद्रिय तिर्यच ते गर्भज अर सम्मूर्छन हो हैं। बहुरि तिर्यचनिविषैं भोगभूमियां तिर्यच गर्भज ही हैं बहुरि पर्याप्त मनुष्य गर्भज ही हैं ॥ ९१ ॥ आगैं औपपादिकादिनिविषैं लब्धि अपर्याप्तकपनाका संभवपना असंभवपनाकौं कहैं हैं–

**उबबादगब्भजेसु य लद्धिअपज्जत्तगा ण णियमेण ।**
**णरसम्मुच्छिमजीवा लद्धिअपज्जत्तगा चेव ॥ ९२ ॥**

उपपादगर्भजेषु च लब्ध्यपर्याप्तका न नियमेन।
नरसम्मूर्छिमजीवा लब्ध्यपर्याप्तकाश्चैव ॥ ९२ ॥

जी० प्र०-औपपादिकेषु गर्भजेषु च लब्ध्यपर्याप्तका नियमेन न संति। संमूर्छिमनुष्या लब्ध्यपर्याप्ता एव भवंति ॥ ९२ ॥ अथ नरकादिगतिषु वेदानवधारयति–

मं० प्र०--उपपादजेषु देवनारकेषु गर्भजेषु च विशिष्टतिर्यग्मनुष्येषु च लब्ध्यपर्याप्तका नियमेन न सति । नरसम्मूर्छिमा जीवा लब्ध्यपर्याप्तका एव भवति ।। ९२ ॥

स० चं०—औपपादिकनिविषैं बहुरि गर्भजनिविषैं लब्धि अपर्याप्तक नियमकरि नाहीं हैं। बहुरि सम्मूर्छन मनुष्य लब्धि अपर्याप्तक ही हो हैं पर्याप्त न हो हैं ॥ ९२ ॥ आगैं नरकादि गतिनिविषैं वेदानिकौं अवधारण करैं हैं—

**णेरइया खलु संढा णरतिरिये तिण्णि होंति सम्मुच्छा।**
**संढा सुरभोगभुमा पुरिसिच्छीवेदगा चेव ॥ ९३ ॥**

नैरयिकाः खलु षंढा नरतिरश्चोस्त्रयो भवंति सम्मूर्छाः।
षंढाः सुरभोगभुमाः पुरुषस्त्रीवेदकाश्चैव ॥ ९३ ॥

जी० प्र०—नारकाः सर्वेऽपि खलु नियमेन षंढाः–द्रव्यतो भावतश्च नपुंसकवेदा एव भवंति। मनुष्यतिर्यक्षु स्त्रीपुंनपुंसकवेदत्रयं स्यात्। संमूर्छिमतिर्यग्मनुष्या षंढवेदा एव भवंति। ते संमूर्छिममनुष्यास्तु स्त्रीयोनितत्कक्षास्तनमूलांतरालेषु चक्रवर्तिनः पट्टमहिषीं विना मूत्रपुरीषाद्यशुचिस्थानेषु चोत्पद्यंते। सुरा भोगभूमिजाश्च पुरुषस्त्रीवेदनियतोदया एव नियमेन भवंति ॥ ९३ ॥ इति विविधयोन्यधिकारो जीवसमासेषु कथितः। अथ शरीरावगाहनाश्रयेण जीवसमासान् वक्तुमनाः प्रथमं तत्सर्वजघन्योत्कृष्टशरीरावगाहनस्वामिनो निर्दिशति—

मं० प्र०—नैरयिकाः खलु–नियमेन षंढा एव–द्रव्यतो भावतश्च नपुंसकवेदा एव। नरतिर्यक्षु त्रयोऽपि वेदाः संति द्रव्यतो भावतश्च स्त्रियः पुमांसः नपुंसकानि च भवंति इत्यर्थः। सम्मूर्छिनो द्रव्यभावतः षंढा एव भवंति। सुरा भोगभूमिभवाश्च द्रव्यभावतः स्त्रीपुंसवेदा एव भवंति ॥ ९३ ॥ अथ जीवानामवगाहनभेदमष्टभिर्गाथासूत्रैः प्ररूपयति—

सं. चं.—नारकी सर्व ही नियमकरि षंढाः कहिए नपुंसक वेदी ही हैं। बहुरि मनुष्य तिर्यंचनिविषैं स्त्री पुरुष नपुंसक भेदरूप तीनों वेद हैं। बहुरि सम्मूर्छन तिर्यंच अर मनुष्य सर्व नपुंसक वेदी ही हैं। ते सम्मूर्छन मनुष्य स्त्री-की योनि वा कांख वा स्तननिका मूल तिनिविषैं अर चक्रवर्तीकी पट्टराज्ञी विना मूत्र विष्टा आदि अशुचिस्थान-कनिविषैं उपजै हैं। ऐसा विशेष जानना। बहुरि देव अर भोगभूमियां ते पुरुषवेद स्त्री वेदका ही उदयसंयुक्त नियम करि हैं तहां नपुंसक न पाइए है ॥ ९३ ॥ इति तीनिप्रकार योनिनिका अधिकार जीवसमासनिका कह्या

आगैं शरीरकी अवगाहना आश्रयकरि जीवसमासनिकौं कहनेका है मन जाका ऐसा आचार्य सो प्रथम ही सर्व जघन्य अर उत्कृष्ट अवगाहनाके जे स्वामी तिनिका निर्देश करै हैं–

**सुहमणिगोदअपज्जत्तयस्स जादस्स तदियसमयम्हि ।**
**अंगुलअसंखभागं जहण्णमुक्कस्सयं मच्छे ॥ ९४ ॥**

सूक्ष्मनिगोदापर्याप्तकस्य जातस्य तृतीयसमये ।
अंगुलासंख्यभागं जघन्यमुत्कृष्टकं मत्स्ये ॥ ९४ ॥

जी० प्र०—सूक्ष्मनिगोदस्य लब्ध्यपर्याप्तकस्य तद्भवे ऋजुगत्योत्पन्नस्य तृतीयसमये घनांगुला (ल) संख्यातैकभागमात्रप्रदेशावगाहविशिष्टशरीरं सर्वावगाहविकल्पेभ्यो जघन्यं भवति स्वयंभूरमणसमुद्रमध्यवर्तिमहामत्स्ये उत्कृष्टावगाहेभ्यः सर्वेभ्यः सर्वोत्कृष्टावगाहविशिष्टं शरीरं भवति । ननूत्पन्नतृतीयसमये एव सर्वजघन्यावगाहनं कथं संभवेत् ? इति चेत् तत्प्रथमसमये निगोदजीवशरीरस्यायतचतुरस्रत्वात् द्वितीसमये समचतुरस्रत्वात् तृतीयसमये कोणापनयनेन वृत्तत्वात् तदेव तदवगाहनस्याल्पत्वसंभवात् । तर्हि ऋजुगत्योत्पन्नस्यैव कथमुक्तं विग्रहगतौ योगवृद्धियुक्तत्वेन तदवगाहवृद्धिप्रसंगात् । तत्सर्वजघन्यावगाहे घनांगुलस्य भागहाराः पल्यासंख्यातैकभागा एकान्नविंशतिः । आवल्यसंख्यातैकभागा नव । रूपाधिकावल्यसंख्यातैकभागा द्वाविंशतिः संख्याता नव । गुणकारास्तु आवल्यसंख्यातैकभागा द्वाविंशतिः । संदृष्टिः—

६ । ८ । २२
a
प । १९ । ८ । ९ । ८ । २२ । १ । ९
a a a

॥ ९४ ॥ अथेंद्रियाश्रयेणोत्कृष्टावगाहानां प्रमाणं तत्स्वामिनश्च निर्दिशति—

म० प्र०—सूक्ष्मनिगोदस्य लब्ध्यपर्याप्तकस्य जातस्य- ऋजुगत्या उत्पन्नस्य, उत्पत्तेस्तृतीयसमये वर्तमानस्य जीवस्य घनांगुलासंख्येयभागमात्रं सर्वजघन्यमवगाहनं भवति । तथाहि–घनांगुलस्य भागहाराः पल्यासंख्येयभागाः एकान्नविंशतिवाराः, आवल्यसंख्येयभागा नववाराः, रूपाधिका आवल्यसंख्येयभागा द्वाविंशतिवाराः, संख्येयरूपाणि नववाराणि, गुणकारा आवल्यसंख्येयभागा द्वाविंशतिवाराः अपवर्तिते ईदृशं घनांगुलासंख्येयभागमात्रं भवति
६
a स्वयंभूरमणमहासमुद्रमध्यवर्तिनि महामत्स्ये सहस्रयोजनायामपंचशतयोजनविस्तारपंचाशदुत्तरद्विशतयोजनोत्सेधशरीरप्रदेशप्रमाणं घनक्षेत्रफलं संख्यात-

घनांगुलमात्रं सर्वोत्कृष्टमवगाहनं भवति ६ ७ ७ ७ ७ ७ मध्ये जघन्यावगाहात् प्रदेशोत्तरा अवगाहनविकल्पा भवंति । सर्वेऽपि संपिंडिताः संख्यातघनांगुलमात्रा असंख्येया अवगाहनविकल्पा भवंति ६ ७ ७ ७ ७ ७ $\frac{}{a}$ a। ननु विग्रहगत्या उत्पन्नस्य प्रथमद्वितीयसमययोश्च जघन्यावगाहन किमिति नोच्यते ? इति चेत्तन्न, विग्रहगतौ योगवृद्ध्या शरीरवृद्धिप्रसगात् । प्रथमसमये आयतचतुरस्रत्वात् द्वितीयसमये समचतुरस्रत्वात्, तृतीयसमये पुनः कोणापनयनेन वृत्तत्वे शरीराल्पत्वसंभवात् । अन्येषु द्वीपसमुद्रेषु इतरगतित्रये च सर्वोत्कृष्टावगाहस्यासभवात् । स्वयभूरमणसमुद्रेऽपि तटसमीपमत्स्यानां तथाविधसर्वोत्कृष्टावगाहनासंभवात् ॥ ९४ ॥

स. चं.–जितना आकाश क्षेत्र शरीर रोकै ताका नाम इहां अवगाहना है। सो सूक्ष्मनिगोदिया लब्धि अपर्याप्तकजीव तींहि पर्यायविषैं ऋजुगतिकरि उत्पन्न भया ताका तीसरा समयविषैं घनांगुलके असंख्यातवें भाग प्रमाण प्रदेशनिकी अवगाह विशेषधरैं शरीर हो है। सो यहु अन्य सर्व अवगाहना भेदनितैं जघन्य है। बहुरि स्वयंभूरमण नामा समुद्रके मध्यवर्ती जो महामत्स्य ताका उत्कृष्ट अवगाहनातैं भी सबनितैं सर्वोत्कृष्ट अवगाहना विशेष धरैं शरीर हो है। इहां तर्क–जो उपजनेंतैं तीसरा समयविषैं सर्व जघन्य अवगाहना कैसैं संभवै है? तहां समाधान-जो उपजता ही प्रथम समयविषै तो निगोदिया जीवका शरीर लंबा बहुत चौडा थोडा ऐसा चौकोर हो है। बहुरि दूसरा समयविषैं लंबा चौडा समान ऐसा चौकोर हो है । बहुरि तीसरे समय कोण दूर करणेंकरि गोल आकार हो है तबही तिस शरीरकैं अवगाहनाका अल्प प्रमाण हो है । जातैं लंबा चौकोर सम चौकोरतैं गोल क्षेत्रफल स्तोक हो है। बहुरि तर्क- जो ऐसैं हैं तो ऋजुगतिकरि उपज्याहीकैं होइ ऐसैं कैसैं कह्या ? ताका समाधान–जीव परभवकौं गमनकरै ताकी विदिशाकरि वर्जित च्यारि दिशा वा अधः ऊर्ध्वविषै गमनक्रिया होइ है सो च्यारि प्रकार है-ऋजुगति १ पाणिमुक्ता गति २ लांगलगति ३ गोमूत्रिका गति ४ । तहां सूधा गमन होइ सो ऋजुगति है। जामैं वीचि एकवार मुडे सो पाणिमुक्ता गति है जामै वीच दोयवार मुडे सो लांगल गति है। जामैं वीच तीनवार मुडे सो गोमूत्रिका गति है। सो मुडनेविषैं जो विग्रह गति ताविषैं जीव

योगनिकी वृद्धिकरि युक्त हो है ताकरि शरीरकी अवगाहना भी वृद्धिरूप हो है। तातैं ऋजुगतिकरि उपज्या जीवकैं जघन्य अवगाहना कही सो सर्वजघन्य अवगाहनाका प्रमाण कहैं हैं—घनांगुल रूप जो प्रमाण ताका पल्यका असंख्यातवां भाग उगणीसवार, बहुरि आवलीका असंख्यातवां भाग नववार, बहुरि एक अधिक आवलीका असंख्यातवां भाग वाईसवार बहुरि संख्यातका भाग नववार इतने तौ भागहार जानने। बहुरि तिस घनांगुलका आवलीका असंख्यातवां भाग वाईसवार आवलीका असंख्यातवां भागका वाईसवार गुणकार जानने। तहां पूर्वोक्त भागहारनिकौं मांडि परस्पर गुणन किएं जेता प्रमाण आवै तितना भागहारका प्रमाण जानना। बहुरि वाईस जायगा आवलीका असंख्यात भागकौं मांडि परस्परगुणै जो प्रमाण आवै तितना गुणकारका प्रमाण जानना। तहां घनांगुलके प्रमाणकौं भागहारके प्रमाणका भाग दीएं अर गुणकारका प्रमाणकरि गुणै जो प्रमाण आवै तितना जघन्य अवगाहनाके प्रदेशनिका प्रमाण जानना ऐसैं ही आगै भी गुणकार भागहारका अनुक्रम जानना ॥ ९४ ॥ आगै इंद्रिय आश्रयकरि उत्कृष्ट अवगाहनानिका प्रमाण तिनिके स्वामीनिकौं निर्देश करैं हैं—

**साहियसहस्समेकं वारं कोसूणमेकमेक्कं च।**
**जोयणसहस्सदीहं पम्मे वियले महामच्छे ॥ ९५ ॥**

साधिकसहस्रमेकं द्वादश क्रोशोनमेकमेकं च।
योजनसहस्रदीर्घं पद्मे विकले महामत्स्ये ॥ ९५ ॥

जी० प्र०—एकेंद्रियेषु स्वयंभूरमणद्वीपमध्यवर्तिस्वयंप्रभाचलापरभागस्थितक्षेत्रोत्पन्नपद्मे साधिकसहस्रयोजनायामैकयोजनव्यासोत्कृष्टावगाहो भवति अस्य च व्यासः (यो०) १। त्रिगुणः १। ३ परिधिः। अयं च व्यासचतुर्थां $\frac{1}{4}$ हतः १। ३। $\frac{1}{4}$ क्षेत्रफलं। तच्च वेधेन १००० चतुर्भिरपव

इत द्वाविंशत्यतपाठाः क पुस्तके नोपलब्धः।

तिर्वैन गुणितं योजनात्मकं खातफलमेतावद्भवति ७५०। द्वींद्रियेषु तत्स्वयंभूरमणसमुद्रवर्तिशंखे द्वादशयोजनायामयोजनपंचचतुर्थांशोत्सेध ५/४ चतुर्योजनमुखव्यासोत्कृष्टावगाहो भवति। अस्य च व्यासः १२ तावद्गुणितः १४४ वदन ४ दल २ ऊन १४२ मुखार्द्धवर्ग ४ युतः १४६ द्विगुणः २९२ चतुर्भिर्भक्तः ७३ पंचगुणः ३६५ शंखखातफलं। त्रींद्रियेषु स्वयंभूरमणद्वीपापरभागवर्तिकर्मभूमिप्रतिबद्धक्षेत्रे रक्तवृश्चिक-जीवे योजनत्रिचतुर्भागायाम ३/४ तदष्टमांशव्यास ३/३२ तदर्द्धोत्सेध ३/६४ उत्कृष्टावगाहोऽस्ति अस्य च भुजकोटिवधात् प्रजायते क्षेत्रफलं ३/४ ३/३२ तच्च वेधगुणं ३/४ । ३/३२ । ३/६४ घनफलं भवति २७/८१९२। चतुरिंद्रियेषु स्वयंभूरमणद्वीपापरभागकर्मभूमिप्रतिबद्धक्षेत्रवर्तिभ्रमरे एकयोजनायामतत्त्रिचतुर्भागव्यास ३/४ अर्धयोजनोत्सेध १/२ उत्कृष्टावगाहोऽस्ति। अस्य च भुजकोटीत्यादिनानीतघनफलं ३/८ योजनत्र्यष्टमभागो भवति। पंचेंद्रियेषु स्वयंभूरमणसमुद्रमध्यवर्तिमहामत्स्ये सहस्रयोजनायामपंचाशत्योजनव्यासपंचाशदग्रद्विशतयोजनोत्सेधोत्कृष्टावगाहोऽस्ति। अस्य च भुजकोटीत्यादिनानीतघनफलं १२५०००००० सार्धद्वादशकोटियोजनमात्रं भवति। एतान्युक्तघनफलानि प्रदेशीकृतानि त-वैकेंद्रियस्य चतुस्संख्यातगुणितघनांगुलमात्रं ६ १ १ १ १ द्वींद्रियस्य त्रिसंख्यातगुणितघनांगुलमात्रं ६ १ १ १ त्रींद्रियस्य एकसंख्यातगुणितघनांगुलमात्रं ६ १ चतुरिंद्रियस्य द्विसंख्यातगुणितघनांगुलमात्र ६ १ १। पंचेंद्रियस्य पंचसंख्यातगुणितघनांगुलमात्रं भवति ६ १ १ १ १ १ ॥९५॥ अथ पर्याप्तद्वींद्रियादीनां जघन्यावगाहप्रमाण तत्स्वामिनिर्देशं चाह—

मं०प्र०-बादरपर्याप्तकैकद्वित्रिचतुःपंचेंद्रियेषु यथाक्रम पद्मे, विकलेंद्रियेषु शंखग्रैष्मीभ्रमरेषु महामत्स्ये च दैर्घ्य--आयाम. कथ्यते तद्यथा—पद्मे साधिकं योजनानामेकं सहस्र पुष्पोत्सेधेन अधिकस्य सहस्रयोजनायामस्य एकयोजनविष्कंभस्य वृत्तस्य तन्नालस्य संभवात्। तस्य क्षेत्रफलं 'वासोतिगुणो' इत्यादिना गाथासूत्रमार्गेणानेतव्य। तद्घनफलं योजनानि ७५० प्रदेशा. ६ १ १ १ १। शंखे द्वादशयोजनान्यायामः। चत्वारि मुखव्यास.। उदयः पंचचतुर्भाग. 'आयामेकदीत्यादिगाथासूत्रमार्गेण नीतं घनफल ३६५। ६ १ १ १। ग्रैष्म्यां-ग्रीष्मकालभवे त्रसविशेषे क्रोशोनमेकयोजनमायामः। आयामाष्टमभागो व्यासः, व्यासदलं वेधः। भुजकोटिवेधगुणनादानीत चतुरस्रघनफलं २७/८१९२। ६ १। भ्रमरे एकं योजनमायामः। त्रिचतुर्भागो व्यासः। योजनार्धं वेधः। तस्यापि भुजकोटिवेधगणनादानीत घनफलं ३/८ ६ १ १ महामत्स्ये प्रागुक्ता आयामव्यासोदयाः। तस्यापि भुजकोटिवेधगुणनादानीतं घनफलं १२५०००००० ६ १ १ १ १ १ ॥ ९५ ॥

सं॰ चं॰—एकेंद्रियनिविषैं स्वयंभूरमण द्वीपके मध्यवर्ती जो स्वयंप्रभ नामा पर्वत ताका परला भाग संबंधी कर्मभूमि रूप क्षेत्रविषैं उपज्या ऐसा जो कमल तींहिविषैं किछूअधिक एकहजार योजन लंबा एक योजन चौडा ऐसा उत्कृष्ट अवगाह है। याका क्षेत्रफल कहिए है-समान प्रमाण लीए खंडकल्पैं जितने खंड होंइ तिस प्रमाण-का नाम क्षेत्रफल है । तहां ऊंचा लंबा चौडा क्षेत्रका ग्रहण जहां होइ तहां घनक्षेत्रफल वा खातक्षेत्रफल जा-नना। बहुरि जहां ऊंचापणाकी विवक्षा न होइ अर लंबा चौडा ही का ग्रहण होइ तहां प्रतरक्षेत्रफल वा वर्ग क्षेत्रफल जानना। बहुरि जहां ऊंचा चौडापणाकी विवक्षा न होइ एक लंबाईका ही ग्रहण होइ तहां श्रेणी क्षेत्र-फल जानना। सो इहां खात क्षेत्रफल कहिए है—तहां कमल गोल है तातैं गोल क्षेत्रका क्षेत्रफल साधनरूप कर-ण सूत्र करि साधिए है—

वासोत्तिगुणो परिही वासचउत्थाहदो दु खेत्तफलं।
खेत्तफलं वेहगुणं खादफलं होइ सव्वत्थ ॥

याका अर्थ—व्यास जो चौडाईका प्रमाण तातैं तिगुणा गिरदभ्रमणरूप जो परिधि ताका प्रमाण हो है। बहुरि परिधिकौं व्यासका चौथा भागकरि गुणैं प्रतररूप क्षेत्रफल हो है। बहुरि याकौं वेध जो उंचाईका प्रमाण ताकरिगुणैं सर्वत्र खात फल हो है सो इहां कमलविषैं व्यास एक योजन ताकौं तिगुणां कीएं परिधि तीन योजन हो है। याकौं व्यासका चौथा भाग पाव योजनकरि गुणैं प्रतर क्षेत्रफल पौंण योजन हो है। याकौं वेध हजार योजनकरि गुणैं च्यारिकरि अपवर्तन कीएं योजन स्वरूप कमलका क्षेत्र फल साड़ा सातसौ योजन प्रमाण हो है। भावार्थ—एक एक योजन लंबा चौड़ा ऊंचा खंड कल्पैं इतने खंड हो हैं। बहुरि द्वींद्रियनिविषैं तींहि स्वयंभू-रमण समुद्रवर्ती शंखविषैं बारह योजन लंबा, योजनका पांच चौथा भाग प्रमाण चौडा, च्यारि योजन मुख व्या-सकरि युक्त ऐसा उत्कृष्ट अवगाह है। याका क्षेत्रफल करण सूत्रकरि साधिए है-

व्यासस्तावद्गुणितो वदनदलोनो मुखार्धवर्गयुतः।

द्विगुणश्चतुर्भिर्भक्तः पंचगुणः शंखखातफलं ॥

याका अर्थ--प्रथम व्यासकौं व्यासकरि गुणिए तामें मुखका आधा प्रमाण घटाइ तामें मुखका आधा प्रमाणका वर्ग जोडिए ताका दूणा करिए, ताकौं च्यारिका भाग दीजिए ताकौं पांचगुणां करिए ऐसें करते शंख क्षेत्रका खातफल हो है। सो इहां व्यास वारह योजनकौं याही करि गुणें एकसौ चवालीस होइ। यामें मुखका आधाप्रमाण दोय घटाएं एकसौ व्यालीस होइ। यामें मुखका आधा प्रमाणका वर्ग च्यारि जोडें एकसौ छियालीस होइ याकौं दूणा कीएं दोयसै वाणवे होइ। याकौं च्यारिका भाग दीए तेहत्तरि होइ। याकौं पांचकरि गुणें तीनसौ पैंसठि योजनप्रमाण शंखका क्षेत्र फल होहै। बहुरि त्रींद्रियनिविषैं स्वयंभूरमण द्वीपका परला भाग विषैं जो कर्मभूमि संबंधी क्षेत्र है तहां रक्त वीछू जीव है। तीहि विषैं योजनका तीन चौथा भाग प्रमाण ३/४ लंबा लंबाईके आठवें भाग ३/३२ चौडा, चौडाईतैं आधा ३/६४ ऊंचा ऐसा उत्कृष्ट अवगाह है। यहु क्षेत्र आयत चतुरस्र है लंबाई लीएं चौकोर है सो याका प्रतर क्षेत्रफल भुज कोटि वध तैं होइ है। सन्मुख दोय दिशानिविषैं कोई एक दिशा विषैं जितना प्रमाण ताका नाम भुज है। बहुरि अन्य दोय दिशाविषैं कोइ एक दिशाविषैं जितना प्रमाण ताका नाम कोटि है। यहु अर्थ-जो लंबाई चौडाई विषैं एकका नाम भुज एकका नाम कोटि जानना। इनिका वध कहिए परस्पर गुणना तीहि थकी प्रतरक्षेत्र फल हो है सो इहां लंबाई तीन चौथा भाग चौडाई तीन वतीसवां भाग इनिका परस्पर गुणें नवका एकसौ अठाईसवां भाग ९/१२८ भया बहुरि याकौं वेध उंचाईका प्रमाण तीनिका चौसाठिवां भाग ताकरि गुणें सताईस योजनका इक्यासीसैं वाणवैंका भाग दीए एकभाग २७/८१९२ प्रमाण रक्तवीछूका घन क्षेत्रफल हो है। बहुरि चतुरिंद्रियनिविषैं स्वयंभूरमण द्वीपका परला भागवर्ती कर्मभूमि संबंधी क्षेत्रविषैं भ्रमर हो है सो तिहिविषैं एक योजन लांबा पौन योजन ३/४ चौडा आधा योजन १/२ ऊंचा उत्कृष्ट अवगाह है। ताकौं भुज कोटि वध-एक योजन अर तीन योजनका चौथा भाग अर एक योजनका दूसरा भाग इनिकौं परस्पर गुणें तीन योजनका आठवां भाग ३/८ प्रमाण घन क्षेत्रफल हो है। बहुरि पंचेंद्रियनिविषैं

स्वयंभूरमण समुद्रके मध्यवर्ती महामच्छ तींहिविषैं हजार १००० योजन लांबा पांचसे ५०० योजन चौडा पचास अधिक दोयसे २५० योजन ऊंचा उत्कृष्ट अवगाह है। तहां भुज कोटि वेध हजार १००० अर पांचसे ५०० अर अढाईसे २५० योजन प्रमाण इनिकों परस्पर गुणें साढे वारा कोडि १२५०००००० योजन प्रमाण घन फल हो है। ऐसें कहे जे योजन रूप घनफल तिनके प्रदेशनिका प्रमाण कीएं एकेंद्रियके ग्यारिवार संख्यातगुणां घनांगुल प्रमाण द्वींद्रियकैं तीनवार संख्यातगुणा घनांगुल प्रमाण, त्रींद्रियके एकवार संख्यातगुणां घनांगुल प्रमाण चतुरिंद्रियकैं दोयवार संख्यातगुणा घनांगुल प्रमाण पंचेंद्रियके पांचवार संख्यातगुणां घनांगुल प्रमाण प्रदेशनिका उत्कृष्ट अवगाहनाविषैं हो है ॥ ९५ ॥ आगैं पर्याप्त द्वींद्रियादिक जीवनिका जघन्य अवगाहनाका प्रमाण अर ताका स्वामीका निर्देशकौं कहै हैं–

## वितिचपपुण्णजहण्णं अणुंधरीकुंथुकाणमच्छीसु ।
## सिच्छयमच्छे विंदंगुलसंखं संखगुणिदकमा ॥ ९६ ॥

द्वित्रिचपपूर्णजघन्यमनुंधरीकुंथुकाणमक्षिकासु ।
सिक्थकमत्स्ये वृंदांगुलसंख्यं संख्यगुणितक्रमाः ॥ ९६ ॥

जी० प्र०—द्वित्रिचतुःपंचेंद्रियपर्याप्तकेषु यथासंख्यं अनुंधरीकुंथुकाणमक्षिकासिक्थकमत्स्यजीवेषु जघन्यावगाहविशिष्टशरीरावष्टब्धप्रदेशप्रमाणं वृंदांगुलसंख्यातैकभागमादिं कृत्वा संख्यातगुणितक्रमेण भवति। ६ द्वि ६ त्रि ६ च ६ पं। एषामिदानीं व्यासायामोत्सेधानामुपदेशो नास्ति इति घनफलमेवोक्तं ॥ ९६ ॥ अथ सर्वजघन्यावगाहनादीनां उत्कृष्टावगाहनपर्यंतानां शरीरावगाहनविकल्पानां स्वाम्यल्पबहुत्वगुणकारान् गाथापंचकेन प्रदर्शयति—

(६ द्वि: ११११, ६ त्रि: १११, ६ च: ११, ६ पं: १)

मं० प्र०—वि–ति–च–पेसु द्वित्रिचतुःपंचेंद्रियेषु पर्याप्तेषु अनुंधरीकुंथुकाणमक्षीषु सिक्थकमत्स्ये च जघन्यमवगाहनं घनांगुलसंख्यातभागप्रमितं भ-

वति तत्रानुंधरीजघन्यावगाहनात् कुंथ्वाद्युत्तरजघन्यावगाहनानि संख्यातगुणानि संत्यपि सर्वाणि घनांगुलसंख्यातभागप्रमितान्येव ृ । ९ । गुणकारभाग-
६ । ६ । ६ ।
हारापवर्तनेन ृ । ८ । ृ । ७ । ृ । ६ । हारा गुणयित्वा लघूक्ताः पूर्वाचार्यैः ृ ृ ृ ृ । ृ ृ ृ । ृ ृ । ृ ॥ ९६ ॥

सं० चं०--पर्याप्त द्वींद्रियविषैं अनुंधरी, त्रींद्रियनिविषैं कुंथु, चतुरिंद्रियनिविषैं काणमाक्षिका, पंचेंद्रियनिविषैं तंदुलमच्छ इनि जीवनिविषैं जघन्य अवगाहना विशेष धरै जो शरीर ताकरि रोक्या हूवा क्षेत्रका प्रदेशनिका प्रमाण घनांगुलका संख्यातवां भागतैं लगाइ संख्यातगुणा अनुक्रमकरि जानना। तहां द्वींद्रियविषैं च्यारि वार त्रींद्रियविषैं तीनवार चतुरिंद्रियविषैं दोयवार पंचेंद्रियविषै एकबार संख्यातका भाग दीजिए ऐसा घनांगुल मात्र पर्याप्तनिका जघन्य अवगाहनाके प्रदेशनिका प्रमाण जानना। इनिका अब चौडाई लंबाई उंचाईका उपदेश इहां नाहीं है। घन फल कीएं जो प्रदेशनिका प्रमाण भया सो इहां कह्या है ॥ ९६ ॥ आगैं सर्वतैं जघन्य अवगाहनाकौं आदि देकरि उत्कृष्ट अवगाहना पर्यंत शरीरकी अवगाहनाके भेद तिनिका स्वामी वा अल्पबहुत्व वा क्रमतैं गुणकार तिनिकौं गाथा पंचकरि इहां दिखावै हैं—

**सुहमणिवातेआभूवातेआपुणिपदिट्ठिदं इदरं।**
**बितिचपमादिल्लाणं एयाराणं तिसेढीय ॥ ९७ ॥**

सूक्ष्मनिवातेआभूवातेअप्निप्रतिष्ठितामितरत्।
द्वित्रिचपमाद्यानामेकादशानां त्रिश्रेणयः ॥ ९७ ॥

जी० प्र०—अत्र नामैकदेशो नाम्नि प्रवर्तत इति लघुकरणन्यायमाश्रित्य निवेत्यादिवर्णैर्निगोदवायुकायिकादयो जीवा गृह्यंते। निगोदवायुतेजोऽभूकायिकनामानः पच सूक्ष्माः प्रथमकोष्ठे भवंति। पुनः वायुतेजोऽप्पृथ्वीकायिकनिगोदप्रतिष्ठितप्रत्येकनामानः षट् वादरास्तिर्यक्माागवत् क्रमेण द्वितीयकोष्ठे भवंति। पुनरुक्ततासामर्थ्यात् एते वादरा एवेति ज्ञातव्यं। पुनरप्रतिष्ठितप्रत्येकद्वित्रिचतुःपंचेंद्रिय

... आद्यानां ... एकादशानामत्र ... ततः पंक्तयः कर्तव्याः । तत्रैकैक- पंक्तेः कोष्ठद्वयं द्वयं ज्ञातव्यं ।

मं० प्र०----सूक्ष्माणां--निगोदवायुतेजोभूकायिकानां, वादराणां वायुतेजोऽप्पृथ्वीकायिकानां निगोदानां प्रतिष्ठितप्रत्येकशरीराणां च इतरेषामप्रतिष्ठित प्रत्येकशरीराणा द्वित्रिचतु पर्चेंद्रियाणा एवं षोडशानामपर्याप्तकाना एका पंक्तिः कर्तव्या । तत्र आद्याना निगोदादिप्रतिष्ठितप्रत्येकपर्यंतानां एकादशाना अधोधस्तिस्रः पंक्तयो लेखितव्याः ॥ ९७ ॥

सं० चं०--इहां नामका एकदेश सो संपूर्ण नामविषैं वर्ते है। इस लघुकरण न्यायका आश्रयकरि गाथाविषैं कह्या हूवा णि वा इत्यादि आदि अक्षरनिकरि निगोदवायुकायिक आदि जीवनिका ग्रहण करना। सो इहां अवगाहनाके भेद जाननेके अर्थि एक यंत्र करना । तहां सूक्ष्मनिगोदिया १ सूक्ष्मवायुकायिक २ सूक्ष्म तेजःकायिक ३ सूक्ष्म अप्कायिक ४ सूक्ष्म पृथ्वीकायिक ५ नाम धारक पांच सूक्ष्म तिस यंत्रके प्रथम कोठेविषैं लिखे हो हैं। बहुरि ताकी बराबर आगैं वादर वायु १ तेज २ जल ३ पृथ्वी ४ निगोद ५ प्रतिष्ठित प्रत्येक ६ नामधारक ये छह वादर पूर्ववत् अनुक्रमकरि दूसरा कोठाविषैं लिखे हो हैं। पहिलैं जिनिके नाम लीए तिनहीके फेर लीए इस प्रयोजनकी समर्थतातैं प्रथम कोठाविषैं सूक्ष्म कहे थे इहां दूसरा कोठाविषैं वादर ही हैं ऐसा जानना। बहुरि ताके आगैं अप्रतिष्ठित प्रत्येक १ द्वींद्रिय २ त्रींद्रिय ३ चतुरिंद्रिय ४ पंचेंद्रिय ५ नामधारक ए पांच वादर तीसरा कोठाविषैं लिखे हो हैं। इनि सोलहौंविषैं आदिके सूक्ष्मनिगोदादिक ग्यारह तिनिकैं आगैं तीन पंक्ति करनी तहां एक एक पक्तिविषैं दोय दोय कोठे जानने । कैसैं ? सो कहिए है—पूर्वैं तीसरा कोठा कह्या था ताके आगैं दोय कोठे करने। तिनिविषैं जैसैं पहला दूसरा कोठाविषैं पांच सूक्ष्म छह वादर लिखे थे तैसैं इहां भी लिखे हो हैं। बहुरि तिनि दोऊ कोठानिके नीचैं पंक्तिविषैं दोय कोठे और करने। तहां भी तैसैं ही पांच सूक्ष्म छह वादर लिखे हो हैं। बहुरि तिनके नीचै पंक्तिविषैं दोय कोठे और करने तहां भी तैसैं ही पांच सूक्ष्म छह वादर लिखे हो हैं ऐसैं सूक्ष्म निगोदादि ग्यारह स्थानकानिका दोय दोय कोठानिकरि संयुक्त तीन पंक्ति भई। याप्रकार

ऊपरिकी पंक्तिविषै पांच कोठे तातै नीचली पंक्तिविषै दोय कोठे तातै नीचली पंक्तिविषै दोय कोठे तिनि मिलि नव कोठे भए ॥ ९७ ॥

## अपदिट्ठिदपत्तेयं वितिचपतिचबिअपदिट्ठिदं सयलं ।
## तिचविअपदिट्ठिदं च य सयलं वादालगुणिदकमा ॥ ९८ ॥

अप्रतिष्ठितप्रत्येकं द्वित्रिचपत्रिचद्व्यप्रतिष्ठितं सकलं ।
त्रिचद्व्यप्रतिष्ठितं च च सकलं द्वाचत्वारिंशद्गुणितक्रमाः ॥ ९८ ॥

जी० प्र०---पुनस्तत्पंक्तित्रयस्याग्रे दशमकोष्ठे अप्रतिष्ठितप्रत्येकद्वित्रिचतुःपंचेंद्रियनामानः पंचवादरा भवंति । तदग्रे एकादशे कोष्ठे त्रिचतुर्द्वींद्रियाप्रतिष्ठितप्रत्येकसकलेंद्रियनामानः पंच वादरा भवंति। तदग्रे द्वादशे कोष्ठे त्रिचतुर्द्व्यप्रतिष्ठितप्रत्येकसकलेंद्रियनामानः पंचवादरा भवंति एतेषु चतुष्षष्टिजीवसमासावगाहनविकल्पेषु उपरितनपंक्तिगतद्वाचत्वारिंज्जीवसमासावगाहनविकल्पा गुणितक्रमा भवंति। तदन्ये तु 'सेढिगया अहिया तत्थेकपडिभागो' इति सूचितं जात ॥ ९८ ॥

म० प्र०---अप्रतिष्ठितप्रत्येकद्वित्रिचतुःपचेंद्रियाणा पर्याप्तकानामेका पंक्ति कर्तव्या । पुनरग्रे त्रिचतुर्द्वींद्रियाप्रातिष्ठितप्रत्येकपचेंद्रियाणामपर्याप्तकानामेका पंक्तिः कर्तव्या । पुनरग्रे त्रिचतुर्द्वींद्रियाप्रतिष्ठितप्रत्येकपचेंद्रियाणा पर्याप्तकानामेका पक्तिः कर्तव्या । तत्र प्रथमानां षोडशानां पुनः पंक्तित्रये, उपरितनपक्तिगताना एकादशानां पुनरग्रपक्तित्रयगताना पचदशाना च जीवानां शरीरावगाहनानि द्वाचत्वारिंशद्गुणितक्रमाणि । अवशिष्टाधःपंक्तिद्वयगतजीवाना द्वाविंशतिः शरीरावगाहनानि आवश्यसंख्यातभागाधिकानीति ज्ञातव्यानि ॥ ९८ ॥

सं० चं०—बहुरि तिनि तीनि पंक्तिनिके आगैं ऊपर पंक्तिविषैं दशवां कोठा करना तींहिविषैं अप्रतिष्ठित प्रत्येक १ द्वींद्रिय २ त्रींद्रिय ३ चतुरिंद्रिय ४ पंचेंद्रिय ५ नाम धारक पांच वादर लिखे हो हैं। बहुरि ताके आगैं ग्यारहह्वां कोठाविषैं त्रींद्रिय १ चौइंद्रिय २ वेंद्रिय ३ अप्रतिष्ठित प्रत्येक वनस्पती ४ पंचेंद्रिय ५ नाम धारक पांच वादर लिखे हो हैं। बहुरि ताके आगैं वारहवां कोठाविषैं त्रींद्रिय १ चतुरिंद्रिय २ द्वींद्रिय ३ अप्रतिष्ठित प्रत्येक वनस्पती ४ पंचेंद्रिय ५ नाम धारक पांच वादर लिखे हो हैं। ऐसैं ए चौसठि जीवसमासनिकी अवगाह-

नाके भेद हैं। तिनिविषै ऊपरिकी पंक्तिनिके आठ कोठानिविषै प्राप्त ऐसे जे त्रियालीस जीवसमास तिनकी अवगाहनाके स्थान ते गुणितक्रम हैं अनुक्रमतैं पूर्व स्थानकौं यथासंभव गुणकार करि गुणे उत्तरस्थान हो हैं। बहुरि तातैं इनि नीचैकी दोय पंक्तिनिविषै प्राप्त भए वाईस स्थान ते 'सेढिगया अहिया तत्थेकपडिभागो' इस वचनतैं अधिक रूप हैं। तहां एक प्रतिभागका अधिकपनां जानना। पूर्वस्थानकौं संभवता भागहारका भाग देइ एक भागकौं पूर्वस्थानविषै अधिक कीएं उत्तर स्थान हो है ऐसा सूचन कीया है॥ ९८ ॥

## अवरमपुण्णं पढमं सोलं पुण पढमविदियतदियोली।
## पुण्णिदरपुण्णियाणं जहण्णमुक्कस्समुक्कस्सं॥ ९९ ॥

अवरमपूर्णं प्रथमे षोडश पुनः प्रथमद्वितीयतृतीयावलिः।
पूर्णेतरपूर्णानां जघन्यमुत्कृष्टमुत्कृष्टं ॥ ९९ ॥

जी० प्र०——प्रथमकोष्ठत्रयगतषोडशजीवसमासानां अपर्याप्तजघन्यावगाहा इति ज्ञातव्याः पुनरुपरि प्रथमद्वितीयतृतीयपंक्तिषु एकैकस्यां पंक्तौ द्वौ द्वौ कोष्ठौ यथाक्रमं पर्याप्तापर्याप्तपर्याप्ता इति त्रिविधजीवानां जघन्यमुत्कृष्टमुत्कृष्टं चावगाहनं स्यात्। तथाहि–प्रथमपंक्तौ सूक्ष्माः पंच बादराः षडित्येकादशानां पर्याप्तजीवसमासानां जघन्यावगाहनानि संति। तथा द्वितीयपंक्तिगततदेकादशापर्याप्तजीवसमासानामुत्कृष्टावगाहनस्थानानि संति। तथा तृतीयपंक्तिगतैकादशपर्याप्तजीवसमासानामुत्कृष्टावगाहनस्थानानि संतीत्ययं विभागो ज्ञातव्यः ॥ ९९

मं० प्र०——प्रथमपांक्तिगतानां षोडशानां सूक्ष्मनिगोदादीनां पचेंद्रियपर्यंतानां अपर्याप्तजीवानां अवगाहनानि जघन्यानि पुनरधोऽधः पंक्तित्रये प्रथमपांक्तिगतानां पर्याप्तकजविाना एकादशानां अवगाहनानि जघन्यानि द्वितीयपंक्तिगतानामपर्याप्तकजीवानामेकादशानामवगाहनान्युत्कृष्टानि। तृतीयपंक्तिगताना पर्याप्तकजीवानामेकादशानामवगाहनानि उत्कृष्टानि ॥ ९९ ॥

सं० चं०—पहले तीन कोठेनिविषै प्राप्त जे सोलह जीवसमास तिनिकी अपर्याप्तविषै जघन्य अवगाहना जाननी। बहुरि आगै ऊपरितैं पहली दूसरी तीसरी पंक्तिनिविषै एक एक पंक्तिविषै दोय दोय कोठे कीए ते क्रमतैं पर्याप्त अपर्याप्त पर्याप्त रूप तीनप्रकार जीवकी जघन्य उत्कृष्ट अर उत्कृष्ट अवगाहना है। याका अर्थ यहु–जो

ऊपरितैं प्रथम पंक्तिविषैं दोय दोय कोठानिविषैं पांच सूक्ष्म छह वादर इनि ग्यारह पर्याप्त जीवसमासनिकी जघन्य अवगाहनाके स्थान हैं। तैसैं ही नीचैं दूसरी पंक्तिविषैं प्राप्त तिनि ग्यारह अपर्याप्त जीवसमासनिकी उत्कृष्ट अवगाहनाके स्थान हैं। तैसैं ही तीसरी पंक्तिविषैं प्राप्त तिनि ग्यारह पर्याप्त जीव समासनिकी उत्कृष्ट अवगाहनाके स्थान हैं ॥ ९९ ॥

**पुण्णजहण्णं तत्तोवरं अपुण्णस्स पुण्णउक्कस्सं।**
**वीपुण्णजहण्णोत्ति असंखं संखं गुणं तत्तो ॥ १०० ॥**

पूर्णजघन्यं ततोवरमपूर्णस्य पूर्णोत्कृष्टं।
द्विपूर्णजघन्यमिति असंख्यं संख्यं गुणं ततः ॥ १०० ॥

जी० प्र०—तदग्रे दशमे कोष्ठे पर्याप्तकपंचजीवसमासानां जघन्यावगाहनस्थानानि भवंति। ततस्तदग्रे एकादशे कोष्ठे अपर्याप्तकपंचजीवसमासानामुत्कृष्टावगाहनस्थानानि भवंति। तदग्रे द्वादशे कोष्ठे पर्याप्तकपंचजीवसमासानां उत्कृष्टावगाहनस्थानानि भवंति। तत्र दशमकोष्ठगतवादरपर्याप्तद्वींद्रियजघन्यावगाहनपर्यंतानि एकान्नत्रिंशदवगाहनानि असंख्यातगुणितक्रमाणि। तदग्रे वादरपर्याप्तसकलेंद्रियपर्यंतानि त्रयोदश तु संख्यातगुणितक्रमानीति ज्ञातव्यानि ॥ १०० ॥

मं० प्र०—ततः अग्रे प्रथमपंक्तिगतानामप्रतिष्ठितप्रत्येकादीनां पचानां पर्याप्तकजीवानां अवगाहनानि जघन्यानि। ततः द्वितीयाग्रपंक्तिगतानां त्रींद्रियादीना पंचानामपर्याप्तकजीवानामवगाहनान्युत्कृष्टानि। ततस्तृतीयाग्रपंक्तिगतानां त्रींद्रियादीना पंचाना पर्याप्तकजीवाना अवगाहनानि उत्कृष्टानि। सूक्ष्मनिगोदलब्ध्यपर्याप्तकजघन्यशरीरावगाहनादारभ्य पर्याप्तकद्वींद्रियजघन्यशरीरावगाहनपर्यंतानि एकोनत्रिंशच्छरीरावगाहनानि असंख्येयगुणानि। ततस्त्रींद्रियादिपंचेंद्रियपर्यंतानां जीवानां त्रयोदशशरीरावगाहनानि सख्येयगुणानि ज्ञातव्यानि ॥ १०० ॥

सं० चं०—ताके आगैं दशवां कोठाविषैं प्राप्त पर्याप्त पांच जीवसमासनिकी जघन्य अवगाहनाके स्थान हैं। बहुरि तहांतैं आगैं ग्यारह्वां कोठाविषैं अपर्याप्त पांच जीवसमासनिकी उत्कृष्ट अवगाहनाके स्थान हैं। बहुरि ताके आगे वारह्वां कोठाविषैं पर्याप्त पंच जीवसमासनिकी उत्कृष्ट अवगाहनाके स्थान हैं। ऐसैं ए कहे स्थान ति-

निविषैं प्रथम कोठाविषैं प्राप्त सूक्ष्म अपर्याप्तनिगोदिया जीवकी जघन्य अवगाहनातैं लगाइ दशवां कोठाविषै प्राप्त वादरपर्याप्त द्वींद्रियजीवकी जघन्य अवगाहनापर्यंत ऊपरिकी पंक्तिसंबंधी गुणतीस अवगाहनाके स्थान ते असंख्यात असंख्यातगुणा क्रम लीएं है। बहुरि तिसतैं आगै वादरपर्याप्त पंचेंद्रियकी उत्कृष्ट अवगाहनापर्यंत तेरह अवगाहनाके स्थान ते संख्यातगुणां संख्यातगुणां अनुक्रम लीए हैं ऐसा जानना।

## सुहमेदरगुणगारो आवलिपल्ला असंखभागो दु।
## सट्ठाणे सेढिगया अहिया तत्थेकपडिभागो ॥ १०१ ॥

सूक्ष्मेतरगुणकार आवलिपल्यासंख्येयभागस्तु।
स्वस्थाने श्रेणिगता अधिकास्तत्रैकप्रतिभागः ॥ १०१ ॥

जी० प्र०—अत्र सूक्ष्मजीवावगाहस्थानानि आवल्यसंख्येयभागगुणितानि। वादरजीवावगाहनस्थानानि पल्यासंख्यातभागगुणितानि च स्वस्थाने संतीस्यसंख्यातगुणाकारविभागो द्रष्टव्यः। अधस्तनद्वितीयतृतीयपंक्तिगतानि अवगाहनस्थानानि अधिकक्रमाणि स्युः। तत्र सूक्ष्मनिगोदपर्याप्तोत्कृष्टावगाहनस्थानादीनि उत्तरोत्तराणि पूर्वपूर्वावगाहनस्थानादावल्यसंख्यातैकभागमात्राधिकानीत्यर्थः। अधिकागमननिमित्तं भागहारः प्रतिभागहारः स चावल्यसंख्येयभागः ८ परमगुरूपदेशागतो ज्ञातव्यः। अत्रोक्तावगाहनस्थानानां गुणकारविधान-
a

मुच्यते तद्यथा—सूक्ष्मनिगोदलब्ध्यपर्याप्तकस्य जघन्यावगाहनस्थानमेकान्नविंशतिवारपल्यासंख्येयभागनववारावल्यसंख्येयभागद्वाविंशतिवाररूपाधिकावल्यसंख्येयभागनववारसंख्यातभक्तद्वाविंशतिवारावल्यसंख्येयभागगुणितघनांगुलप्रमाणमादिभूतं संस्थाप्य

६ । ८ । २२
a

प । १९ । ८ । ९ । ८ । २२ । ७ । ९ अतः सूक्ष्मापर्याप्तवायुकायिकजीवस्य जघन्यमवगाहनस्थानमावल्यसंख्येयभागगुणितं
a a a

गतिर्नैरतगतिः । अथ वा निर्गतोऽयः पुण्यं एभ्यः ते निरयाः तेषां गतिः निरयगतिः इति व्युत्पत्तिभिरपि नारकगतिलक्षणं कथितं ॥ १४७ ॥
अथ तिर्यग्गतिस्वरूपं निरूपयति—

म० प्र०—यतः कारणात् नित्यं-अनवरतं द्रव्ये-शरीरेंद्रियविषयादौ, क्षेत्रे च उत्पत्तिपतनोपवेशनशयनस्थानाविहारभूम्यादौ, काले उत्पत्तिपर्याप्तिनिष्पत्तिपतनभोजनशयनविहारकालादौ, भावे च-पर्याये उत्पन्नपर्याप्तभोक्तृशयितृविहर्तृत्वाद्यवस्थायां च ये न रमंते-प्रीतिं न भजते-न सुल्यंति अन्योन्यैश्च परस्परं च न रमंते तस्माच्चे नरताः, नरता एव नारताः स्वार्थिकाण्विधानात् इति भणिताः पूर्वसूरिभिः । अत्रैकश्चशब्दः परस्परसमुच्चयार्थः । इतरश्चशब्दः अनुक्तार्थसमुच्चयार्थः । तद्यथा—गतिनामकर्मोत्तरोत्तरप्रकृतिविकल्पो नारकगतिनामकर्म, तदुदयाज्जाताः नारकाः । अथवा नरान् कायंति कदर्थयंति क्लेशयंतीति नरकाणि अधोभूमिगतसीमंतादिविलानि तेषु भवाः नारकाः, सहजशारीरमानसागंतुकक्षेत्रजैर्दुःखैर्निरंतरसंक्लेशितपरिणामाः बह्वारंभपरिग्रहत्वाद्यार्तरौद्रध्यानार्जितनारकायुःकर्मोदयलब्धनारकभववृत्तयः सप्ताधोभूमिगताः पंचेंद्रियजीवाः नारका इति संक्षेपतो ज्ञातव्याः । विस्तरतस्त्रिलोकसारादिकरणानुयोगशास्त्रेषु द्रष्टव्याः ॥ १४७ ॥

सं० प्र०—जा कारणतैं जे जीव द्रव्य क्षेत्र काल भावविषैं अथवा परस्परमैं जहां क्रीडा न करैं तहां नरक संबंधी अन्न पानादिक वस्तु सो द्रव्य कहिए, बहुरि तहांकी पृथ्वी सो क्षेत्र कहिए। बहुरि तिस गतिसंबंधी प्रथमसमयतैं लगाइ अपना आयुपर्यंत जो काल सो काल कहिए। तिनि जीवनिकैं चैतन्यरूप परिणाम सो भाव कहिए इनि च्यारोंनिविषैं जे कहूं रति न मानैं बहुरि अन्यभवसंबंधी वैरकरि इस भवमें उपजे क्रोधादिक तिनिकरि नवीन पुराणे नारकी कबहूं परस्पर रमैं नाहीं है। तातैं नाहीं है रति कहिए प्रीतिरूप कबहीं तातैं 'नरताः' कहिए नरत तेई नारत जानने। जातैं स्वार्थविषैं अण् प्रत्ययका विधान है। तिनकी जो गति सो नारतगति जानना। अथवा नरकविषैं उपजैं ते नारक तिनिकी जो गति सो नारक गति जाननी। अथवा हिंसादिक आचरणविषैं निरता कहिए प्रवर्तैं अैसे जो निरत तिनकी जो गति सो निरतगति जाननी। अथवा नर कहिए प्राणी तिनिकौं कायति कहिए पीडैं दुःख देंइ अैसे जे नरक कहिए पापकर्म ताका अपत्य कहिए तींहिका उदयतैं निपजे जे नारक तिनकी जो गति सो नारकगति जाननी। अथवा द्रव्य क्षेत्र काल भावनिविषैं वा परस्पर रत कहिए प्रीतिरूप नाहीं ते नरत तिनकी जो गति सो नरतगति जाननी। निर्गत कहिए गया है अयः कहिए पुण्यकर्म जिनितैं अैसे जे

निरय तिनकी जो गति सो निरय गति जाननी। ऐसैं निरुक्तिकरि नारकगतिका लक्षण कह्या ॥१४७॥ आगैं तिर्यंचगतिका स्वरूप कहै हैं–

**तिरियंति कुडिलभावं सुविउलसंण्णा णिगिट्ठिमण्णाणा।**
**अच्चंतपावबहुला तह्मा तेरिच्छया भणिया ॥ १४८ ॥**

तिरोंचंति कुटिलभावं सुविवृतसंज्ञा निकृष्टमज्ञानाः।
अत्यंतपापबहुलास्तस्मात्तैरश्चिका भणिताः ॥ १४८ ॥

जी० प्र०—यस्मात्कारणात् ये जीवाः सुविवृतसंज्ञाः अगूढाहारादिप्रकटसंज्ञायुताः, प्रभावसुखद्युतिलेश्याविशुद्ध्यादिभिरल्पीयस्त्वा-
न्निकृष्टाः, हेयोपादेयज्ञानादिभिर्विहीनत्वादज्ञानाः, नित्यनिगोदविवक्षया अत्यंतपापबहुलाः, तस्मात्कारणात्ते जीवाः तिरोभावं कुटिल-
भावं मायापरिणामं अंचति–गच्छंति, इति तिर्यंचो भणिता भवंति । तिर्यंच एव तैरश्चाः स्वार्थिकाण्विधानात् । एवंविधतिर्यक्पर्याय एव
तिर्यग्गतिरिति भाषित ॥ १४८ ॥ अथ मनुष्यगतिस्वरूपं निरूपयति—

म० प्र०—'साध्याहाराणि सूत्राणि' इति न्यायात् यस्मात्कारणात् तिरः कुटिलभावं–मनोवाकायवक्रभावं अंचंति यांति गच्छंति ये जीवाः मायाबहु-
लत्वं तिर्यग्जीवेषु युक्तमेव । तिर्यंच एव तैरश्चा इति स्वार्थिकाण्विधानात् । तैरश्चका इति प्राकृते स्वार्थिककप्रत्ययविधानात् ॥ १४८ ॥
भपरिणामार्जिततिर्यगायुःकर्मोदयजनितभववृत्तयः तिर्यग्गतिनामकर्मोदयकृतसुविवृतसंज्ञाः निकृष्टाज्ञानात्यंतपापबहुलत्वादिपर्यायास्ते जीवाः तस्मात्कारणात् ति-
र्यंच इति भणिताः अर्हदादिभिः । तत्र मनसि यद्वर्तते सुखदुःखतत्साधनस्वीकारपरिहारपरस्पराह्वानादि तन्मुखे न वचंति तद्वचनशक्तेरभावात् । मुखे यद्वृत्तं
तत् कायेन न क्रियते । यद्यपि शुकसारिकादयः केचित् सुशिक्षिताः संज्ञिपंचेंद्रियतिर्यंचो मनोवाकायेषु ऋजु प्रवर्तंते तथापि एकेंद्रियादयः असंज्ञिपंचेंद्रिय-
पर्यंताः जीवाः, अशिक्षितसंज्ञिपंचेंद्रियाश्च मनोवाकायेषु प्रायेण कुटिलभावेनैव प्रवर्तंते । सर्वजनादृश्ये क्षेत्रे नियते काले च मनुष्यवद्गूढभोजनमैथुनाद्यभावात्
सुविवृता-सुप्रकटा, संज्ञा आहारादीच्छा क्रियारूपा येषां ते सुविवृतसंज्ञा इति सूत्रार्थसद्भावः । मनुष्यवद्गुणदोषविवेकानित्यश्रुताभ्यासतत्त्वज्ञानादिशुभोपयोगा-
भावान्नित्याज्ञानत्वं सिद्धं । मनुष्यवदि( दे )व महाव्रतगुणशीलाभावादेकेंद्रियादिषु सम्यग्दर्शनविशुद्ध्यादिशुभोपयोगाभावाच्च तीव्रसंक्लेशप्रचुरतयात्यंतपापबहु-

सं० च०—जातैं जो जीव सुविवृतसंज्ञाः कहिए प्रगट है आहारनैं आदि देकरि संज्ञा जिनिकैं ऐसे हैं। बहुरि प्रभाव सुख द्युति लेश्याकी विशुद्धता इत्यादिककरि हीन हैं तातैं निकृष्ट हैं। बहुरि हेयोपादेयका ज्ञान र-

हित है तातैं अज्ञान हैं। वहुरि नित्यनिगोद अपेक्षा अत्यंत पापकी वहुलता जिनिकैं ऐसे हैं तातैं तिरोभव जो कुटिलभाव मायारूप परिणाम ताहि अंचंति कहिए प्राप्त होंइ ते तिर्यंच कहे हैं। वहुरि तिर्यंच ही तैरश्च कहिए इहां स्वार्थविषैं अण् प्रत्ययका विधान हो है। ऐसें जो तिर्यक् पर्याय सोही तिर्यग्गति है ऐसा कह्या है ॥१४८॥ आगैं मनुष्य गतिका स्वरूप कहै हैं—

**मण्णंति जदो णिच्चं मणेण णिउणा मणुक्कडा जह्मा।**
**मणुब्भवा य सव्वे तह्मा ते माणुसा भणिदा ॥ १४९ ॥**

मन्यंते यतो नित्यं मनसा निपुणा मनसोत्कटा यस्मात्।
मनूद्भवाश्च सर्वे तस्मात्ते मानुषा भणिताः ॥ १४९ ॥

जी० प्र०---यस्मात्कारणात् ये जीवाः नित्यं मन्यंते हेयोपादेयादिविशेषान् जानंति -वा मनसा निपुणाः-कलाशिल्पादिषु कुशलाः वा मनसोत्कटाः अवधानादिदृढोपयोगाः वा मनोरुद्भवाः अपत्यानीति ते जीवाः सर्वेऽपि मानुषा इति प्रवचने भणिताः ॥ १४९ ॥ अथ तिर्यग्मनुष्यगतिव्यक्तिभेदं न् दर्शयति --

म० प्र०--यतः कारणात् ये जीवा नित्यं मन्यंते अवबुध्यते हेयमुपादेयं च तत्त्वमतत्त्वं च आप्तमनाप्तं च धर्ममधर्मं चेत्यादि विविच्य निश्चिन्वंति मनसा गुणदोषविचारस्मरणाद्युपयोगरूपेण भावमनसा व्यवहर्तुं निपुणाः तत्तत्सूक्ष्मरहस्यवेदिनः मनसा प्रागुक्तलक्षणेन उत्कटा. तीव्रा दूरदर्शनसूक्ष्मविचारचिरकालधारणानानावधानादिसातिशयोपयोगविशिष्टाः यस्मात्कारणात् मनूद्भवाश्च मनोः युगादौ लौकिकलोकोत्तरव्यवहारप्रदर्शकस्य आदिब्रह्मणः अपत्यानि अथवा भोगभूमिस्थितिपरिक्षये तदा तदा संभूतप्रतिश्रुत्यादिभरतपर्यंतानां षोडशमनूनामपत्यानि-प्रजा, अपत्यानीव अपत्यानि इत्युपचाराश्रयः अपायपरिहारोपायप्रापणसुखजीविकोपदेशादिद्वारैस्तैरभिरक्षितत्वात् 'स पिता यस्तु पोषकः' इति नीतिसद्भावाच्च। तस्मात्कारणात् ते अल्पारंभपरिग्रहत्वाद्युपार्जितमनुष्यायुरुदयजनितभवधारणाः, मनुष्यगतिनामकर्मोदयसंपादितपूर्वोक्तमनुष्यपर्यायाः, सार्धद्वीपद्वयप्रमितमनुष्यक्षेत्रसमुद्भवाः सर्वेऽपि मानुषा इति भणिताः परमागमविशारदैः। द्वितीयो यस्माच्छब्दोऽनर्थकः लब्ध्यपर्याप्तकमनुष्याणां पूर्वोक्तमनुष्यलक्षणाभावेऽपि मनुष्यगतिनामायुःकर्मोदयजनितत्वमात्रेणैव मनुष्यत्वमाचार्यस्येष्टं ज्ञापयति 'अनर्थकानि वचनानि किंचिदिष्टं ज्ञापयत्याचार्यस्य' इति न्यायात् इति। संक्षेपतो मनुष्यगतिकथनं विस्तरतः करणानुयोगे द्रष्टव्यं ॥ १४९ ॥

सं० च०--जातैं जीव नित्य ही मन्यंते कहिए हेयोपादेयके विशेषकौं जानैं हैं अथवा मनसा निपुणाः क-

हिए अनेक शिल्पी आदि कलानिविषै प्रवीण हैं। अथवा 'मनसोत्कटाः' कहिए अवधारना आदि दृढ उपयोगके धारी हैं। अथवा 'मनोरुद्भवाः' कहिए कुलकरादिकतैं निपजे है तातैं ते जीव सर्व ही मनुष्य हैं ऐसैं आगमविषै कहे हैं॥ १४९॥ आगै तिर्यंच मनुष्य गतिके जीवनिका भेद दिखावै हैं—

**सामण्णा पंचिंदी पज्जत्ता जोणिणी अपज्जत्ता।**
**तिरिया णरा तहावि य पंचिंदियभंगदो हीणा॥१५०॥**

सामान्याः पंचेंद्रियाः पर्याप्ता योनिमत्यः अपर्याप्ताः।
तिर्यंचो नरास्तथापि च पंचेंद्रियभंगतो हीनाः॥ १५०॥

जी० प्र०—तिर्यंचः—सामान्यतिर्यंचः पंचेंद्रियतिर्यंचः पर्याप्ततिर्यंचः योनिमत्तिर्यंच अपर्याप्ततिर्यंचश्चेति पंचविधा भवंति। तथा मनुष्या अपि। किंतु पंचेंद्रियभंगतः—भेदात् हीना भवंति—सामान्यादिचतुर्विधा एव भवंतीत्यर्थः। सर्वमनुष्याणां केवलं पंचेंद्रियत्वेनैव संभवात्। तिर्यग्वत्तद्विशेषणस्य व्यवच्छेद्यत्वाभावात्॥ १५०॥ अथ देवगतिं प्ररूपयति—

म० प्र०—सामान्यतिर्यंचः पंचेंद्रियतिर्यंचः पर्याप्ततिर्यंचः योनिमतीतिर्यंचः अपर्याप्ततिर्यंच इति तिर्यंचो जीवाः पंचप्रकारा भवंति। तथा तिर्यग्जीवभेदप्रकारेण नराः—मनुष्या अपि, पंचेंद्रियभंगत पंचेंद्रियभेदात्, हीनाः—पंचेंद्रियभेदरहिताः—सामान्यापर्याप्तयोनिमत्पर्याप्तभेदाच्चतुर्विधा इत्यर्थः। सामान्यादीनां विशेषापर्याप्तायोनिमत्पर्याप्तरूपप्रतिपक्षवदपंचेंद्रियरूपप्रतिपक्षस्य मनुष्यगतावसंभवात्—सर्वमनुष्याणा पंचेंद्रियत्वस्यैव संभवात्॥ १५०॥

सं० च०—तिर्यंच पांच प्रकार सामान्यतिर्यंच १ पंचेंद्री तिर्यंच २ पर्याप्त तिर्यंच ३ योनिमती तिर्यंच ४ अपर्याप्त तिर्यंच ५। तहां सर्व ही तिर्यंच भेदनिका समुदायरूप सो तौ सामान्य तिर्यंच है। बहुरि जो एकेंद्रियादिक विना केवल पंचेंद्री तिर्यंच सो पंचेंद्री तिर्यंच है। बहुरि जो अपर्याप्त विना केवल पर्याप्त तिर्यंच सो पर्याप्त तिर्यंच है। बहुरि जो स्त्रीवेदरूप तिर्यंचणी सो योनिमती तिर्यंच है बहुरि जो लब्धि अपर्याप्त तिर्यंच है सो अपर्याप्त तिर्यंच है। ऐसैं तिर्यंच पंच प्रकार हैं बहुरि तैसैं ही मनुष्य हैं। इतना विशेष-जो पंचेंद्रिय भेदकरि हीन है तातैं सामान्यादिरूपकरि च्यारि प्रकार है। जातैं मनुष्य सर्व ही पंचेंद्री है तातैं जुदा भेद तिर्यंचवत् न होइ

तातैं सामान्य मनुष्य १ पर्याप्त मनुष्य २ योनिमती मनुष्य ३ अपर्याप्त मनुष्य ४ ए च्यारि भेद मनुष्यके जानने। तहां सर्व मनुष्य भेदनिका समुदायरूप सो सामान्य मनुष्य है। केवल पर्याप्त मनुष्य सो पर्याप्त मनुष्य है। स्त्रीवेदरूप मनुष्यणी सो योनिमती मनुष्य, लब्धि अपर्याप्तक मनुष्य सो अपर्याप्त मनुष्य है ॥ १५० ॥ आगैं देवगतिकों कहै हैं—

**दीव्वंति जदो णिच्चं गुणेहिं अट्ठेहिं दिव्वभावेहिं।**
**भासंतदिव्वकाया तह्मा ते वण्णिया देवा ॥ १५१ ॥**

दीव्यंति यतो नित्यं गुणैरष्टाभिर्दिव्यभावैः।
भासमानदिव्यकायाः तस्मात्ते वर्णिता देवाः ॥ १५१ ॥

जी० प्र० —यस्मात्कारणात् ये जीवाः नित्यं–अनवरतं, कुलगिरिमहासमुद्रादिषु दीव्यंति क्रीडति मोदंते मदयंति कामयंते अणिमादिभिरष्टभिः दिव्यभावैः–अमानुषगोचरप्रभावैः गुणैर्भासमानाः–प्रकाशमानाः, दिव्यकाया धातुमलदोषरहितप्रभासुरमनोहारशरीराः ते जीवाः तस्मात्कारणात् देवा इति परमागमे वर्णिताः ॥ १५१ ॥ अथ संसारविलक्षणां सिद्धगतिं व्यनक्ति—

म० प्र० —यत कारणात् दिव्यभावैः-अमर्त्यगोचरपर्यायैः, अष्टभिर्गुणैरणिमादिभिर्दीव्यंति-क्रीडंति अप्रतिहतवृत्त्या लोकत्रयेऽपि सपरिवाराः संतो विहरति विजिगीषते वा वलीयसोऽपि परान् स्तुवति वा सविशेष परमेष्ठिनः मोदंते वा सदा पचेंद्रियविषयभोगैः सुख्यंति। कथंभूताः सतः ? भासमानदिव्यकायाः अविच्छिन्नरूपलावण्ययौवनादिभिर्जोज्वलदमर्त्यगोचरवैक्रियिकशरीराः तस्मात् कारणात् ते जीवाः भावनव्यंतरज्योतिष्कवैमानिकविकल्पाः देवा इत्यनादिनिधने परमागमे वर्णिताः-सविस्तर प्ररूपिताः इति संक्षेपेण देवगतिरुक्ता विस्तरेण तु करणानुयोगशास्त्रे द्रष्टव्या ॥१५१॥ अथ कर्मोदयजनितचतुर्गत्यतिवर्तिस्वाभाविकसिद्धगतिप्ररूपणार्थमाह—

सं० च० —जातैं जे जीव नित्य ही दीव्यंति कहिए कुलाचल समुद्रादिकनिविषैं क्रीडा करैं हैं। हर्ष करैं है। मदनरूप हो हैं—कामरूप हो हैं। बहुरि अणिमाकौं आदि देकरि मनुष्य अगोचर दिव्यप्रभाव लीएं गुण तिनिकरि प्रकाशमान हैं। बहुरि धातु मल रोगादिक दोष तिनिकरि रहित है देदीप्यमान मनोहर शरीर जिनिका ऐसे हैं

तातैं ते जीव देव हैं ऐसैं आगमविषै कह्या है। ऐसै निरुक्तिपूर्वक लक्षणकरि च्यारि गति कहीं। यहां जे जीव सातौ नरकनिविषै महा दुःख पीडित हैं ते नारक जानने। बहुरि एकेंद्री वेंद्री तेंद्री चौइंद्री असंज्ञी पंचेंद्री पर्यंत सर्व ही अर जलचरादि पंचेंद्री ते सर्व तिर्यंच जानने। बहुरि आर्य म्लेच्छ भोगभूमि कुभोगभूमिविषै उत्पन्न मनुष्य जानने। भवनवासी व्यंतर ज्योतिषी वैमानिक भेदलीएं देव जानने ॥ १५१ ॥ आगे संसार दशाका लक्षणरहित जो सिद्धगति ताहि कहै हैं----

**जाइजरामरणभया संजोगविजोगदुक्खसण्णाओ।**
**रोगादिगा य जिस्से ण संति सा होदि सिद्धगई ॥१५२॥**

जातिजरामरणभयाः संयोगवियोगदुःखसंज्ञाः।
रोगादिकाश्च यस्यां न संति सा भवति सिद्धगतिः ॥ १५२ ॥

जी० प्र०—जातिजरामरणभयानि, अनिष्टसंयोगेष्टवियोगदुःखसंज्ञाः, रोगादिविविधवेदनाश्च यस्यां न संति सा कृत्स्नकर्मविप्रमोक्षप्रादुर्भूतसिद्धस्वपर्यायलक्षणा सिद्धगतिरस्ति। अत एव संसारिगत्यपेक्षया गतिमार्गणायाश्चतुर्विधत्वमुक्तं। मुक्तगत्यपेक्षया तस्यास्तद्विलक्षणत्वेन गतिमार्गणायामविवक्षितत्वात् ॥ १५२ ॥ अथ गतिमार्गणायां जीवसंख्यां कथयंस्तावन्नरकगतौ गाथाद्वयेनाह--

म० प्र०—कर्मवशाज्जीवस्य भवे भवे स्वशरीरपर्यायोत्पत्तिर्जातिः। जातस्य तथाविधशरीरपर्यायस्य वयोहान्या विशरणं जरा। स्वायुःक्षयात्तथाविधशरीरपर्यायप्राणत्यागो मरणं। अनर्थाशंकया अपकारकेभ्यः पलायनेच्छा भयं। क्लेशकारणानिष्टद्रव्यसंगमः संयोगः। सुखकारणेष्टद्रव्यापायो वियोगः। एतेभ्यः समुत्पन्नानि आत्मनो निग्रहरूपाणि दुःखानि। शेषास्तिस्रः आहारादिवाञ्छारूपाः संज्ञाः। रोगादिकाश्च रोगमानभंगवधबंधादिविविधवेदनाश्च यस्या गतौ न सति तत्कारणकृत्स्नकर्मविप्रमोक्षे सति न जायंते सा सिद्धगतिः। अनंतज्ञानदर्शनसुखवीर्यादिस्वस्वभावगुणोपलब्धिरूपायाः सिद्धेर्गतिः प्राप्तिः जीवस्य भवति-परमप्रकर्षप्राप्तरत्नत्रयपरिणतशुक्लध्यानविशेषसंपादितपरमसंवरनिर्जराभ्यां सकलकर्मक्षयादात्मनो मुक्तव्यपदेशभाजः स्वाभाविकोर्ध्वगमनसद्भावाल्लोकाग्रप्राप्तस्य सिद्धपरमेष्ठिपर्यायरूपसिद्धिगतिर्भवतीत्यर्थः ॥१५२॥ अथ श्रीमाधवचंद्रत्रैविद्यदेवाः एकादशभिर्गाथासूत्रैश्चतुर्गतिजीवसंख्यां कथयंति--

सं० च०—जन्म जरा मरण भय अनिष्ट संयोग इष्टवियोग दुख संज्ञा रोगादिक नानाप्रकार वेदना जि-

हिंविषै न होंइ सो समस्तकर्मका सर्वथा नाशतैं प्रकट भया सिद्ध पर्यायरूप लक्षण धरैं सो सिद्धगति जाननी इस गतिविषैं संसारीक भाव नाहीं तातैं संसारीक गतिकी अपेक्षा गति मार्गणा च्यारि प्रकार ही कही। मुक्तिगतिकी अपेक्षा तीहिं मुक्तिगतिका नाम कर्मोदयरूप लक्षण नाही है। तातैं याकी गतिमार्गणाविषैं विवक्षा नाही है ॥ १५२ ॥ आगैं गतिमार्गणाविषैं जीवनिकी संख्या कहै हैं। तहां प्रथम ही नरक गतिविषैं गाथा दोय करि कहैं हैं–

**सामण्णा णेरइया घणअंगुलबिदियमूलगुणसेढी।**
**बिदियादि बारदसअडछत्तिदुणिजपदहदा सेढी ॥१५३॥**

सामान्या नैरयिका घनांगुलद्वितीयमूलगुणश्रेणी।
द्वितीयादिः द्वादश दशाष्टषट्त्रिद्विनिजपदहता श्रेणी ॥ १५३ ॥

जी० प्र०—घर्मादिपृथ्वीभेदविवक्षामकृत्वा सामान्यनारकाः सर्वपृथ्वीजाः घनांगुलद्वितीयवर्गमूलगुणितजगच्छ्रेणिप्रमिता भवंति (–२मू०) वशाद्यधस्तनपृथ्वीषु नारकाः पुनः यथाक्रमं द्वादशदशमाष्टमषष्ठतृतीयद्वितीयनिजवर्गमूलविभक्तजगच्छ्रेणीमात्राः संति $\overline{१२}$ । $\overline{१०}$ । $\overline{८}$ । $\overline{६}$ । $\overline{३}$ । $\overline{२}$ ॥ १५३ ॥

म० प्र०- घनांगुलद्वितीयवर्गमूलगुणितजगच्छ्रेणिप्रमिताः सामान्यनारका भवति यावतस्तत्प्रदेशास्तावत सामान्यनारका इत्यर्थः एवमुत्तरत्रापि सर्वत्र ज्ञातव्यं, अत्र पृथ्वीविशेषस्याविवक्षितत्वात् । द्वितीयादिभूमिनारकसंख्या यथाक्रममुच्यते तद्यथा निजद्वादशवर्गमूलविभक्तजगच्छ्रेणिप्रमिता द्वितीयपृथ्वीनारकाः । निजदशमवर्गमूलहृतजगच्छ्रेणिप्रमिताः तृतीयपृथ्वीनारकाः । निजाष्टमवर्गमूलभक्तजगच्छ्रेणिप्रमिताश्चतुर्थभूमिनारकाः । निजषष्ठमूलवर्गभाजितजगच्छ्रेणिसंख्याः पंचमपृथ्वीनारकाः । निजतृतीयवर्गमूलावाप्तजगच्छ्रेणिप्रमिताः षष्ठपृथ्वीनारकाः । निजद्वितीयवर्गमूलापहृतजगच्छ्रेणिप्रमिता. सप्तमपृथ्वीनारका ज्ञातव्याः।

सं० च०—सामान्य सर्व सातौ ही पृथ्वीके मिले हुवे नारकी जगत श्रेणीकौं घनांगुलका द्वितीय वर्गमूलकरि गुणैं जो परिमाण होइ तिहि प्रमित हैं। इहां घनांगुलका वर्गमूलकरि उस प्रथम वर्गमूलका दूसरीवार वर्ग-

मूल कीजिए सो घनांगुलका द्वितीय वर्गमूल जानना । ऐसैं अंकसंदृष्टिकरि घनांगुलका प्रमाण सोलह ताका वर्गमूल च्यारि ताका द्वितीय वर्गमूल दोय होय ताकरि जगतश्रेणीका प्रमाण दोयसै छप्पनकौं गुणैं पांचसै बारह होय तैसै इहां यथार्थ परिमाण जानना । बहुरि दूसरी पृथ्वीके नारकी जगतश्रेणीका बारह्वां वर्गमूल ताका भाग जगत श्रेणीकौं दीएं जो प्रमाण होइ तीहि प्रमित हैं। इहां जगत श्रेणीका वर्गमूल करिए सो प्रथम वर्ग मूल बहुरि उसका वर्गमूल कीजिए सो द्वितीय वर्गमूल बहुरि उस द्वितीय वर्गमूलका वर्गमूल कीजिए सो तृतीय वर्गमूल इत्यादिक ऐसैं ही इहां अन्य वर्गमूल जानना । बहुरि तीसरी पृथ्वीके नारकी जगत श्रेणीका दशवां वर्गमूलका भाग जगत श्रेणीकौं दीएं जो प्रमाण आवै तितने जानने । बहुरि चौथी पृथ्वीके नारकी जगत श्रेणीका आठवां वर्गमूलका भाग जगत श्रेणीकौं दीएं जो परिमाण आवै तितने जानने । बहुरि ऐसैं ही पाचवीं पृथ्वी छठी पृथ्वी सातवीं पृथ्वीके नारकी अनुक्रमतैं जगत श्रेणीका छठा तीसरा दूसरा वर्गमूलका भाग जगत श्रेणीकौं दीएं जो जो परिमाण आवै तितने तितने जानने । जैसैं दोयसै छप्पनका प्रथम वर्गमूल सोलह द्वितीय वर्गमूल च्यारि तृतीय वर्गमूल दोय इनिका भाग क्रमतैं दोयसै छप्पनकौं दीएं सोलह चौसठि एकसौ अट्ठाईस होइं तैसैं इहां भी यथासंभव परिमाण जानना ॥ १५३ ॥

**हेट्ठिमछप्पुढवीणं रासिविहीणो दु सव्वरासी दु ।**
**पढमावणिह्मि रासी णेरइयाणं तु णिद्दिट्ठो ॥१५४॥**

अधस्तनषट्पृथ्वीनां राशिविहीनस्तु सर्वराशिस्तु ।
प्रथमावनौ राशिः नैरयिकाणां तु निर्दिष्टः ॥ १५४ ॥

जी० प्र०---अधस्तनवंशादिषट्पृथ्वीकथितषड्राशीनां संयोगः निजद्वादशमूलभक्तसाधिकजगच्छ्रेणिमात्रः $\frac{—}{१२}$ । अनेन सामान्यनारकरा-

शिर्विहीनः तदा धर्मानारकप्रमाणं भवति–$\frac{२-१}{१२}$ तदपनयन त्रैराशिकमिदं–प्र –। फ १ । इ १२ एकजगच्छ्रेण्यपनयने घनांगुलद्वितीयमूलगुणितजगच्छ्रेणिमात्रराशौ गुणकारे यद्येकं रूपमपनीयते तदा निजद्वादशमूलभक्तसाधिकश्रेण्यपनयने गुणकारे कियदपनीयते ? इति लब्धं साधिकैकद्वादशभागं $\frac{१}{१२}$ अपनयेदित्यर्थः ॥ १५४ ॥ अथ तिर्यग्जीवसंख्यां गाथाद्वयेन आह–

म० प्र०– -अधस्तनद्वितीयादिषट्पृथ्वीनारकसंख्या सर्वा मेलयित्वा पुनस्तत्सर्वराशिना विहीनः सर्वनारकराशिः सामान्यनारकराशिरेव प्रथमावन्यां रत्नप्रभायां नारकाणां राशिर्भवतीति निर्दिष्टः–परमागमे कथितः । तदानयनक्रममुच्यते–तृतीयादिपृथ्वीनारकाः सर्वेऽपि द्वितीयपृथ्वीनारकाणां असंख्येयभागमात्रा एव तद्भागहारमहत्त्वेन लब्धस्याल्पत्वात् ततस्तैः साधिको द्वितीयपृथ्वीनारकराशिरयं १२ । यदि जगच्छ्रेणिमात्री । प्र–। एका गुण्यशलाका । फ १। गुणकारे अपनीयते तदा ईदृशश्रेण्यपनयने । इ १२ । का शलाका भवतीति फलगुणितेच्छा प्रमाणेन भक्त्वा अपवर्तिते लब्धमेकशलाकायाः असंख्यातैकभागमात्रमीदृशं भवति १२ अस्मिन् घनांगुलद्वितीयवर्गमूलमात्रे श्रेणिगुणकारे अपनीते प्रथमपृथ्वीनारकसंख्येयं –$\frac{२-१}{१२}$ । अस्यांकसंदृष्टिः–एतावतः प्र २५६ यद्येका अपनयनशलाका फ १, तदा एतावतः इ $\frac{२५६}{४}$ किं स्यादिति फलगुणितेच्छा प्रमाणेन भक्त्वा अपवर्तित एवं $\frac{१}{४}$। अस्मिन् गुणकारे अपनीते २५६ । $\frac{४-१}{४}$ समच्छेदीकृत्य अपनीते शेषगुणकारः २५६ । $\frac{१५}{४}$ अपवर्त्य गुणिते लब्धमिद । ९६० एवमर्थसदृष्ट्यापि ज्ञातव्य । एवं नरकगतौ जीवसंख्या प्ररूपिता ॥१५४॥

सं० च०—नीचली जे दूसरी वंशा पृथ्वीसौं लगाइ सातवीं पृथ्वी पर्यंत छह पृथ्वीके नारकीनिका जोड दीएं साधिक जगत श्रेणीका बारह्वां वर्गमूलकरि भाजित जगतश्रेणी प्रमाण होइ सो पूर्वे सामान्य सर्वनारकीनिका परिमाण कह्या तामैं घटाएं जितने रहैं तितने पहिली घर्मा पृथ्वीके नारकी जानने। इहां घटावनेरूप त्रैराशिक ऐसैं करना। सामान्य नारकीनिका प्रमाणविषैं जगच्छ्रेणी गुण्य है। बहुरि घनांगुलका द्वितीय वर्गमूल गुणकार है सो इस प्रमाणविषैं जगच्छ्रेणीमात्र घटावना होइ तौ गुणकारका परिमाणमैंस्यों एक घटाइए तौ जो जगच्छ्रेणीका बारह्वां

वर्गमूलकरि भाजित साधिक जगच्छ्रेणीमात्र घटावना होइ तौ गुणकारमेंस्यौं कितना घटै इहां प्रमाणराशि जगतश्रेणी फलराशि एक इच्छाराशि जगत श्रेणीका बारह्वां वर्गमूलकरि भाजित जगतश्रेणी सो इहां फलकरि इच्छाकौं गुणें प्रमाणका भाग दीएं साधिक एकका बारह्वां भाग जगत श्रेणीके वर्गमूलका भाग आया सो इहां घनांगुलका द्वितीय वर्गमूलमेंस्यौं घटाइ अवशेषकरि जगत श्रेणीकौं गुणे धर्मा पृथ्वीके नारकीनिका प्रमाण हो है ॥ १५४ ॥ आगें तिर्यंच जीवांकी संख्या दोय गाथाकरि कहैं हैं—

**संसारी पंचक्खा तप्पुण्णा तिगदिहीणया कमसो ।**
**सामण्णा पंचिंदी पंचिंदियपुण्णतेरिक्खा ॥ १५५ ॥**

संसारिणः पंचाक्षाः तत्पूर्णाः त्रिगतिहीनकाः क्रमशः ।
सामान्याः पंचेंद्रियाः पंचेंद्रियपूर्णतैरश्चाः ॥ १५५ ॥

जी० प्र०—नारकमनुष्यदेवराशित्रयविहीनसर्वसंसारिराशिरेव तिर्यग्गतौ सामन्यतिर्यग्राशिप्रमाणं भवति । १३ ≡ । तद्गतित्रयराशिविहीनः सामान्यपचेंद्रियराशिरेव तिर्यग्गतौ पचेंद्रियराशिः स्यात् । =५८३६ तद्गतित्रयपर्याप्तराशिहीनः सामान्यपर्याप्तपंचेंद्रियराशिरेव तिर्यग्गतौ
४ । ४ । ६५६१
a ≡

पर्याप्तपंचेंद्रियराशिः स्यात् । =५८६४ ॥ १५५ ॥
४।४।६५६१
५ ≡

मं० प्र०—सिद्धजीवराशिरहितः सर्वजीवराशिः संसारिजीवराशिर्भवति । तस्मिन्नारकमनुष्यदेवगतित्रयजीवराशिना रहिते सति अवशिष्टः सामान्यतिर्यग्जीवराशिर्भवति । सामान्यपचेंद्रियराशौ नारकदेवमनुष्यगतित्रयजीवराशिना रहिते सति अवशिष्टस्तिर्यक्पंचेंद्रियजीवराशिर्भवति । सामान्यपंचेंद्रियराशिश्च इंद्रियमार्गणायां वक्ष्यमाणो ज्ञातव्यः । सामान्यपचेंद्रियपर्याप्तराशौ शेषगतित्रयपर्याप्तराशिना रहिते सति अवशिष्टस्तिर्यक्पचेंद्रियपर्याप्तराशिर्भवति ॥ १५५ ॥

सं० च०---संसारी जीवनिका जो परिमाण तींहिविषैं नारकी मनुष्य देव इनि तीनौं गतिनिके जीवनिका परिमाण घटाएं जो परिमाण रहै तितने प्रमाण सर्व सामान्य तिर्यंच राशि जानने। बहुरि आगैं इंद्रिय मार्गणाविषैं जो सामान्य पंचेंद्रिय जीवनिका परिमाण कहिएगा तामैंसौं नारकी मनुष्य देवनिका परिमाण घटाएं पंचेंद्रिय तिर्यंचनिका प्रमाण हो है। बहुरि आगैं पर्याप्त पंचेंद्रियानिका प्रमाण कहिएगा तामैंस्यों पर्याप्त नारकी मनुष्य देवनिका परिमाण घटाएं पंचेंद्रिय पर्याप्त तिर्यंचनिका परिमाण हो है॥ १५५॥

**छस्सयजोयणकदिहिदजगपदरं जोणिणीण परिमाणं।**
**पुण्णूणा पंचक्खा तिरियअपज्जत्तपरिसंखा॥ १५६॥**

षट्शतयोजनकृतिहतजगत्प्रतरं योनिमतीनां परिमाणं।
पूर्णोनाः पंचाक्षाः तिर्यगपर्याप्तपरिसंख्या॥ १५६॥

जी० प्र०—षट्शतयोजनानां कृत्या भक्तजगत्प्रतरप्रमाणं तिर्यग्गतौ योनिमतीनां द्रव्यस्त्रीणां प्रमाणं भवति। ४। ६५=। ८१४। १० तिर्यक्पंचेंद्रियपर्याप्तराशिहीनतिर्यक्पंचेंद्रियराशिरेव तिर्यगपर्याप्तपंचेंद्रियराशिप्रमाणं भवति =५८ ३६ ৪≡ ५८ ६४। ५≡ ४, ४, ६५ ६१ ॥ १५६॥ अथ मनुष्यगतिजीवसंख्यां गाथात्रयेणाह—

म० प्र०--षट्शतयोजनकृतिहतजगत्प्रतरमात्रं योनिमतीना द्रव्यतिर्यक्स्त्रीणां प्रमाणं भवति। योजनषट्शतकृतेरंगुलानि षट्त्रिंशदुत्तरपंचशताधिकपंचषष्टिसहस्रगुणितत्रिलक्षचतुर्विंशतिसहस्रकोटिप्रमितानि भवंति। तत्प्रदेशाः संख्यातप्रतरांगुलमात्राः। अयं जगत्प्रतरस्य भागहार.। तिर्यक्पंचेंद्रियपर्याप्तराशिना न्यूनस्तिर्यक्पंचेंद्रियराशिरेव तिर्यक्पंचेंद्रियापर्याप्तराशिपरिसंख्या भवति एव पंचविधतिर्यग्जीवसंख्या कथिता॥ १५६॥

सं०च०—छस्से योजनके वर्गका भाग जगत प्रतरकौं दीएं जो परिमाण होइ सो योनिमती द्रव्य तिर्यंचणीनिका परिमाण जानना। छस्सै योजन लंबा छस्सै योजन चौडा एक प्रदेश ऊंचा ऐसा क्षेत्रविषैं जितने आ-

काश प्रदेश होंइ ताका भाग जगत प्रतरकौं देना सो इनि योजनका प्रतरांगुल कीजिए तब चौगुणा पणट्ठीकौं इक्यासी हजार कोडिकरि गुणिए इतने प्रतरांगुल होंइ तिनिका भाग जगत प्रतरकौं दीजिए तब एक भाग प्रमाण द्रव्य तिर्यंचणी जाननीं। बहुरि पंचेंद्रिय तिर्यंचानिका परिमाणविषैं पंचेंद्रिय पर्याप्त तिर्यंचानिका प्रमाण घटाएं अवशेष अपर्याप्त पंचेंद्रियानिका परिमाण हो है ॥ १५६ ॥ आगैं मनुष्य गतिके जीवानिकी संख्या तीन गाथानिकरि कहै हैं–

**सेढी सूईअंगुलआदिमतदियपदभाजिदेगूणा ।**
**सामण्णमणुसरासी पंचमकदिघणसमा पुण्णा ॥१५७॥**

श्रेणी सूच्यंगुलादिमतृतीयपदभाजितैकोना ।
सामान्यमनुष्यराशिः पंचमकृतिघनसमाः पूर्णाः ॥ १५७ ॥

जी० प्र०–जगच्छ्रेणिं सूच्यंगुलस्य प्रथममूलतृतीयमूलाभ्यां भक्त्वा तल्लब्धे एकरूपे अपनीते स राशिः सामान्यमनुष्यराशिः स्यात् ।१।३। द्विरूपवर्गधारासंबंधिपंचमवर्गस्य वादालसंज्ञस्य घनप्रमाणाः पर्याप्तमनुष्या भवंति ४२ = ४२ = ४ = ॥१५७॥ अस्मिन् राशौ परस्परं गुणिते यल्लब्धं तं राशिं अक्षरसंज्ञयांकक्रमेण कथयति–

म० प्र०–सूच्यंगुलप्रथमतृतीयवर्गमूलभाजितैकोनजगच्छ्रेणिमात्रः सामान्यमनुष्यजीवराशिर्भवति । द्विरूपवर्गधारोत्पन्नपंचमवर्गस्य वादालनाम्नो घनो यः तत्समानाः पर्याप्तमनुष्या भवंति ॥ १५७ ॥

सं० च०—जगतश्रेणीकौं सूच्यंगुलकै प्रथम वर्गमूलका भाग दीजिए जो परिमाण आवै ताकौं सूच्यंगुलका तृतीयवर्गमूलका भाग दीजिए जो परिमाण आवै तामैं एक घटाएं जितने अवशेष रहैं तितने सामान्य सर्वमनुष्य जानने। बहुरि द्विरूप वर्गधारा संबंधी पंचम वर्गस्थान वादाल है ताका घन कीजिए जितने होंइ तितने पर्याप्त मनुष्य जानने। ते कितने हैं ?–

**तललीनमधुगविमलंधूमसिलागाविचोरभयमेरू ।**
**तटहरिखझसा होंति हु माणुसपज्जत्तसंखंका ॥ १५८ ॥**

तललीनमधुगाविमलंधूमसिलागाविचोरभयमेरू ।
तटहरिखझसा भवंति हि मानुषपर्याप्तसंख्यांकाः ॥ १५८ ॥

जी० प्र०—सप्तचतुर्वारकोटिद्वानवतिलक्षाष्टाविंशतिसहस्रैकशतद्वाषष्टित्रिवारकोटयेकपंचाशल्लक्षद्वाचत्वारिंशत्सहस्रषट्शतत्रिचत्वारिंशद्द्विवारकोटिसप्तत्रिंशल्लक्षैकान्नषष्टिसहस्रत्रिशतचतुःपंचाशत्कोटयेकान्नचत्वारिंशल्लक्षपंचाशत्सहस्रत्रिशतषट्त्रिंशत्प्रमिता पूर्वोक्तपंचमवर्गघनांकरूपा पर्याप्तमनुष्याणां संख्या भवति ७, ९२२८१६२, ५१४२६४३, ३७५९३५४, ३९५०३३६ । अयमेव राशिः पुनरक्षरसंख्यया पूर्वानुपूर्व्या कथ्यते—

साधूरराजकीर्तेरेणांको भारतीविलोलसमधिः ॥
गुणवर्गधर्मनिगलितसंख्यावन्मानवेषु वर्णक्रमाः । इति ॥ १५८ ॥

मं० प्र०—सप्तचतुर्वारकोटिद्वानवतिलक्षाष्टविंशतिसहस्रैकशतद्वाषष्टित्रिवारकोटयेकपंचाशल्लक्षद्वाचत्वारिंशत्सहस्रषट्शतत्रिचत्वारिंशद्द्विवारकोटिसप्तत्रिंशल्लक्षैकोनषष्टिसहस्रत्रिशतचतुःपंचाशत्कोटयेकान्नचत्वारिंशल्लक्षपंचाशत्सहस्रत्रिशतषट्त्रिंशत्प्रमिता पूर्वोक्तपंचमवर्गघनांकरूपा मानुषपर्याप्तपरिसंख्या भवति ॥ सैवाक्षरसंज्ञया गाथायामुक्ता ज्ञातव्या । अत्र किंचित्प्रकृतोपयोगि कथ्यते तद्यथा—पंचचत्वारिंशल्लक्षविष्कंभस्य वृत्तस्य मनुष्यक्षेत्रस्य सूक्ष्मपरिधिः एककोटिद्विचत्वारिंशल्लक्षात्रिंशत्सहस्रद्विशतैकोनपंचाशद्योजनान्येकः क्रोशः एकसहस्रसप्तशतपट्षष्टिदंडाः पंचांगुलानि च । तत्क्षेत्रफलं षोडशलक्षनवशतत्रिकोटिषट्लक्षचतुःपंचाशत्सहस्रषट्शतैकयोजनानि, योजनस्य एकान्नविंशतिश्च षोडशवर्गभागाः, एतस्य क्षेत्रफलस्य अंगुलानि नवसहस्रचतुःशतद्विचत्वारिंशत्त्रिवारकोटयेकपंचाशल्लक्षचतुःसहस्रनवशताष्टाषष्टिकोटीकोटयेकान्नविंशतिलक्षद्विचत्वारिंशत्सहस्रचतु शतकोटिप्रमितानि भवंति एवं सति मनुष्यक्षेत्रप्रतरांगुलेभ्यः पर्याप्तमनुष्याणां संख्येयगुणत्वेन तदवगाहनशक्तिवैचित्र्य केवलागमगम्यं नास्माकमाक्षेपार्हं इत्याज्ञाश्रद्धानविषयत्वज्ञापनार्थं लिखितमाचार्यैः । एवमन्यान्यप्याज्ञाश्रद्धेयानि ज्ञातव्यानि ॥ १५८ ॥

सं० च०—इहां अक्षर संज्ञाकरि वामभागतैं अनुक्रमकरि अंक कहैं हैं। सो अक्षर संज्ञाकरि अंक कहनेका सूत्र उक्तं च कहिए है—आर्या—

कटपयपुरस्थवर्णैर्नवनवपंचाष्टकल्पितैः क्रमशः ।

स्वरञनशून्यं संख्या मात्रोपरिमाक्षरं त्याज्यं ॥

याका अर्थ--ककारतैं आदि देकरि नव अक्षर तिनिकरि अनुक्रमतैं एक दोय तीन इत्यादिक अंक जानने। जैसैं ककार लिख्या होइ तहां एका जानना खकार होइ तहां दूवा जानना। गकार लिख्या होइ तहां तीया जानना। ऐसैं ही झकार पर्यंत नव ताईं अंक जानने। क$_1$ ख$_2$ ग$_3$ घ$_4$ ङ$_5$ च$_6$ छ$_7$ ज$_8$ झ$_9$ बहुरि ऐसैं ही टकारने आदि देकरि धकार पर्यंत एक दोय तीन आदि नव अंक जानने ट$_1$ ठ$_2$ ड$_3$ ढ$_4$ ण$_5$ त$_6$ थ$_7$ द$_8$ ध$_9$ बहुरि ऐसैं ही पकारने आदि देकरि मकार ताईं एक दोय आदि पंच अंक जानने। प$_1$ फ$_2$ ब$_3$ भ$_4$ म$_5$। बहुरि ऐसैं ही यकारनें आदि देकरि अष्ट अक्षरनितैं एक आदि अष्ट पर्यंत अंक जानने य$_1$ र$_2$ ल$_3$ व$_4$ श$_5$ ष$_6$ स$_7$ ह$_8$ बहुरि जहां आकार आदि स्वर लिखे हों वा ञकार वा नकार लिख्या होइ तहां विंदी जानना। बहुरि अक्षरकैं जो मात्रा होइ वा तथा कोई ऊपरि अक्षर लिख्या होइ तौ उनका कछू प्रयोजन नाहीं लेना। सो इस सूत्र अपेक्षा इहां अक्षर संज्ञाकरि अंक कहे हैं। आगैं भी श्रुतज्ञानादिका वर्णनविषैं ऐसैं ही जानना। सो इहां त कहिए छह ल कहिए तीन ली कहिए तीन न कहिए विंदी म कहिए पांच धु कहिए नव ग कहिए तीन इत्यादि अनुक्रमतैं च्यारि पांच तीन नव पांच सात तीन तीन च्यारि छह दोय च्यारि एक पांच दोय छह एक आठ दोय दोय नव सात ए अंक जानने। 'अंकानां वामतो गतिः' तातैं अंक वाईं तरफतैं लिखने '७,९२२८१६२,५१४२६४३,३७५९३५४,३९५०३३६' सो ए सात कोडाकोडि कोडाकोडि वाणवै लाख अठाईस हजार एकसौ वासठि कोडा कोडि कोडि इकावनलाख वियालीस हजार छसै तियालीसकोडाकोडि सैंतीस लाख गुणसठि हजार तीनसौ चौवन कोडि गुणतालीस लाख पचास हजार तीनसै छत्तीस पर्याप्त मनुष्य जानने। इनिके अंक दाहिणी तरफसौं अक्षर संज्ञाकरि अन्यत्र भी कहे हैं--

साधूरराजकीर्तेरेणांको भारतीविलोलसमधीः।
गुणवर्गधर्मनिगलितसंख्यावन्मानवेषु वर्णक्रमाः ॥

सो इहां सा कहिए सात धू कहिए नव र कहिए दोय रा कहिए दोय ज कहिए आठ की कहिए एक तैं कहिए छह इत्यादि दक्षिण भागतैं अंक जानने ॥ १५८ ॥

## पज्जत्तमणुस्साणं तिचउत्थो माणुसीण परिमाणं।
## सामण्णा पुण्णूणा मणुवअपज्जत्तगा होंति ॥ १५९ ॥

पर्याप्तमनुष्याणां त्रिचतुर्थो मानुषीणां परिमाणं।
सामान्याः पूर्णोना मानवा अपर्याप्तका भवंति ॥ १५९ ॥

जी० प्र०—पर्याप्तमनुष्यराशेः त्रिचतुर्भागो मानुषीणां द्रव्यस्त्रीणां परिमाणं भवति ४२ = ४२ = ४२ = ३ सामान्यमनुष्यराशौ पर्याप्तमनुष्यराशावपनीते अपर्याप्तमनुष्यप्रमाण भवति । १ ३ ७ अत्र च 'प्राङ्मानुषोत्तरान्मनुष्याः' इति पंचचत्वारिंशल्लक्षविष्कंभमनुष्यलोकस्य विक्खंभवग्गदहगुणेत्यादिना आनीतपरिधि एककोटिद्वाचत्वारिंशल्लक्षत्रिंशत्सहस्रद्विशतैकोनपंचाशद्योजनैकक्रोशसप्तदशशतपट्षष्टिदंडपंचांगुलमात्रः यो १, ४२, ३०, २४९, क्रो १, दं १७६६, अं ५ । अयं च व्यासचतुर्थांशेन ४१/४ ल एतावता ११२५००० गुणितः षोडशलक्षनव-६५४६०१ भागा १९ इद चांगुलीकर्तुं वर्गितमकृत्वा योजनांगुलवर्गेण ७६८००० ७६८००० गुणितं नवसहस्रचतुःशतद्वाचत्वारिंशत्त्रिवारको-२५६ शतत्रिकोटिपद्लक्षचतुःपंचाशत्सहस्रपद्शतैकयोजनमात्रं एकयोजनस्यैकान्नविंशतिद्विशतपट्पंचाशद्भागाधिकं क्षेत्रफलं भवति १६००९०३०-टयेकपंचाशल्लक्षचतुःसहस्रनवशताष्टषष्टिद्विवारकोटयेकान्नविंशतिलक्षत्रिचत्वारिंशत्सहस्रचतुःशतकोटिप्रतरांगुलमात्रं भवति ९४४२, ५१०-४९६८, १९४३४०००००००० एतानि च प्रमाणांगुलानि नोत्सेधांगुलानि कर्तव्यानि । चतुर्थकालादौ उत्सर्पिणतृतीयकालावसाने विदेहादिक्षेत्रे चात्मांगुलस्यापि तत्प्रमाणत्वात् एतेभ्यः पर्याप्तमनुष्याणां संख्यातगुणत्वेऽपि आकाशस्यावगाहशक्तिवैचित्र्यात्संशीतिर्न कर्तव्या ॥ १५९ ॥ अथ देवगतिजीवसंख्यां गाथाचतुष्टयेनाह—

म० प्र०—पर्याप्तमनुष्याणां त्रिचतुर्भागमात्रं मानुषीणां-द्रव्यमनुष्यस्त्रीणां परिमाणं भवति । पर्याप्तमनुष्यराशिना न्यूनसामान्यमनुष्यराशिप्रमिता मनुष्या-पर्याप्तका भवति तिर्यग्मनुष्यगत्योर्द्वयोरपि अपर्याप्तका इत्यत्र लब्ध्यपर्याप्तका एव ग्राह्याः । निवृत्त्यपर्याप्तकानां संख्या पर्याप्तसंख्ययैव सिद्धा न्यूनाधिकत्वा-भावात् । एवं मनुष्यगतिजीवसंख्या कथिता ॥ १५९ ॥

सं० चं०—पर्याप्त मनुष्यनिका प्रमाण कह्या ताका च्यारि भाग कीजिए तामैं तीन भाग प्रमाण मनुषिणी द्रव्य स्त्री जाननी। बहुरि सामान्य मनुष्य राशिमैंस्यों पर्याप्त मनुष्यनिका परिमाण घटाएं अवशेष अपर्याप्त मनुष्यनिका परिमाण हो है इहां 'प्राङ्मानुषोत्तरान्मनुष्याः' इस सूत्रकरि पैंतालीस लाख योजन व्यास धरैं मनुष्य लोक है। ताका 'विक्खंभवग्गदहगुण' इत्यादि सूत्रकरि एक कोडि वियालीस लाख तीस हजार दोयसै गुणचास योजन, एक कोश, सतरहसै छ्यासठि धनुष, पांच अंगुल प्रमाण परिधि है। बहुरि याकौं व्यासकी चौथाई ग्यारह लाख पचीस हजार योजनकरि गुणैं सोलह लाख नवसै तीनि कोडि छहलाख चौवन हजार छसै एक योजन अर एक योजनका दोयसै छप्पन भागविषैं उगणीस भाग इतना क्षेत्रफल है। बहुरि याके अंगुल करने सो एक योजनके सात लाख अडसठि हजार अंगुल हैं। सो वर्गराशिका गुणकार वर्गरूप होइ इस न्यायकरि सात लाख अडसठि हजारका वर्गकरि तिस क्षेत्रफलकौं गुणैं नवहजार च्यारिसै वियालीस कोडाकोडि कोडि इक्यावन लाख च्यारि हजार नवसै अडसठि कोडाकोडि उसणीस लाख तियालीस हजार च्यारिसै कोडि प्रतरांगुल हैं। बहुरि प्रमाणांगुल हैं सो इहां उत्सेधांगुल न करने जातैं चौथा कालका आदिविषैं वा उत्सर्पिणीकालका तीसरा कालका अंतविषैं वा विदेहादि क्षेत्रविषैं आत्मांगुलका भी प्रमाण प्रमाणांगुलके समान है। सो इनि प्रतरांगुलनिके प्रमाणतैं भी पर्याप्त मनुष्य संख्यात गुणे हैं तथापि आकाशकी अवगाहनकी विचित्रता जानि संदेह न करना ॥ १५९ ॥ आगैं देवगतिके जीवनिकी संख्या च्यारि गाथानिकरि कहै हैं–

**तिण्णिसयजोयणाणं बेसदछप्पण्णअंगुलाणं च।**
**कदिहदपदरं वेंतरजोइसियाणं च परिमाणं ॥ १६० ॥**

त्रिशतयोजनानां द्विशतषट्पंचाशदंगुलानां च।
कृतिहतप्रतरं व्यंतरज्योतिष्काणां च परिमाणं ॥ १६० ॥

जी० प्र०–त्रिशतयोजनानां कृत्या षट्पंचाशदुत्तरद्विशतांगुलानां कृत्या च भाजितौ जगत्प्रतरौ यथासंख्यं व्यंतरप्रमाणं ज्योतिष्कप्रमाणं च भवति संदृष्टिः- व्यंतराः ४ । ६५ = । ८१ । १० ज्योतिष्काः ४ । ६५ = ॥ १६० ॥

मं० प्र०–त्रिशतयोजनानां कृत्या जगत्प्रतरे भाजिते यल्लब्धं तद् व्यंतरदेवानां परिमाणं भवति । पूर्ववद्भागहारयोजनानामंगुलविधानादि । तत्र पणट्ठी-गुणितैकाशीतिसहस्रकोटिमात्रसंख्येयप्रतरांगुलप्रमितो जगत्प्रतरस्य भागहारः । द्विशतषट्पंचाशदंगुलकृत्या भक्ते जगत्प्रतरे यल्लब्धं तज्ज्योतिष्कदेवानां परिमाणं भवति । अत्र पणट्ठीमात्रसंख्येयप्रतरांगुलप्रमितो जगत्प्रतरस्य भागहारः ॥ १६० ॥

सं० च०—तीनसै योजनके वर्गका भाग जगत्प्रतरकौं दीएं जो परिमाण होइ तितना व्यंतरनिका प्रमाण जानना। तीनसै योजन लंबा तीनसै योजन चौडा एक प्रदेश ऊंचा ऐसा क्षेत्रका जितने आकाशका प्रदेश होंइ ताका भाग दीजिए सो याका प्रतरांगुल कीएं पैसठि हजार पांचसै छत्तीसकौं इक्यासी हजार कोडि गुणां-करिए इतने प्रतरांगुल होइं तिनिका भाग जगत्प्रतरकौं दीये व्यंतरनिका प्रमाण होइ है। बहुरि दोयसै छप्पन अं-गुलके वर्गका जगत्प्रतरकौं भाग दीएं जो परिमाण आवै तितना ज्योतिषीनिका परिमाण जानना। दोयसै छप्पन अंगुल चौडा इतना ही लंबा एक प्रदेश ऊंचा ऐसा क्षेत्रका जितना आकाशका प्रदेश होइ ताका भाग दीजिए सो याका प्रतरांगुल पैसठि हजार पांचसै छत्तीस है ताका भाग जगत्प्रतरकौं दीएं ज्योतिषी देवनिका परिमाण हो है ॥ १६० ॥

**घणअंगुलपढमपदं तदियपदं सेढिसंगुणं कमसो ।**
**भवणे सोहम्मदुगे देवाणं होदि परिमाणं ॥ १६१ ॥**

घनांगुलप्रथमपदं तृतीयपदं श्रेणिसंगुणं क्रमशः ।
भवने सौधर्मद्विके देवानां भवति परिमाणं ॥ १६१ ॥

जी० प्र०—श्रेणीगुणितघनांगुलप्रथमवर्गमूलं श्रेणिगुणितघनांगुलतृतीयवर्गमूलं च यथाक्रमं भवनेषु सौधर्मद्वये च देवानां प्रमाणं भवति । संदृष्टिः—भावनाः –१ । सौधर्मद्वयजाः –३ ॥ १६१ ॥

मं० प्र०—घनांगुलस्य प्रथमवर्गमूलेन गुणितजगच्छ्रेणिमात्रं भवनवासिकदेवानां परिमाणं भवति । घनांगुलतृतीयवर्गमूलसंगुणितजगच्छ्रेणिमात्रं सौधर्मद्विके-सौधर्मैशानकल्पयोर्देवानां परिमाणं भवति । क्रमश इति यथाक्रमं पूर्वाचार्यानुक्रमं वा सूचयति ॥ १६१ ॥

सं० च०----घनांगुलका जो प्रथम वर्गमूल तिहिनैं जगत श्रेणीकरि गुणैं जो परिमाण होइ तितने भवनवासीनिका परिमाण जानना। बहुरि घनांगुलका जो तृतीय वर्गमूल तिहिनैं जगत श्रेणीकरि गुणैं जो परिमाण होइ तितने सौधर्म अरु ईशान स्वर्गका वासी देवनिका परिमाण जानना ॥ १६१ ॥

**तत्तो एगारणवसगपणचउणियमूलभाजिदा सेढी ।**
**पल्लासंखेज्जदिमा पत्तेयं आणदादिसुरा ॥ १६२ ॥**

तत एकादशनवसप्तपंचचतुर्निजमूलभाजिता श्रेणी ।
पल्यासंख्यातकाः प्रत्येकमानतादिसुराः ॥ १६२ ॥

जी० प्र०---तत उपरि सनत्कुमारमाहेंद्रयुगलादारभ्य शतारसहस्रारयुगलावसानपंचकल्पयुगलेषु देवाः यथाक्रमं निजैकादशमूलेन नवममूलेन सप्तममूलेन पंचममूलेन चतुर्थमूलेन भाजितजगच्छ्रेणिप्रमिता भवंति । ११ । ९ । ७ । ५ । ४ पुनः तत उपरि आनतादिकल्पयुगलद्वये अधस्तनमध्यमोपरिमग्रैवेयकत्रये अनुदिशविमानेषु चतुरनुत्तरविमानेषु च देवाः प्रत्येकं पल्यासंख्येयभागप्रमिता भवंति प ॥ १६२ ॥
a

मं० प्र०—ततः सौधर्मैशानकल्पाभ्यामूर्ध्वं निजैकादशवर्गमूलभक्तजगच्छ्रेणिमात्राः सनत्कुमारमाहेंद्रकल्पजा देवाः । निजनवमवर्गमूलविभक्तजगच्छ्रेणिप्रमिता ब्रह्मब्रह्मोत्तरकल्पजा देवाः । निजसप्तमवर्गमूलभाजितजगच्छ्रेणिसंख्या लांतवकापिष्ठकल्पजा देवाः । निजपंचमवर्गमूलावाप्तजगच्छ्रेणिप्रमाणाः शुक्रमहाशुक्रकल्पजा देवाः । निजचतुर्थवर्गमूलभाजितजगच्छ्रेणिप्रमाणाः शतारसहस्रारकल्पजा देवाः । आनतादिसुराः-आनतप्राणतारणाच्युतनवग्रैवेयकनवानुदिशविजयवैजयंतजयंतापराजित,भिधाः षट्विंशतिस्थानाविमानवासिनो देवाः प्रत्येकंपल्यासंख्यातैकभागप्रमिता भवंति तत्र आरणादिदेवाः संख्यातगुणहीनाः ॥१६२॥

सं० च०—बहुरि तहां ऊपरि सनत्कुमार माहेंद्र बहुरि ब्रह्म ब्रह्मोत्तर बहुरि लांतवकापिष्ठ शुक्रमहाशुक्र बहुरि शतार सहस्रार इनि पांच युगलनिविषैं अनुक्रमतैं जगतश्रेणीका ग्यारहवां नवमां सातवां पांचवां चौथा जो वर्ग-

मूल तिनिका भाग जगत श्रेणीकों दीएं जितना जितना परिमाण आवै तितना तितना तहांके वासी देवनिका प्रमाण जानना । वहुरि ता ऊपरि आनत प्राणत युगल वहुरि आरण अच्युत युगल वहुरि तीन अधोग्रैवेयक तीन मध्य ग्रैवेयक तीन उपरिम ग्रैवेयक वहुरि नव अनुदिश विमान वहुरि सर्वार्थसिद्धि विमान विना च्यारि अनुत्तर विमान इन एक एकविषैं देव पल्यके असंख्यातवे भाग प्रमाण जानने ॥ १६२ ॥

**तिगुणा सत्तगुणा वा सव्वट्ठा माणुसीपमाणादो ।**
**सामण्णदेवरासी जोइसियादो विसेसहिया ॥ १६३ ॥**

त्रिगुणा सप्तगुणा वा सर्वार्था मानुषीप्रमाणतः ।
सामान्यदेवराशिः ज्योतिष्कतो विशेषाधिकः ॥ १६३ ॥

जी० प्र०--सर्वार्थसिद्धिजाहमिंद्राः मनुष्यस्त्रीसंख्यातः त्रिगुणा भवंति । अथवा आचार्यांतराभिप्रायेण सप्तगुणा भवंति ४२=४२=४२=$\frac{3}{4}$ । ३ । ७ । ज्योतिष्कराशिमध्ये भावनकल्पवासिदेवमाधिकव्यंतरराशौ संख्येयभागमात्रे ४ । ६५=। ८१ । १० युक्ते सति सर्वसामान्यराशिर्भवति । ४ । ६५= १ ॥ १६३ ॥

इत्याचार्य श्रीनेमिचन्द्रविरचितायां गोम्मटसारापरनामपंचसंग्रहवृत्तौ जीवतत्त्वप्रदीपिकाख्यायां जीवकांडे विंशतिप्ररूपणासु गतिप्ररूपणनाम षष्ठोऽधिकारः ॥ ६ ॥

मं० प्र०-सर्वार्थसिद्धिदेवाः, मनुष्यस्त्रीप्रमाणात् त्रिगुणा इति केषांचिदाचार्याणां संप्रदायः । वा--अथवा सप्तगुणा इत्यपरेषां संप्रदायः । नास्माकमत्र-निर्णयशक्तिरस्ति । ज्योतिष्कदेवराशेर्विशेषाधिकः सामान्यदेवराशिर्भवति । ज्योतिष्कराशेः संख्येयभागमात्रेण व्यंतरदेवराशिना असंख्येयश्रेणिमात्रेण भावनदेवराशिना, असंख्यातश्रेणिमात्रेण वैमानिकदेवराशिना च साधिक इत्यर्थः ॥ १६३ ॥

इति श्रीमदभयचन्द्रसूरिसिद्धान्तचक्रवर्तिकृतौ गोम्मटसारपंचसंग्रहवृत्तौ गतिमार्गणाप्ररूपणो नाम षष्ठोऽधिकारः ॥ ६ ॥

---:०:---

संं० च०--बहुरि सर्वार्थसिद्धिके वासी अहमिंद्र देव मनुषिणीनिका जो परिमाण पर्याप्त मनुष्यनिका च्यारिभागमैं तीन भाग प्रमाण कह्या था तातैं तिगुणा जानना। बहुरि कोई आचार्यका अभिप्रायतैं सात गुणा है। बहुरि ज्योतिषी देवनिका परिमाणविषै भवनवासी कल्पवासी देवनिका प्रमाणकरि साधिक ऐसा ज्योतिषी देवनिके संख्यातवै भाग जो व्यंतर राशि सो जोडै सर्व सामान्य देवनिका परिमाण हो है॥ १६३॥

इति श्रीआचार्य नेमिचंद्र सिद्धांतचक्रवर्तीविरचित गोम्मटसार द्वितीयनाम पंचसंग्रह ग्रथकी जीवतत्त्वप्रदीपिका नाम संस्कृतटीकाके अनुसारि इस सम्यग्ज्ञानचद्रिका नामा भाषाटीकाविषैं प्ररूपित जे वीस प्ररूपणा तिनिविषै गतिप्ररूपणा नामा छठा अधिकार संपूर्ण भया॥ ६॥

---

## अथ इंद्रियमार्गणाप्ररूपणाधिकारः॥ ७॥

जी०-प्र०-

श्रीमंतं त्रिजगत्पूज्यं लोकालोकप्रकाशकं।
सप्तमं तीर्थकर्तारं श्रीसुपार्श्वं नमाम्यहं॥ ७॥

अथेंद्रियमार्गणां प्रारभमाणः इंद्रियशब्दस्य निरुक्तिपूर्वकमर्थं कथयति-

मं०-प्र०—

सुपार्श्वं भवसतापसंतानहरपार्श्वकं।
सप्तमं तीर्थकर्तारं जिनेंद्रं प्रणमाम्यहं॥ ७॥

अथैकादशभिर्गाथाभिः शास्त्रकारः इंद्रियमार्गणा प्ररूपयति-

सं० चं०-

लोकालोकप्रकाशकर जगत पूज्य श्रीमान।
सप्तम तीर्थंकर नमौं श्रीसुपार्श्व भगवान॥ ७॥

आगैं इंद्रियमार्गणाका आरंभ करैं हैं तहां प्रथम इंद्रिय शब्दका निरुक्ति पूर्वक अर्थ कहैं हैं—

**अहमिंदा जह देवा अविसेसं अहमहंति मण्णंता।**

**ईसंति एक्कमेक्कं इंदा इव इंदिये जाण ॥ १६४ ॥**

अहमिंद्रा यथा देवा अविशेषमहमहमिति मन्यमानाः ।
ईशते एकैकमिंद्रा इव इंद्रियाणि जानीहि ॥ १६४ ॥

जी० प्र०–यथा ग्रैवेयकादिजाता अहमिंद्रदेवा अहमहमिति स्वामिभृत्यादिविशेषशून्यं मन्यमाना एकैके भूत्वा आज्ञादिभिरपरतंत्राः संतः ईशते -प्रभवंति-स्वामिभाव श्रयंति तथा स्पर्शनादींद्रियाण्यपि स्पर्शादिस्वस्वविषयेषु ज्ञानमुत्पादयितुं ईशते-परानपेक्षतया प्रभवंति ततः कारणात् अहमिंद्रा इव इंद्रियाणीति सादृश्यार्थाश्रयनिरुक्तिसिद्धमिंद्रियशब्दार्थं जानीहि इति शिष्यसंबोधनं प्रतिपत्तव्यं ॥ १६४ ॥ अथेंद्रियभेदस्वरूपं निरूपयति—

मं० प्र०–यथा अहमिंद्रदेवाः-ग्रैवेयकनिवास्यादयः अविशेषं-इंद्रसामानिकादिभेदं विना स्वस्वव्यापारेषु अहमहमिति स्वतंत्रतया आत्मानं मन्यमानाः, एकैकं-प्रत्येकं, ईशते-स्वामित्वेन सेवादैन्यविरहिताः प्रवर्तंते तथा स्पर्शनादींद्रियाण्यपि स्पर्शादिस्वस्वविषयग्रहणव्यापारेषु हीनाधिकभावविशेषं विना अहमहमिति स्वतंत्रया आत्मान मन्यमानानि प्रत्येकमीशते–परापेक्षा विना वर्तंते । ततः इद्रा इव इद्रियाणीति इवार्थे घप्रत्ययो निपात्यते । स्पर्शनेंद्रियस्य स्वविषये स्पर्शे ज्ञानं जनयितुं रसनाद्यपेक्षा नहि विद्यते एव रसनादीनामपींद्रियांतरनिरपेक्षतया स्वस्वविषयज्ञानजननस्वभावोऽस्तीति ज्ञातव्यं । इद निरुक्तिवचनं इंद्रस्य आत्मनो लिंगमिंद्रिय, इद्रेण जातिनामकर्मणा अगोपागनामकर्मणा वा सृष्टमिंद्रियमित्यादिनिरुक्तीनामुपलक्षणत्वेन सूचकं भवति ॥ १६४ ॥

सं० चं०–जैसैं ग्रैवेयकादिकविषैं उपजे ऐसे अहमिंद्र देव ते सेवक स्वामीके भेदरहित मैं ही मैं हौ ऐसैं मानते संते जुदे जुदे एक एक होइ आज्ञादिककरि पराधीनतातैं रहित होते संते ईश्वरताकौं धरैं हैं प्रभावकौं धरैं हैं स्वामीपनांकौं धरैं हैं तैसैं स्पर्शनादिक इंद्रिय भी अपने अपने स्पर्शादिविषयविषैं ज्ञान उपजावनेविषैं कोई किसीके आधीन नाहीं जुदे जुदे एक एक इंद्रिय परकी अपेक्षा रहित ईश्वरताकौं धरैं हैं प्रभावकौं धरे हैं तातैं अहमिंद्रवत् इंद्रिय हैं । ऐसैं समानतारूप निरुक्तिकरि सिद्ध भया ऐसा इंद्रिय शब्दका अर्थकौं हे शिष्य तू जानि ॥ १६४ ॥ आगैं इंद्रियनिके भेदस्वरूप कहै हैं—

**मदिआवरणखओवसमुत्थविसुद्धी हु तज्जबोहो वा ।**

# भाविंदियं तु दव्वं देहुदयजदेहचिण्हं तु ॥ १६५ ॥

मत्यावरणक्षयोपशमोत्थविशुद्धिर्हि तज्जबोधो वा ।
भावेंद्रियं तु द्रव्यं देहोदयजदेहचिह्नं तु ॥ १६५ ॥

जी० प्र०—मतिज्ञानावरणक्षयोपशमोत्था विशुद्धिर्जीवस्यार्थग्रहणशक्तिलक्षणलब्धि:, सा च मतिज्ञानावरणक्षयोपशमजनितबोधः स्वार्थग्रहणव्यापाररूपोपयोगः इति द्वयं भावेंद्रियं । भावः—चित्परिणामः, तदात्मकमिंद्रियं भावेंद्रियं, इंद्रस्य—आत्मनो लिंगं इंद्रियं इति व्युत्पत्त्यापि लब्ध्युपयोगलक्षणस्यैव भावेंद्रियत्वसमर्थनात् । पुनः जातिनामकर्मोदयसहकारि देहनामकर्मोदयजनितं निर्वृत्त्युपकरणरूपं, देहचिह्नं—एकेंद्रियादिशरीरस्य प्रतिनियतसंस्थानाभिव्यंजकरूपपुद्गलद्रव्यात्मकमिंद्रिय द्रव्येंद्रियं । एवमिंद्रियं द्रव्यभावात्मकतया द्विधा भिद्यते । तत्र लब्ध्युपयोगौ भावेंद्रियमिति, अर्थग्रहणशक्तिर्लब्धिः अर्थग्रहणव्यापार उपयोगः । 'प्रत्यक्षनिरतानींद्रियाणि' अक्षाणि इंद्रियाणि, अक्षमक्षं प्रति वर्तत इति प्रत्यक्षं विषयः, अक्षबोधो वा । तत्र निरतानि व्यापृतानींद्रियाणि । विशेषाभावात्तेषां संकरव्यतिकररूपेण व्यापृतिः प्राप्नोति ? इति चेन्न, प्रत्यक्षे नियमिते रतानीति प्रतिपादनात् । संकरव्यतिकरदोषनिवारणाय स्वविषयनिरतानींद्रियाणीति वा वक्तव्यं । स्वेषां विषयः स्वविषयः, तत्र निश्चयेन निर्णयेन रतानींद्रियाणि स्वविषयनिरतानींद्रियाणि, संशयविपर्यासावस्थायां निर्णयात्मकरतेरभावात् । तत्र आत्मनोऽनिंद्रियत्वं स्यात् ? इति चेन्न रूढिबलादुभयत्र प्रवृत्त्यविरोधः । अथवा 'स्ववृत्तिनिरतानींद्रियाणि' संशयविपर्ययनिर्णयादौ वर्तनं—वृत्तिः तस्यां स्ववृत्तौ निरतानींद्रियाणि । निर्व्यापारावस्थायामनिंद्रियव्यपदेशः स्यादिति चेन्न, दत्तोत्तरत्वात् । अथवा 'स्वार्थनिरतानींद्रियाणि' अर्यते—परिच्छिद्यते इत्यर्थः स्वस्मिन्नर्थे च निरतानींद्रियाणि निरवद्यत्वान्नात्र वक्तव्यमस्ति । अथवा इंदनादाधिपत्यात् इंद्रियाणि स्पर्शरसगंधरूपशब्दज्ञानावरणकर्मणां क्षयोपशमाः द्रव्येंद्रियकारणानींद्रियाणीत्यर्थः ।

यदिंद्रस्यात्मनो लिंगं यदि वा इंद्रेण कर्मणा । सृष्टं जुष्टं तथा दृष्टं दत्तं वेति तदिंद्रियं ॥
मलविद्धमणिव्यक्तिर्यथानेकप्रकारतः । कर्मविद्धात्मविज्ञप्तिस्तथानेकप्रकारतः ॥

पुनस्तेष्विंद्रियेषु तत्तदावरणक्षयोपशमविशिष्टात्मकप्रदेशसंस्थानमभ्यंतरनिर्वृत्तिः । तदवष्टब्धशरीरप्रदेशसंस्थानं बाह्यनिर्वृत्तिः । इंद्रियपर्याप्त्यायातनोकर्मवर्गणास्कंधरूपं स्पर्शाद्यर्थज्ञानसहकारि यत्तदभ्यंतरमुपकरणं । तदाश्रयभूतत्वगादिकं बाह्यमुपकरणमिति ज्ञातव्यं ॥ १६५ ॥

अथ तथाविधेंद्रियोपलक्षितजीवानाह—

मं० प्र०—मतिज्ञानावरणवीर्यांतरायक्षयोपशमोत्था तत्क्षयोपशमाज्जाता आत्मनो विशुद्धिः अर्थग्रहणशक्तिः, लब्धिः, योग्यतेत्यपरनामधेया, तज्जबोधो

वा तद्विशुद्धेर्जातः स्वार्थग्रहणव्यापाररूप उपयोगश्च भावेंद्रियं । भावः चित्परिणामः, तल्लक्षणमिंद्रियं भावेंद्रियमित्यनेन लब्ध्युपयोगौ भावेंद्रियमिति लक्षणार्थ-शास्त्राविसंवादेन खलु स्फुटं भावेंद्रियस्य उपयुक्त । मानव्य मनुष्यार्थः प्रदेशप्रचयाः या निर्वृत्तिः देशोपचारेणोत्पन्न जातिनामकर्मोदयसहितात् शरीरनामकर्मोदयाज्जात शरीरगत स्पर्शनादिभावेंद्रियस्य चिह्न किं निर्वृत्युपकरणभेदेन द्विविधं । द्रव्यं पुद्गलपर्यायः, तद्रूपमिंद्रियं द्रव्येंद्रियं नामैकदेशस्य नाम्नि वर्तनात् । निर्वृत्त्युपकरणे द्रव्येंद्रियाणीति परमागममाश्रित्य ग्रंथकारः स्वयमेवाग्रे वक्ष्यति । द्विविधशब्दः द्रव्येंद्रियभावेंद्रियभेदेनेंद्रियस्य सामर्थ्यसंभा-र्था इयं गाथा इति सूचयति ॥ १६५ ॥

सं०चं०--इंद्रिय दोय प्रकार हैं एक भावेंद्रिय एक द्रव्येंद्रिय। तहां लब्धि उपयोगरूप तौ भावेंद्रिय है। तहां मतिज्ञानावरणके क्षयोपशमतें भई जो विशुद्धता इंद्रियनिके जे विषय तिनके जाननेकी शक्ति जीवकें भई सो ही है लक्षण जाका सो लब्धि कहिए। बहुरि मतिज्ञानावरणके क्षयोपशमतें निपज्या ज्ञान विषय जाननेका प्रवर्तनरूप सो उपयोग कहिए जैसें किसी जीवकें सुननेकी शक्ति है परंतु उपयोग कहीं और जायगा लागि रह्या था सो विना उपयोग किछू सुनै नाहीं। बहुरि कोऊ जान्या चाहै है अर क्षयोपशम शक्ति नाहीं तौ कैसें जानै तातैं लब्धि अर उपयोग दोऊ मिलें विषयका ज्ञान होइ तातैं इनिकौं भावेंद्रिय कहिए। भाव कहिए चेतना परिणाम तींहिस्वरूप जो इंद्रिय सो भावेंद्रिय कहिए जातें इंद्र जो आत्मा ताका जो लिंग कहिए चिह्न सो इंद्रिय है ऐसी निरुक्ति करि भी लब्धि उपयोगरूप भावेंद्रियका ही दृढपना हो है। बहुरि निर्वृत्ति अर उपकरण रूप द्रव्येंद्रिय है तहां जिनि प्रदेशनिकरि विषयनिकौं जानैं सो निर्वृत्ति कहिए बहुरि वाके सहकारी निकटवर्ती जे होंइ तिनिकौं उपकरण कहिए सो जातिनामा नामकर्मके उदयसहित शरीरनामा नामकर्मके उदयतें निपज्या जो निर्वृत्ति उपकरणरूप देहका चिह्न एकेंद्रियादिकका शरीरका यथायोग्य अपने अपने ठिकानें आकारका प्रकट करनहारा पुद्गल द्रव्यस्वरूप इंद्रिय सो द्रव्येंद्रिय है। ऐसें इंद्रिय द्रव्य भाव भेदकरि दोय प्रकार है तहां लब्धि उपयोग भावेंद्रिय है। तहां विषयके ग्रहण करनेकी शक्ति सो लब्धि है अर विषयके ग्रहणरूप व्यापार सो उपयोग है। अब इंद्रिय शब्दकी निरुक्ति करि लक्षण कहै हैं—

'प्रत्यक्षनिरतानि इंद्रियाणि' अक्ष कहिए इंद्रिय सो अक्ष अक्ष प्रति जो प्रवर्तै सो प्रत्यक्ष कहिए । ऐसा प्रत्यक्षरूप विषय अथवा इंद्रिय ज्ञान तिहिंविषैं निरतानि कहिए व्यापार रूप प्रवर्तै ते इंद्रिय हैं। इहां तर्क-जो इस लक्षणविषैं विशेषके अभावतैं तिन इंद्रियनिके संकर व्यतिकररूपकरि प्रवृत्ति प्राप्त होय। जो परस्पर इंद्रियनिका स्वभाव मिलि जाय सो संकर कहिए अपने स्वभावतैं जुदापनाका होना सो व्यतिकर कहिए। तहां समाधान-जो इहां 'प्रत्यक्षे नियमिते रतानि इंद्रियाणि' अपने अपने नियमरूप प्रत्यक्षविषै जे रत ते इंद्रिय हैं ऐसा लक्षणका प्रतिपादन है । तातैं नियमरूप कहनेकरि अपना अपना विशेषका ग्रहण भया । अथवा संकर व्यतिकर दोष निवारणेके अर्थि 'स्वविषयनिरतानि इंद्रियाणि' स्वविषय कहिए अपना अपना विषय तिहिविषैं 'नि' कहिए निश्चयकरि निर्णयकरि रतानि कहिए प्रवर्तै ते इंद्रिय हैं ऐसा कहना । इहां तर्क-जो संशय विपर्यय-विषैं निर्णयरूप रत नाहीं है तातैं इस लक्षणकरि संशय विपर्ययरूप विषय ग्रहणविषैं आत्माकैं अतींद्रियपना होइ । तहां समाधान-जो रूढिके बलतैं निर्णयविषैं वा संशय विपर्ययविषैं दोऊ जायगा तिसलक्षणकी प्रवृत्ति-का विरोध नाहीं । जैसैं 'गच्छतीति गौः' गमन करै ताहि गो कहिए सो समभिरूढ नयकरि गमनकरतैं वा शयनादि करतैं भी गो कहिए तैसैं इहां भी जानना । अथवा 'स्ववृत्तिनिरतानि इंद्रियाणि' स्ववृत्तिकाहिए संशय विपर्यय रूप वा निर्णयरूप अपना प्रवर्तन तींहिविषैं निरतानि कहिये व्यापार रूप प्रवर्तै ते इंद्रिय हैं ऐसा लक्षण कहिए । इहां तर्क-जो ऐसा लक्षण कीएं अपने विषयका ग्रहण रूप व्यापारविषैं जीव न प्रवर्तै तींहिं अ-वस्थाविषै अतींद्रियपना कहना होइ । तहां समाधान—कि ऐसैं नाहीं, जातैं पूर्वै ही उत्तर दीया है। रूढिकरि विषय ग्रहण व्यापार होतैं वा न होतैं पूर्वोक्त लक्षण संभवै है । अथवा 'स्वार्थनिरतानि इंद्रियाणि' अर्यंते क-हिए जानिए सो अर्थ, सो अपनेविषैं वा विषयरूप अर्थविषैं जे निरत ते इंद्रिय हैं सो इसलक्षणविषै कोऊ दोष नाहीं, तातैं इहां किछू तर्क रूप कहना ही नाहीं । अथवा 'इंदनात् इंद्रियाणि' इंदनात् कहिए स्वामीपनांतैं इंद्रिय हैं । स्पर्श रस गंध वर्ण शब्द इनिका जानने रूप ज्ञानका आवरणभूत जे कर्म तिनिका क्षयोपशमतैं

अपना अपना विषय जाननेरूप स्वामित्वकौं धरैं द्रव्येंद्रिय है कारण जिनिका ते इंद्रिय हैं। ऐसा अर्थ जानना। उक्तं च श्लोक—

यदिंद्रस्यात्मनो लिंगं यदि वेंद्रेण कर्मणा।
सृष्टं जुष्टं तथा दृष्टं दत्तं चेति तदिंद्रियं ॥

याका अर्थ—इंद्र जो है आत्मा ताका चिह्न सो इंद्रिय है। अथवा इंद्र जो कर्म ताकरि निपज्या वा सेया वा तैसैं देख्या वा दीया सो इंद्रिय है।

मलविद्धमणिव्यक्तिर्यथानेकप्रकारतः।
कर्मविद्धात्मविज्ञप्तिस्तथानेकप्रकारतः ॥

याका अर्थ–जैसैं मलसंयुक्त मणिकी व्यक्ति अनेक प्रकारतैं हो है। तैसैं कर्मसंयुक्त आत्माकी जाननेरूप क्रिया अनेक प्रकारतैं होइ ऐसैं इंद्रिय शब्दके निरुक्तिका अनेक प्रकारकरि वर्णन कीया। बहुरि तिनि इंद्रियनिविषैं निर्वृत्ति दोय प्रकार अभ्यंतर, बाह्य। तहां जो निज निज इंद्रियावरणकी क्षयोपशमताकी विशेषता लीएं आत्माके प्रदेशनिका संस्थान सो अभ्यंतर निर्वृत्ति है। बहुरि तिसही क्षेत्रविषैं जो शरीरके प्रदेशनिका संस्थान सो बाह्य निर्वृत्ति है। बहुरि उपकरण भी दोयप्रकार है अभ्यंतर, बाह्य। तहां इंद्रिय पर्याप्तिकरि आई जो नो कर्मवर्गणा तिनिका स्कंधरूप जो स्पर्शादिविषय ज्ञानकौं सहकारी होइ सो तौ अभ्यंतर उपकरण है अर ताके आश्रयभूत जो चामडी आदि सो बाह्य उपकरण है। ऐसा विशेष जानना ॥१६५॥ आगैं इनि इंद्रियनिकरि संयुक्त जीवनिकौं कहैं हैं–

## फासरसगंधरूवे सद्दे णाणं च चिण्हयं जेसिं।

## इगिबितिचदुपंचिंदियजीवा णियभेयभिण्णा ओ ॥१६६॥

स्पर्शरसगंधरूपे शब्दे ज्ञानं च चिह्नकं येषां ।
एकद्वित्रिचतुःपंचेंद्रियजीवाः निजभेदभिन्ना ओः ॥ १६६ ॥

जी० प्र०—येषां जीवानां स्पर्शे ज्ञानं चिह्नं ते जीवा एकेंद्रियाः । येषां स्पर्शरसयोर्ज्ञानं चिह्नं ते जीवा द्वींद्रियाः । येषां स्पर्शरसगंधेषु ज्ञानं चिह्नं ते जीवास्त्रींद्रियाः । येषां स्पर्शरसगंधरूपेषु ज्ञानं चिह्नं ते जीवाश्चतुरिंद्रियाः । येषां स्पर्शरसगंधरूपशब्देषु ज्ञानं चिह्नं ते जीवाः पचेंद्रियाः । ते सर्वे जीवा निजनिजभेदभिन्ना इति ज्ञातव्याः ॥ १६६ ॥ अथैकेंद्रियादिजीवानां संभवदिंद्रियसंख्यां प्ररूपयति—

मं० प्र०—येषां जीवानां स्पर्शे रसे गंधे रूपे शब्दे च ज्ञानं साकारोपयोगरूपं स्वार्थग्रहणशक्तिजनितं भावेंद्रियाख्यलिंगमास्ति ते जीवा यथाक्रममेकद्वित्रिचतुःपंचेंद्रियाः, निजभेदभिन्नाः—स्वावांतरभेदविशिष्टा भवंति ओ इति शिष्यसंबोधनार्थं प्राकृते अव्ययं । अत्रायं विभागः—एकस्मिन्नेव स्पर्शे ज्ञान येषां ते एकेंद्रियाः । द्वयोः स्पर्शरसनयोर्ज्ञानं येषां ते द्वींद्रियाः । त्रिषु स्पर्शरसगंधेषु ज्ञानं येषा ते त्रींद्रियाः । चतुर्षु स्पर्शरसगंधरूपेषु ज्ञान येषां ते चतुरिंद्रियाः । पंचसु स्पर्शरसगंधरूपशब्देषु ज्ञान येषा ते पचेंद्रिया इति ॥ १६६ ॥

सं० च०—जिनि जीवनिका स्पर्शविषैं ज्ञान है ऐसा चिह्न होइ ते एकेंद्रिय हैं। बहुरि जिनिका स्पर्श अर रसविषै ज्ञान है ऐसा चिह्न होइ ते जीव द्वींद्रिय हैं। बहुरि जिनिका स्पर्श रस गंधविषैं ज्ञान है ऐसा चिह्न होइ ते जीव तेइंद्रिय हैं । बहुरि जिनिका स्पर्श रस गंध वर्णविषैं ज्ञान है ऐसा चिह्न होइ ते जीव चतुरिंद्रिय हैं। बहुरि जिनिका स्पर्श रस गंध वर्ण शब्दविषैं ज्ञान ऐसा चिह्न होइ ते जीव पंचेंद्रिय हैं ते सर्व जीव अपने अपने भेदकरि जुदे हैं ऐसैं जानने ॥ १६६ ॥ आगै एकेंद्रियादिक जीवनिकै केती केती इंद्री संभवै हैं सो कहै हैं—

## ए इंदियस्स फुसणं एक्कंवि य होदि सेसजीवाणं ।
## होंति कमउड्ढियाइं जिब्भाघाणच्छिसोत्ताइं ॥१६७॥

**एकेंद्रियस्य स्पर्शनमेकमपि च भवति शेषजीवानां।**
**भवंति क्रमवर्धितानि जिह्वाघ्राणाक्षिश्रोत्राणि ॥ १६७ ॥**

जी० प्र०—एकेंद्रियजीवस्य एकं स्पर्शनमेव भवति शेषद्वींद्रियादिजीवानां जिह्वाघ्राणाक्षिश्रोत्राणि क्रमेणैकैकवृद्धानि भवंति। एकमेव इंद्रियं येषां ते एकेंद्रियाः। द्वे एव इंद्रिये येषां ते द्वींद्रियाः। त्रीण्येवेंद्रियाणि येषां ते त्रींद्रियाः। चत्वारि एव इंद्रियाणि येषां ते चतुरिंद्रियाः। पचैव इंद्रियाणि येषां ते पचेंद्रिया इति व्युत्पत्तिसिद्धत्वात् ॥ १६७ ॥ अथ स्पर्शनादींद्रियाणां विषयक्षेत्रं प्रमाणयति--

म० प्र०—प्राक्तनसूत्रे एकेंद्रियादीना विषय वृद्धिक्रमो दर्शितः। अत्रेंद्रियवृद्धिक्रमो दर्श्यते तद्यथा-एकेंद्रियस्य जीवस्य स्पर्शनमेकमेवेंद्रियं भवति। शेषाणां द्वींद्रियादीनां पचेंद्रियपर्यंताना क्रमवृद्धानि जिह्वाघ्राणाक्षिश्रोत्राणींद्रियाणि भवंति। जिह्वा-रसनं, अक्षि चक्षु,। द्वे स्पर्शनरसने इंद्रिये येषां ते द्वींद्रियाः। त्रीणि स्पर्शनरसनघ्राणानींद्रियाणि येषां ते त्रींद्रियाः। चत्वारि स्पर्शनरसनेनघ्राणचक्षूंषि इंद्रियाणि येषा ते चतुरिंद्रियाः। पंच स्पर्शनरसनघ्राणचक्षुश्रोत्राणींद्रियाणि येषां ते पंचेंद्रिया इति ॥ १६७ ॥

सं० च०—इंद्रिय पंच हैं तिनिविषैं सर्व शरीरकौं स्पर्शन कहिए, जिह्वाकौं रसना कहिए, नासिकाकौं घ्राण कहिए, नेत्रकौं चक्षु कहिए, कर्णकौं श्रोत्र कहिए। तहां एकेंद्रिय जीवके स्पर्शन इंद्री ही है। बहुरि अवशेष जीवनिकै एक एक बंधता इंद्रिय अनुक्रमतैं जानने सो वेइंद्रीके रसना इंद्री बध्या, तेइंद्रीके घ्राण इद्री बध्या, चतुरिंद्रियकैं चक्षु इंद्रिय बध्या, पंचेंद्रियकैं श्रोत्र इंद्रिय बध्या जातैं एक है इंद्रिय जिनिकैं ते जीव एकेंद्रिय हैं। दोय है इंद्रिय जिनिकैं ते द्वींद्रिय है। तीन है इंद्रिय जिनिकैं ते त्रींद्रिय हैं। च्यारि हैं इंद्रिय जिनके ते चतुरिंद्रिय हैं। पांच हैं इंद्रिय जिनके ते पंचेंद्रिय है। ऐसैं निरुक्ति हो है ॥ १६७ ॥ आगैं स्पर्शनादि इंद्रियनिके विषयभूत क्षेत्रका परिमाण कहैं हैं--

**धणुवीसडदसयकदी जोयणछादालहीणतिसहस्सा।**
**अट्ठसहस्स धणूणं विसया दुगुणा असण्णित्ति ॥ १६८ ॥**

**धनुर्विंशत्यष्टदशककृतिः योजनषट्चत्वारिंशद्धीनत्रिसहस्राणि ।**
**अष्टसहस्रं धनुषां विषया द्विगुणा असंज्ञीति ॥ १६८ ॥**

जी० प्र०—एकेंद्रियजीवस्य स्पर्शनेंद्रियविषयक्षेत्रं विंशतिकृतिदंडप्रमितं भवति । ४०० । द्वींद्रियाद्यसंज्ञिपर्यंतं स्पर्शनेंद्रियविषयक्षेत्राणि द्विगुणद्विगुणक्रमाणि भवंति । ८०० । १६०० । ३२०० । ६४०० । द्वींद्रियजीवस्य रसनेंद्रियविषयक्षेत्रं अष्टकृतिदंडप्रमाणं भवति । ६४ । त्रींद्रियाद्यसंज्ञिपंचेंद्रियावसानजीवानां रसनेंद्रियविषयक्षेत्राणि द्विगुणद्विगुणक्रमाणि भवति । १२८ । २५६ । ५१२ । त्रींद्रियजीवस्य घ्राणेंद्रियविषयक्षेत्रं दशकृतिदंडपरिमितं भवति १०० । चतुरिंद्रियासंज्ञिपंचेंद्रियजीवयोर्घ्राणेंद्रियविषयक्षेत्रं द्विगुणद्विगुणक्रमं भवति । २०० । ४०० । चतुरिंद्रियजीवस्य चक्षुरिंद्रियविषयक्षेत्रं षट्चत्वारिंशन्न्यूनत्रिसहस्रयोजनप्रमित भवति २९५४ । असंज्ञिपंचेंद्रियस्य चक्षुरिंद्रियविषयक्षेत्रं द्विगुणं भवति । ५९०८ । असंज्ञिपंचेंद्रियस्य श्रोत्रेंद्रियविषयक्षेत्र अष्टसहस्रदंडावच्छिन्नं भवति ८००० ॥ १६८ ॥

म० प्र०—एकेंद्रियादीनां जीवानां स्वस्वेंद्रियविषयोत्कृष्टक्षेत्रं गाथाद्वयेन प्रदर्श्यते । तद्यथा - एकद्वित्रिचतुरसंज्ञिपंचेंद्रियाणां स्पर्शनेंद्रियविषयोत्कृष्टक्षेत्रप्रमाण यथाक्रमं धनुषा विंशतिकृतिश्चतुःशतानि, उत्तरत्र द्विगुणद्विगुणानि अष्टशतानि, षोडशशतानि, द्वात्रिंशच्छतानि चतुःषष्टिशतानि च भवंति । द्वींद्रियस्य रसनेंद्रियविषयोत्कृष्टक्षेत्रप्रमाणं दंडानामष्टकृतिश्चतुःषष्टिः ततः पुनस्त्रींद्रियादीनां द्विगुणद्विगुणं, अष्टाविंशत्युत्तरशत, षट्पंचाशदुत्तरद्विशती द्वादशोत्तरपञ्चशती च भवति । त्रींद्रियस्य घ्राणेंद्रियविषयोत्कृष्टक्षेत्रप्रमाण दंडानां दशकृतिः शत । ततो द्विगुणद्विगुणं शतद्वय, शतचतुष्टयं च भवति । चतुरिंद्रियस्य चक्षुर्विषयोत्कृष्टक्षेत्रप्रमाणं चतु पंचाशदुत्तरनवशताधिकद्विसहस्री योजनानां, ततो द्विगुणं अष्टोत्तरनवशताधिकपञ्चसहस्री योजनानां, असंज्ञिपंचेंद्रियस्य श्रोत्रेंद्रियविषयोत्कृष्टक्षेत्रप्रमाणं दंडानामष्टसहस्री भवति ॥ १६८ ॥

सं० च०—एकेंद्रिय जीवकैं स्पर्शन इंद्रियके विषयका क्षेत्र वीसकी कृति च्यारिसै धनुषका प्रमाण जानना । बहुरि वेइंद्रियादिक असैनी पंचेंद्रिय पर्यंतकैं दूणा दूणा जानना । सो द्वींद्रियकै आठसै धनुष, त्रींद्रियकैं सोला सै धनुष, चतुरिंद्रियकै बत्तीससै धनुष, असैनी पंचेंद्रियकैं चौसठिसै धनुष स्पर्शन इंद्रियका विषय क्षेत्र जानना । इतना इतना क्षेत्र पर्यंत तिष्ठता जो स्पर्शनरूप विषय ताकौं जानैं । बहुरि द्वींद्रियजीवकैं रसना इंद्रियका विषय क्षेत्र आठकी कृति चौसठि धनुष प्रमाण जानना । आगैं दूणां दूणां सो तेइंद्रियकैं एकसौ अठाईस धनुष चतुरिंद्रियकैं दोयसै छप्पन धनुष असैनी पंचेंद्रियकै पांचसै वारा धनुष रसना इंद्रियका विषयभूत क्षेत्रका परिमाण जानना । बहुरि ते इंद्रियकैं घ्राण इंद्रियका विषयभूत क्षेत्र दशकी कृति सौ धनुष प्रमाण जानना । आगैं दूणां दूणां सो

पुनरन्यो जीवो गत्यंतरादागत्य तदैव तस्मिन् बीजे प्रक्रामति--उत्पद्यते विरोधाभावात् । ये पुनर्मूलकादयः प्रतिष्ठितप्रत्येकत्वेन परमागमे प्रसिद्धास्तेऽपि प्रथम-तायां शरीरग्रहणकाले प्रथमसमये अंतर्मुहूर्तमात्रे वा प्रत्येकाः- अप्रतिष्ठितप्रत्येका एव पश्चान्निगोदजीवैर्यदा आश्रियते तदा प्रतिष्ठिता भवतीति तात्पर्यं । ॥ १८७ ॥ अथ श्रीमाधवचंद्रत्रैविद्यदेवाः प्रत्येकजीवानां प्रतिष्ठिताप्रतिष्ठितविशेषलक्षणं गाथात्रयेणाह–

सं० च०—बीजे कहिए पूर्वै जे कहे मूलकों आदि देकरि बीज पर्यंत बीजजीव उपजनेका आधार भूत पुद्गलके स्कंध सो योनीभूते कहिए जिस विषै जीव उपजै असी शक्ति संयुक्त होतसंतैं जल वा काला-दिकका निमित्त पाइ सोई जीव वा और जीव आनि उपजैं हैं। भावार्थ—पूर्वै जो बीजविषै जीव तिष्ठै था सो जीव तौ निकरी गया अर उस बीज विषै असी शक्ति रही जो इसविषैं जीव आनि उपजै तहां जलादिकका निमित्त होतैं पूर्वै जो जीव उस बीजकौं अपना प्रत्येक शरीरकरि पीछैं अपना आयुके नाशतै मरण पाइ निकसि गया था सोई जीव बहुरि तिसही अपने योग्य जो मूलादि बीज तींहि विषै आनि उपजै है अथवा जो वह जीव और ठिकानै उपज्या होइ तौ इस बीजविषै अन्य कोई शरीरांतरविषै तिष्ठता जीव अपना आयुके नाशतैं मरण पाइ आनि उपजै है। किछु विरोध नाहीं। जैसैं गोंहू विषै जीव था सो निकसि गया बहुरि याकौं वोया तब उस ही विषै सोई जीव वा अन्य जीव आनि उपज्या सो यावत् काल जीव उपजनेकी शक्ति होइ ता-वत् काल योनीभूत कहिए। बहुरि जब ऊगनेकी शक्ति न होइ तब अयोनीभूत कहिए असा भेद जानना। बहुरि जे मूलतैं आदि देकरि वनस्पती काय प्रत्येक प्रतिष्ठित प्रसिद्ध हैं तेऊ प्रथम अवस्थाविषैं जन्मतैं प्रथम समयतैं लगाइ अंतर्मुहूर्तकालपर्यंत अप्रतिष्ठित प्रत्येक ही रहै हैं। पीछैं निगोदजीव जब आश्रय करै हैं तब स-प्रतिष्ठित प्रत्येक होय हैं ॥ १८७ ॥ आगैं श्रीमाधवचंद्र नामा आचार्य त्रैविद्यदेव सो सप्रतिष्ठित अप्रतिष्ठित जीवनिका विशेष लक्षण तीन गाथानिकरि कहैं हैं—

## गूढसिरसंधिपव्वं समभंगमहीरुहं(यं) च छिण्णरुहं।

**साहारणं सरीरं तव्विवरीयं च पत्तेयं ॥ १८८ ॥**

गूढशिरासंधिपर्वसमभंगमहीरुकं च छिन्नरुहं ।
साधारणं शरीरं तद्विपरीतं च प्रत्येकं ॥ १८८ ॥

जी० प्र०—यत् प्रत्येकशरीरं गूढशिरं-अदृश्यबहिःस्नायुक, गूढसंधि-अदृश्यसंधिरेखाबंधं, गूढपर्वं-अदृश्यग्रंथिकं, समभंगं-त्वग्रहितत्वेन सदृशच्छेदं, अहीरुकं-अंतर्गतसूत्ररहित, छिन्नं रोहतीति छिन्नरुहं च तच्छरीरं साधारणं-साधारणजीवाश्रितत्वेन साधारणमित्युपचर्यते । प्रतिष्ठितशरीरमित्यर्थः । तद्विपरीत गूढशिरत्वादिपूर्वोक्तलक्षणरहितं तालनालिकेरतिंतिणीकादिशरीरं अप्रतिष्ठितप्रत्येकशरीरमिति विभागं चशब्दः सूचयति ॥ १८८ ॥

मं० प्र०—यत्प्रत्येकशरीरं गूढशिर अदृश्यवहिःस्नायुक गूढसंधि अदृश्यसंधिरेखाबंधं गूढपर्व अदृश्यग्रंथिकं समभंगं त्वग्रहितत्वेन सदृशच्छेदं अहिरुकं—अंतर्गतसूत्ररहित छिन्नं रोहतीति छिन्नरुहं च तच्छरीरं साधारण । साधारणजीवाश्रितत्वेन साधारणमित्युपचारेणोच्यते प्रतिष्ठितशरीरमित्यर्थः । तद्विपरीतं गूढशिरत्वादिपूर्वोक्तलक्षणरहित तालनालिकेरादिशरीरमप्रतिष्ठितप्रत्येकशरीरमिति विभागार्थश्चशब्द. ॥ १८८ ॥

सं० च०—जिस प्रत्येक वनस्पती शरीरका सिरा संधि पर्व गूढ होइ बाह्य दीखै नाहीं तहां सिरा तौ लंबी लकीरसी जैसैं कांकडीविषैं होइ । बहुरि संधि वीचिमें छेहा जैसैं दाड्यौ वा नारंगीविषैं हो है । बहुरि पर्व गांठि जैसैं सांठाविषै हो है सो कची अवस्थाविषै जाकैं ए बाह्य दीखैं नाहीं ऐसा वनस्पती बहुरि समभंग कहिए जाका टूंक ग्रहण कीजिये तो कोऊ तातूं लगा न रहै समान बरावरि टूटै ऐसा । बहुरि अहीरुहं कहिए जाके विषै सूत सारिखा तातूं न होइ ऐसा । बहुरि छिन्नरुहं कहिए जो काट्या हुवा ऊगै ऐसा वनस्पती सो साधारण है । इहां प्रतिष्ठित प्रत्येक साधारण जीवनिकरि आश्रितकी अपेक्षा उपचारकरि साधारण कह्या है । बहुरि तद्विपरीतं कहिये पूर्वोक्त गूढ सिरा आदि लक्षण रहित नालिकेर आम्रादि शरीर अप्रतिष्ठित प्रत्येक शरीर जानना । गाथा विषैं कह्या है जो चकार सो इस भेदकौं सूचै है ॥ १८८ ॥

**मूले कंदे छल्लीपवालसालदलकुसुमफलबीजे ।**

**समभंगे सदि णंता असमे सदि होंति पत्तेया ॥ १८९ ॥**

मूले कंदे त्वक्प्रबालशालादलकुसुमफलबीजे ।
समभंगे सति नांता असमे सति भवंति प्रत्येकाः ॥ १८९ ॥

जी० प्र०—मूले कंदे त्वचि पल्लवांकुरे क्षुद्रशाखायां पत्रे कुसुमे फले बीजे च समभंगे सति अनंताः--अनंतकायाः -प्रतिष्ठितप्रत्येकशरीरा इत्यर्थः । मूलादिषु समभंगरहितवनस्पतिषु अप्रतिष्ठितप्रत्येकशरीरा भवंति ॥ १८९ ॥

मं० प्र० ---येषा प्रत्येकवनस्पतीना मूलं -कदः, त्वक्, प्रवालः--नवपल्लवः, शाला-क्षुद्रशाखा, दलं -पत्रं, कुसुमं, फलं, बीजं च समभंगं भवेत् हीरुकं विना भज्येत तथासति ते जीवाः अनता.--अनतैर्निगोदैराश्रिताः प्रतिष्ठिता इत्यर्थः येषा मूलादिः समभगो न भवति तथासति ते जीवाः अप्रतिष्ठित-प्रत्येका भवति ॥ १८९ ॥

सं० च०—मूल कहिये जड कंद कहिये पेड छली कहिए छालि प्रवाल कहिए कौंपल अंकुरा, शाला कहिए छोटी डाहली शाखा कहिए बडी डाहली दल कहिए पान कुसुम कहिए फूल फल कहिए फल बीज कहिये जातैं फेरि उपजैं सो बीज सो ए समभंग होंइ तो अनंत कहिए अनंतकायरूप प्रतिष्ठित प्रत्येक हैं। बहुरि जो मूल आदि वनस्पती समभंग न होइ सो अप्रतिष्ठित प्रत्येक हैं। जीहि वनस्पतिका मूलकंद छाल इत्यादिक समभंग होइ सो प्रतिष्ठित प्रत्येक है अर जाका समभंग न होइ सो अप्रतिष्ठित प्रत्येक है। तोड्या थका तांतू कोई लग्या न रहै बराबरि टूटै सो समभंग कहिए ॥ १८९ ॥

**कंदस्स व मूलस्स व सालाखंदस्स वावि बहुलतरी ।**
**छल्ली साणंतजिया पत्तेयजिया तु तणुकदरी ॥ १९० ॥**

कंदस्य वा मूलस्य वा शालास्कंधस्य वापि बहुलतरी ।
त्वक् सा अनंतजीवा प्रत्येकजीवास्तु तनुकतरी ॥ १९० ॥

जी० प्र०—येषां प्रत्येकवनस्पतीनां कंदस्य वा मूलस्य वा शालायाः क्षुद्रशाखाया वा स्कंधस्य या त्वक् बहुलतरी-स्थूलतरी स्यात् ते वनस्पतयः अनंतकायजीवा भवंति-अनंतजीवैः-निगोदजीवैः सहिताः प्रतिष्ठितप्रत्येकशरीरा भवंति इत्यर्थः तु पुनः येषां कंदादिषु त्वक् तनुतरी ते वनस्पतयः अप्रतिष्ठितप्रत्येकशरीरा भवंति ॥ १९० ॥

मं० प्र०—येषां प्रत्येकवनस्पतीना कंदस्य वा मूलस्य वा शालाया वा स्कंधस्यापि वा त्वक् बहुलतरा -स्थूलतरा भवति ते सानंतजीवाः--अनंतजीवैर्निगोदजीवैः सहिताः प्रतिष्ठितप्रत्येका इत्यर्थ. । तु पुनः, येषां कंदादीना त्वक् तनुतरा--अत्यल्पा ते अप्रतिष्ठितप्रत्येकजीवा भवति ॥ १९०॥ अथ श्रीनेमिचंद्रसिद्धांतचक्रवर्तिनः साधारणजीवस्वरूपं गाथासप्तकेन प्ररूपयति--

सं० च०—जिस वनस्पतीका कंदकी वा मूलकी वा क्षुद्र शाखाकी वा स्कंधकी छालि मोटी होइ सो अनंत काय है। निगोदजीव सहित प्रतिष्ठित प्रत्येक है। बहुरि जिस वनस्पतीका कंदादिककी छालि पतली होइ सो अप्रतिष्ठित प्रत्येक है॥ १९० ॥ आगैं श्रीनेमिचंद्र सिद्धांतचक्रवर्ती साधारण वनस्पतीका स्वरूप सात गाथानिकरि कहै हैं—

## साहारणोदयेण णिगोदसरीरा हवंति सामण्णा ।
## ते पुण दुविहा जीवा वादरसुहमात्ति विण्णेया ॥ १९१ ॥

साधारणोदयेन निगोदशरीरा भवंति सामान्याः ।
ते पुनर्द्विविधा जीवा वादरसूक्ष्मा इति विज्ञेयाः ॥ १९१ ॥

जी० प्र०—साधारणनामकर्मोदयेन जीवा निगोदशरीरा भवंति । नि-नियतां गां-भूमिं क्षेत्रं निवासं, अनंतानंतजीवानां ददाति इति निगोदं । निगोदं शरीरं येषां ते निगोदशरीराः इति लक्षणसिद्धत्वात् । त एव सामान्याः-साधारणशरीरा जीवा पुनः वादराः सूक्ष्माश्चेति द्विधा पूर्वोक्तलक्षणलक्षिता विज्ञेयाः ॥ १९१ ॥

मं० प्र०—स्थावरनामकर्मोत्तरप्रकृतिभेदस्य साधारणनामकर्मणः उदयेन जीवाः सामान्याः साधारणा भवंति । किंविशिष्टाः संतः ? निगोदशरीराः—नियतानामनंतजीवानामेकामेव गां-भूमिं क्षेत्रं निवासं ददातीति निगोदं शरीरं येषा ते निगोदशरीराः ते साधारणजीवाः पुनः वादराः सूक्ष्मा इति द्विविधा विज्ञेयाः । अत्रापि वादरसूक्ष्मलक्षणं प्रागुक्तमेव ज्ञातव्यं ॥ १९१ ॥

सं० च०—साधारण नामा नामकर्मकी प्रकृतिके उदयतें निगोद शरीरके धारक साधारण जीव हो हैं। नि- कहिये नियतिले अनंते जीव तिनिकों गो कहिये एकही क्षेत्रकों जो द कहिये देइ सो निगोद शरीर जानना। सो जिनकैं पाइए ते निगोदशरीरी हैं बहुरि तेई सामान्य कहिये साधारण जीव हैं। बहुरि ते वादर अर सूक्ष्म ऐसे भेदतें दोय प्रकार पूर्वोक्त वादर सूक्ष्मपना लक्षणके धारक जानने॥ १९१ ॥

**साहारणमाहारो साहारणमाणपाणगहणं च।**
**साहारणजीवाणं साहारणलक्खणं भणियं ॥ १९२ ॥**

साधारणमाहारः साधारणमानपानग्रहणं च।
साधारणजीवानां साधारणलक्षणं भणितं ॥ १९२ ॥

जी० प्र०—यत्साधारणनामकर्मोदयवशवर्त्यनंतजीवानां उत्पन्नप्रथमसमये आहारपर्याप्तिस्तत्कार्यं च आहारवर्गणायातपुद्गलस्कंधानां खल-रसभागपरिणमनं साधारण सदृश समकालं च भवति। तथा शरीरपर्याप्तिः तत्कार्यं च आहारवर्गणायातपुद्गलस्कंधानां शरीराकारपरिणमनं तथा इंद्रियपर्याप्तिः तत्कार्यं च स्पर्शनादींद्रियाकारपरिणमन तथा आनपानपर्याप्तिः तत्कार्यं च उच्छ्वासनिश्वासग्रहणं साधारणं सदृशं समकालं च भवति। तथा प्रथमसमयोत्पन्नानामिव तत्रैव शरीरे द्वितीयादिसमयोत्पन्नानामपि अनतानंतजीवानां पूर्वपूर्वसमयोत्पन्नानंतानंतजीवैः सह आहारपर्याप्त्यादिकं सर्वं सदृशं समकालं च भवति। तदिदं साधारणलक्षणं पूर्वसूरिभिर्भणितं ज्ञातव्य। चशब्देन शरीरेंद्रियपर्याप्तिद्वयं समुच्चयीकृतं ॥ १९२ ॥

मं० प्र०—येषामनतजीवाना साधारणनामकर्मोदयवशवर्तिनां, उत्पन्नप्रथमसमये आहारपर्याप्तिः, तत्कार्यं आहारवर्गणायातपुद्गलस्कंधखलरसभागपरिणमनं च साधारणं-सदृश समकालं च तथा शरीरपर्याप्तिः तत्कार्यं आहारवर्गणायातपुद्गलस्कंधस्य शरीराकारपरिणमनं च तथा इंद्रियपर्याप्तिः तत्कार्यं स्पर्शनेंद्रियाकारपरिणमन च तथा आनपानपर्याप्तिः तत्कार्यं उच्छ्वासनिश्वासग्रहण च साधारण सदृशरूपं समकाल च भवति ते साधारणजीवा इति साधारणजीवाना उत्पत्तिप्रथमसमयोत्पन्नानामिव तस्मिन्नेव शरीरे द्वितीयादिसमयोत्पन्नानामपि अनंतजीवानां पूर्वपूर्वसमयोत्पन्नानंतजीवैः सह आहारपर्याप्त्यादिकं सर्वं सदृशरूपं समकाल भवतीति साधारणलक्षणं पूर्वसूरिभिर्भणित ज्ञातव्यं। चशब्देन शरीरेंद्रियपर्याप्तिद्वयतत्कार्यसमुच्चयः कृतः ॥ १९२ ॥

सं० च०—साधारण नामा नामकर्मके उदयके वशवर्ती जे साधारण जीव तिनिकैं उपजते पहला समय विषै आहार पर्याप्ति हो है सो साधारण कहिए अनंत जीवनिकैं युगपत एक काल हो है। सो आहार पर्याप्तिका कार्य यहु जो आहार वर्गणारूप जे पुद्गल स्कंध तिनिकौं खल रस भागरूप परिणमावै है। बहुरि तिनही आहार वर्गणारूप पुद्गलस्कंधनिकौं शरीरके आकार परिणमावनेरूप है कार्य जाका ऐसा शरीर पर्याप्ति सो भी तिनि जीवनिके साधारण हो है। बहुरि तिनहीकौं स्पर्शन इंद्रियके आकार परिणमावना है कार्य जाका ऐसा इंद्रिय पर्याप्ति सो भी साधारण हो है। बहुरि सासोस्वास ग्रहणरूप है कार्य जाका ऐसा आनपान पर्याप्ति सो भी साधारण हो है। बहुरि एक निगोद शरीर है तींहिविषैं पूर्वैं अनंत जीव थे। बहुरि दूसरा तीसरा आदि समय विषैं नये अनंत जीव उसही विषैं अन्य आनि उपजैं तौ तहां जैसैं वे नये उपजे जे जीव आहार आदि पर्याप्तिकौं धरै हैं तैसैं ही पूर्व २ समय विषै उपजे थे जे अनंतानंत जीव ते भी उनहीकी साथि आहारादिक पर्याप्तिनिकौं धरै हैं सदृश युगपत् सर्व जीवनिके आहारादिक हो है तातैं इनिकौं साधारण कहिये है सो यह साधारणका लक्षण पूर्वाचार्यनिकरि कह्या हूवा जानना ॥ १९२ ॥

## जत्थेक्क मरइ जीवो तत्थ दु मरणं हवे अणंताणं।
## वक्कमइ जत्थ एक्को वक्कमणं तत्थ णंताणं ॥ १९३ ॥

यत्रैको म्रियते जीवस्तत्र तु मरणं भवेदनंतानां।
प्रक्रामति यत्र एकः प्रक्रमणं तत्रानंतानां ॥ १९३ ॥

जी० प्र०—यन्निगोदशरीरे यदा एको जीवः स्वस्थितिक्षयवशेन म्रियते तदा तन्निगोदशरीरे समस्थितिकाः अनंतानंता जीवाः सहैव म्रियंते। यन्निगोदशरीरे यदा एको जीवः प्रक्रामति-उत्पद्यते तदा तन्निगोदशरीरे समस्थितिकाः-अनंतानंता जीवाः सहैव प्रक्रामंति। एवमुत्पत्तिमरणयोः समकालत्वमपि साधारणलक्षणं प्रदर्शितं। द्वितीयादिसमयोत्पन्नानामनंतानंतजीवानामपि स्वस्थितिक्षये सहैव मरणं ज्ञातव्यं।

एवमेकनिगोदशरीरे प्रतिसमयमनंतानंतजीवास्तावत्सहैव म्रियंते सहैवोत्पद्यंते यावदसंख्यातसागरोपमकोटीकोटिमात्री असंख्यातलोकमात्रसमयप्र-मिता उत्कृष्टनिगोदकायस्थितिः परिसमाप्यते। अत्र विशेषोऽस्ति-स च कः ? एकबादरनिगोदशरीरे सूक्ष्मनिगोदशरीरे वा अनंतानंताः साधारण-जीवा केवलपर्याप्ता एवोत्पद्यते पुनरपि एकशरीरे केवलमपर्याप्ता एवोत्पद्यंते न च मिश्रा उत्पद्यंते तेषां समानकर्मोदयनियमात् । एकस्य साधा-रणजीवस्य कर्मादानशक्तिलक्षणयोगेन गृहीतपुद्गलपिंडोपकारोऽनंतानतसाधारणजीवानां तस्य चानुग्रहणं भवति । पुनरपि अनंतानंतसाधारण-जीवानां योगशक्तिभिः गृहीतपुद्गलपिंडोपकारः एकस्य अनतानंतसाधारणजीवानां चानुग्रहणं समासेन संपिंडितत्वेन भवति । एकबादरनि-गोदशरीरे सूक्ष्मनिगोदशरीरे वा यथासंख्यं पर्याप्ताः बादरनिगोदजीवाः सूक्ष्मनिगोदजीवाश्च भवप्रथमसमये अनतानंता उत्पद्यंते । द्वितीयस-मये तेभ्योऽसंख्येयगुणहीना उत्पद्यंते । एव निरंतरमावल्यसंख्येयभागकालपर्यंतं प्रतिसमयमसंख्येयगुणहीनक्रमेणोत्पद्यंते। ततः परं जघन्यैकस-मयं उत्कृष्टेन आवल्यसंख्येयभागमात्रकालमंतरयित्वा पुनरपि जघन्येनैकसमयं उत्कृष्टेन आवल्यसंख्येयभागमात्रकालं निरंतरं निगोदशरीरे अ-संख्यातगुणहीनक्रमेण साधारणजीवा उत्पद्यंते । एवं सांतरनिरंतरक्रमेण तावदुत्पद्यंते यावत्प्रथमसमयोत्पन्नसाधारणजीवस्य सर्वजघन्यो निर्वृत्य-पर्याप्तकालोऽवशिष्यते २ १ पुनरपि तत्प्रथमादिसमयोत्पन्न पर्वसाधारणजीवानां आहारशरीरेंद्रियोच्छ्वासनिःश्वासपर्याप्तीनां स्वस्वयोग्यकाले नि-ष्पत्तिर्भवति ॥ १९२ ॥ अथ बादरनिगोदशरीराधारं प्रतिपादयति–

मं० प्र०—यस्मिन्नेकस्मिन् शरीरे यदा एको जीवः स्वस्थितिक्षयवशान्म्रियते तदा तस्मिन् समये समस्थितिकानामनतजीवानां मरण सहैव भवेत् । यस्मिन्नेकस्मिन्निगोदशरीरे यदा एको जीवः प्रक्रामति–उत्पद्यते तदैव–तस्मिन्निगोदशरीरे समस्थितिकानामनतजीवानां प्रक्रमणमुत्पत्तिः सहैव भवेत् इत्युत्पत्ति-मरणयोः समकालत्वमपि साधारणलक्षणं प्रदर्शितं द्वितीयादिसमयोत्पन्नानामपि अनंतजीवाना स्वस्थितिक्षये सह मरण द्रष्टव्यं । एवमेकस्मिन्निगोदशरीरे प्रतिसमयमनंतानंतजीवाना सहोत्पत्तिः सहमरणं च तावत्संभवति यावदसंख्यातसागरोपमकोटीकोटीनामसंख्यातलोकमात्रसमयप्रमिता उत्कृष्टनिगोदकायस्थितिः परिसमाप्यते ॥ १९३ ॥

सं० च०– एक निगोद शरीरविषैं जिस काल एक जीव अपना आयुके नाशतैं मरै तिसही काल विषैं जि-नकी आयु समान होइ ऐसे अनंतानंत जीव युगपत् मरै हैं। बहुरि जिस कालविषैं एक जीव तहां उपजै है उस-ही कालविषैं उसही जीवकी साथि समान स्थितिके धारक अनंतानंत जीव उपजैं हैं ऐसैं उपजना मरनाका स-मकालपनाकौं भी साधारण जीवनिका लक्षण कहिए है। बहुरि द्वितीयादि समयनिविषैं उपजे अनंतानंत जीव-निका भी अपना आयुका नाश होतै साथि ही मरना जानना। ऐसैं एक निगोद शरीरविषैं समय समय प्रति

अनंतानंत जीव साथिही मरै हैं साथि ही उपजै हैं। निगोद शरीर ज्यौंका त्यौं रहै है सो निगोद शरीरकी उ-त्कृष्ट स्थिति असंख्यात कोडाकोडी सागरमात्र है। सो असंख्यात लोकमात्र समय प्रमाण जानना सो स्थिति यावत् पूर्ण न होइ तावत् ऐसें ही जीवनिका उपजना मरना हुवा करै है। इतना विशेष—जो कोई एक बादर नि-गोद शरीर विषैं वा एक सूक्ष्मनिगोद शरीरविषैं अनंतानंत जीव केवल पर्याप्त ही उपजै हैं तहां अपर्याप्त नाहीं उपजैं हैं। बहुरि कोई एक शरीरविषैं केवल अपर्याप्त ही उपजै हैं तहां पर्याप्त नाहीं उपजै हैं। एक शरीर विषैं पर्याप्त अपर्याप्त दोऊ नाहीं उपजैं है। जातैं तिन जीवनिके समान कर्मके उदयका नियम है। बहुरि एक साधारण जीवकें कर्मका ग्रहण शक्तिरूप लक्षण धरैं जो काय योग ताकरि ग्रह्या हूवा जो पुद्गल पिंड ताका उप-कार कार्य सो तिस शरीर विषैं तिष्ठते अनंतानंत अन्य जीवनिका अर तिस जीवका उपकारी हो है। बहुरि अनंतानंत साधारण जीवनिका जो काय योग रूप शक्ति ताकरि ग्रहे हूये पुद्गलपिंडनिका कार्यरूप उपकार सो कोई एक जीवका वा तिन अनंतानंत साधारण जीवनिका उपकारी समान एक साथिपनै हो है। बहुरि एक बादर निगोद शरीरविषैं वा सूक्ष्म निगोद शरीर विषै क्रमतैं पर्याप्त बादर निगोद जीव वा सूक्ष्म निगोद जीव उ-पजैं है। तहां पहले समय अनंतानंत उपजै हैं। बहुरि दूसरे समय तिनतैं असंख्यात गुणा घाटि उपजै हैं। ऐसैं ही आवलीका असंख्यातवां भाग प्रमाण काल पर्यंत समय समय प्रति निरंतर असंख्यात गुणा घाटि क्रमकरि जीव उपजै हैं तातैं परैं जघन्य एक समय उत्कृष्ट आवलीका असंख्यातवां भाग प्रमाण कालका अंतराल हो है तहां कोऊ जीव न उपजै है। वहां पीछै बहुरि जघन्य एक समय उत्कृष्ट आवलीका असं-ख्यातवां भाग प्रमाण काल पर्यंत निरंतर असंख्यात गुणा घाटि क्रमकरि तिस निगोद शरीरविषै जीव उ-पजै हैं। ऐसैं अंतर सहित वा निरंतर निगोद शरीरविषै जीव उपजै हैं सो यावत् प्रथम समय विषै उपज्या साधारण जीवका जघन्य निर्वृति अपर्याप्त अवस्थाका काल अवशेष रहै तावत् ऐसैं ही उपजना होइ बहुरि

पीछै तिनि प्रथमादि समयनिविषै उपजे सर्व साधारण जीव तिनिकै आहार शरीर इंद्रिय सासोस्वास पर्याप्तिनिकी संपूर्णता अपने अपने योग्य कालविषै होइ है ॥ १९३ ॥

## खंधा असंखलोगा अंडरआवासपुलविदेहावि ।
## हेट्ठिल्लजोणिगाओ असंखलोगेण गुणिदकमा ॥ १९४ ॥

स्कंधा असंख्यलोकाः अंडरावासपुलविदेहा अपि ।
अधस्तनयोनिका असंख्यलोकेन गुणितक्रमाः ॥ १९४ ॥

जी० प्र०—बादरनिगोदजीवशरीरसंख्यानयनार्थं उदाहरणपूर्वकमिदं गाथाद्वयेनोच्यते ( आह ) तद्यथा-स्कंधाः प्रतिष्ठितप्रत्येकजीवशरीराणि, असंख्यातलोकाः स्वयोग्यासंख्यातगुणितलोकप्रदेशमात्रा इत्यर्थः । तत्र एकैकस्मिन् स्कंधे लोकाकाशप्रदेशेषु जगच्छ्रेणिघनप्रमितेषु अनंतानंतपुद्गलानामवगाहपरिणामवत्, एकनिगोदजीवकार्मणशरीरे अनंतानंतनिगोदजीवकार्मणशरीराणामवगाहनवद्वा असंख्यातलोकमात्रा अंडराः प्रत्येकजीवशरीरविशेषाः संति । तथैव एकैकस्मिन्नंडरे असंख्यातलोकमात्रा आवासास्तेऽपि प्रत्येकजीवशरीरभेदाः संति । एकैकस्मिन्नावासे असंख्यातलोकमात्राः पुलवयः तेऽपि प्रत्येकजीवशरीरविशेषाः संति । एकैकस्मिन् पुलवौ असंख्यातलोकमात्राणि बादरनिगोदजीवशरीराणि संति । एवमंडरादीनि उत्तरोत्तराण्यधस्तनस्कंधादियोनिकानि तत्र जातानि भवंति । यद्येकैकस्मिन् स्कंधे असंख्यातलोकमात्रा अंडराः संति तदा असंख्यातलोकमात्रस्कंधानां कति अंडराः स्युः ? इति त्रैराशिकेन-प्र स्कं १, फ अं ≡ a । इ स्कं ≡ a । लब्धांडराः असंख्यातलोकगुणितासंख्यातलोकमात्रा भवति एवमावासादिषु प्रत्येकं त्रैराशिकक्रमेण लब्धानामसंख्यातलोकगुणिताकाराणां विन्यासोऽयं—स्कंधाः ≡ a । अंडराः ≡ a ≡ a । आवासाः ≡ a ≡ a ≡ a । पुलवयः ≡ a ≡ a ≡ a ≡ a । बादरनिगोदशरीराणि ≡ a ≡ a ≡ a ≡ a ≡ a ॥ १९४ ॥

म० प्र०—बादरनिगोदजीवानां शरीरसंख्यानयनार्थमुदाहरणपूर्वकमिदमुच्यते स्कंधाः प्रतिष्ठितप्रत्येकजीवशरीराण्यसंख्यलोकाः स्वयोग्यासंख्यातगुणितलोकप्रदेशमात्राः संति । ननु लोकाकाशप्रदेशाः जगच्छ्रेणिघनमात्राः तेषु ततोऽसंख्येयगुणाः प्रतिष्ठितप्रत्येकजीवशरीरस्वभावस्कंधाः कथमवगाहते ? इति चेत्तन्न अवगाहनसामर्थ्यात्तदुत्पत्तेः, एकस्मिन् प्रत्येकशरीरे असंख्यातलोकमात्रप्रत्येकशरीराणामवगाहपरिणामस्य परमागमे प्रतिपादितत्वात् । अनंतानंतपुद्गलपरमाणूनामसंख्यातेषु लोकाकाशप्रदेशेष्ववगाहपरिणामवत् । एकनिगोदजीवकार्मणशरीरे अनंतानंतनिगोदजीवकार्मणशरीराणामवगाहपरिणामवद्वा । तत्र एकैकस्मिन्

स्कधे असंख्यातलोकमात्रा अंडरा प्रत्येकजीवशरीरविशेषा संति । एकैकस्मिन्नंडरे असंख्यातलोकमात्राः आवासा, तेऽपि प्रत्येकजीवशरीरभेदा संति । एकैकस्मिन्नावासे असंख्यातलोकमात्राः पुलवयः तेऽपि प्रत्येकजीवशरीरविशेषा संति । एकैकस्मिन् पुलवौ असंख्यातलोकमात्राणि वादरनिगोदजीवशरीराणि संति इत्यंडरादीन्युत्तरोत्तराणि अधस्तनाधस्तनस्कंधादियोनिकानि तत्र जातानि संतीति । एकस्मिन् स्कंधे प्र १ यद्यसंख्यातलोकमात्रा अंडरा जायते । फ $\equiv a$ । तदा असंख्यातलोकमात्रस्कंधेषु कियतोऽडरा ? इ $\equiv a$ इति त्रैराशिकेन लब्धा. अंडराः असंख्यातलोकमात्रस्कंधेभ्यः असंख्यातलोकगुणिता भवति । एवमावासादिष्वपि प्रत्येकं त्रैराशिकक्रमेण लब्धः असंख्यातलोकमात्रगुणकारः । तन्न्यासोयं स्कंधाः $\equiv a$ अंडराः $\equiv a \equiv a$ आवासाः $\equiv a \equiv a \equiv a$ पुलवय $\equiv a \equiv a \equiv a \equiv a$ वादरनिगोदशरीराणि $\equiv a \equiv a \equiv a \equiv a \equiv a$ ॥ १९४ ॥

सं० च०—वादरनिगोद जीवनिके शरीरकी संख्या जाननेनिमित्त उदाहरणपूर्वक यहु कथन करिए है- इस लोकाकाशविषैं स्कंध यथायोग्य असंख्यात लोक प्रमाण हैं । जे प्रतिष्ठित प्रत्येक जीवनिके शरीर तिनिकौं स्कधं कहिये हैं । सो यहु यथा योग्य असंख्यातकरि लोकके प्रदेश गुणैं जो प्रमाण होइ तितने प्रतिष्ठित प्रत्येक शरीर इस लोकविषै जानने । बहुरि एक एक स्कंधविषैं असंख्यात लोक प्रमाण अंडर हैं । इहां प्रश्न—जो एक स्कंधविषैं असंख्यात लोक प्रमाण अंडर कैसैं संभवै ? ताका समाधान—यहु अवगाहनाकी समर्थता है जैसैं जगत श्रेणीका घन प्रमाण लोकके प्रदेशनिविषैं अनंतानंत पुद्गल परमाणू पाइए जैसैं जहां एक निगोद जीवका कार्माण स्कंध है तहां ही अनंतानंत जीवनिके कर्माण शरीर पाइये है तैसैं ही एक एक स्कधं विषैं असंख्यात लोक प्रमाण अंडर हैं ते प्रतिष्ठित प्रत्येक शरीरके अवयवरूप विशेष हैं जैसैं मनुष्य शरीरविषैं हस्तादिक हो हैं तैसै स्कंधविषै अंडर जानने । बहुरि एक एक अंडरविषै असंख्यात लोक प्रमाण आवास पाइए है ते आवास भी प्रतिष्ठित प्रत्येकके शरीरके अवयव रूप विशेष ही जानने । जैसैं हस्तविषै अंगुरी आदि हो हैं । बहुरि एक एक आवासविषै असंख्यात लोक प्रमाण पुलवी हैं ते पणि प्रतिष्ठित प्रत्येक शरीरके अवयव रूप विशेष ही जानने । जैसैं एक अंगुलीविषैं रेखा आदि हो हैं । बहुरि एक एक पुलवीविषै असंख्यातलोक प्रमाण वादरनिगोदके शरीर जानने । ऐसैं ए अंडरादिक अधस्तन योनि कहे । इनिविषै अधस्तन जो पीछै कह्या भेद ताकी संख्याकी उत्पत्तिकौं कारण ऊपरिका भेद जानना । ऐसैं तहां एक स्कंधविषै असंख्यातलोक प्रमाण

अंडर हैं तौ असंख्यातलोक प्रमाण स्कंधनविषैं केते अंडर हैं ? ऐसैं त्रैराशिक करि लब्धराशी असंख्यात लोक गुणे असंख्यात लोक प्रमाण अंडर जानने। बहुरि ऐसैं ही आवासादिविषैं त्रैराशिक कीएं तिनतैं असंख्यातलोक गुणे आवास जानने। बहुरि तिनतैं असंख्यात लोक गुणे पुलवी जानने। बहुरि तिनतैं असंख्यात लोक गुणे वादरनिगोद शरीर जानने। ते सर्वनिगोदशरीर पांच जायगा असंख्यात लोक माडि परस्पर गुणैं जेता प्रमाण होइ तितने जानने॥ १९४॥

## जंबूदीवं भरहो कोसलसागेदतग्घराइं वा।
## खंधंडरआवासापुलविसरीराणि दिट्ठंता॥ १९५॥

जंबूद्वीपो भरतः कोशलसाकेततद्गृहाणि वा।
स्कंधांडरावासाः पुलविशरीराणि दृष्टांताः॥ १९५॥

जी० प्र०——स्कंधानां दृष्टांता. जंबूद्वीपादयः। अंडराणां भरतादिक्षेत्राणि। आवासानां कोशलादिदेशाः। पुलवीनां साकेतादिनगराणि। बादरनिगोदजीवशरीराणां साकेतादिनगरगृहाणि। वा शब्द. इवार्थः। उक्तदृष्टांतादन्येऽपि दृष्टांता नेतव्याः॥ १९५॥

म० प्र०——स्कंधाना जंबूद्वीपादयो दृष्टाताः, अडराणा भरतादिक्षेत्राणि, आवासाना कोशलादिदेशाः, पुलवीना साकेतादिनगराणि। वादरनिगोदशरीराणा तद्गृहाः तस्य नगरस्य गृहाः तद्गृहा दृष्टाताः। वा शब्द इवार्थे। उक्तदृष्टातवत् अन्येऽपि दृष्टाना नेतव्या॥ १९५॥

सं० च०——स्कंधनिका दृष्टांत जंबूद्वीपादिक जानने। जैसैं मध्यलोकविषैं जंबूद्वीपादिक द्वीप हैं तैसैं लोकविषैं स्कंध हैं। बहुरि अंडरनिका दृष्टांत भरतादि क्षेत्र जानने। जैसैं एक जंबूद्वीपविषैं भरतक्षेत्र आदि क्षेत्र पाइए तैसैं स्कंधविषैं अंडर जानने। बहुरि आवासनिका दृष्टांत कोशल आदि देश जानने जैसैं भरतक्षेत्रविषैं कोशल देश आदि अनेक देश पाइए तैसैं अंडरविषै आवास जानने। बहुरि पुलवीनिका दृष्टांत अयोध्यादि नगर जानने। जैसैं एक कोशलदेशविषैं अयोध्या नगर आदि अनेक नगर पाइए तैसैं आवासविषैं पुलवी

जानने। बहुरि शरीरनिका दृष्टांत अयोध्याके गृहादिक जानने जैसैं अयोध्याविषैं मंदरादिक पाइए तैसे पुलवी विषै बादर निगोद शरीर जानने। बहुरि वा शब्दकरि यहु दृष्टांत दीया। ऐसैं ही और कोऊ उचित दृष्टांत जानने॥ १९५॥

## एगणिगोदसरीरे जीवा दव्वप्पमाणदो दिट्ठा।
## सिद्धेहिं अणंतगुणा सव्वेण वितीदकालेण॥ १९६॥

एकनिगोदशरीरे जीवा द्रव्यप्रमाणतो दृष्टाः।
सिद्धैरनंतगुणाः सर्वेण व्यतीतकालेन॥ १९६॥

जी० प्र०—एकस्मिन् निगोदशरीरे वर्तमाना जीवा द्रव्यप्रमाणतः द्रव्याश्रयप्रमाणसंख्यया अनंतानंताः सर्वजीवराश्यनंतबहुभागमात्र-संसारिजीवराश्यसंख्येयभागप्रमिताः सर्वदा विद्यमानाः ते अक्षयानंता इति परमागमे भण्यते। ते च सर्वजीवराश्यनंतैकभागमात्रेभ्योऽनादि-कालसिद्धजीवेभ्योऽनंतगुणाः। तथैव सर्वातीतकालतोऽप्यनंतगुणाः। अनेन कालमाश्रित्यैकशरीरनिगोदजीवसंख्या कथिता। क्षेत्रभावावाश्रि-त्य तत्संख्या आगमानुसारेण योज्यते। सर्वाकाशप्रदेशेभ्यः केवलज्ञानाविभागप्रतिच्छेदेभ्यश्चानंतगुणहीनाः, तथा लोकाकाशप्रदेशेभ्यः सर्वा-वधिज्ञानविषयभावेभ्यश्चानंतगुणिताः संति। तत्संख्यायाः परमागमे जिनदृष्टत्वप्रसिद्धेर्विरोधो नास्ति। ननु अष्टसमयाधिकषण्मासाभ्यंतरे अष्टो-त्तरषट्शतजीवेषु कर्मक्षयं कृत्वा सिद्धेषु सत्सु सिद्धराशेर्वृद्धिदर्शनात् संसारिजीवराशेश्च हानिदर्शनात् कथं सर्वदा सिद्धेभ्योऽनंतगुणत्वं एकशरीर-निगोदजीवानां सर्वजीवराश्यनंतगुणकालसमयसमूहस्य तद्योग्यानंतभागे गते सति संसारिजीवराशिक्षयस्य सिद्धराशिबहुत्वस्य च सुघटत्वात्? इति चेत्तन्न, केवलज्ञानदृष्ट्या केवलिभिः, श्रुतज्ञानदृष्ट्या श्रुतकेवलिभिश्च सदा दृष्टस्य भव्यसंसारिजीवराश्यक्षयस्यातिसूक्ष्मत्वात् तर्कविषयत्वाभा-वात्। प्रत्यक्षागमबाधितस्य च तर्कस्याप्रमाणत्वात्। अनुष्णोऽग्निर्द्रव्यत्वात् यद्यद्द्रव्यं तत्तदनुष्णं यथा जलं। प्रेत्यासुखप्रदो धर्मः पुरुषाश्रि-तत्वात् यो यः पुरुषाश्रितः स सोऽसुखप्रदो यथाऽधर्मः इत्यादितर्कवत्। तर्हि तर्कबाधितस्य आगमस्य कथं प्रामाण्यं? इति चेत्तन्न प्रत्यक्ष-प्रमाणतर्कांतरसंभावितस्यागमस्याविसंवादित्वेन प्रामाण्यसुनिश्चयात्। तद्द्वयविरोधिनस्तव तर्कस्याप्रमाणत्वाच्च। तर्हि किमिदं तर्कांतरमिति चे-दुच्यते सर्वो भव्यसंसारिराशिरनंतेनापि कालेन न क्षीयते अक्षयानंतत्वात् यो योऽक्षयानंतः स सोऽनंतेनापि कालेन न क्षीयते यथा इयत्तया परिच्छिन्नः कालसमयौघः, सर्वद्रव्याणां पर्यायोऽविभागप्रतिच्छेदसमूहो वा इत्यनुमानांगस्य तर्कस्य प्रामाण्यसुनिश्चयात्। तर्हि हेतोः साध्य-

समत्वमिति चेन्न भव्यराश्यक्षयानंतत्वस्याप्तागमसिद्धस्य साध्यसमत्वाभावात् । किं बहुना सर्वतत्त्वानां प्रवक्तरि पुरुषे आप्ते सिद्धे सति तद्वाक्यस्यागमस्य सूक्ष्मांतरितदूरार्थेषु प्रामाण्यसुप्रसिद्धेः । तदागमपदार्थेषु निश्शक मम चित्तं किन्तु वावदूकतया । आप्तसिद्धिस्तु विश्वतश्चक्षुरुत विश्वतो मुखः इत्यादिवेदवाक्येन । प्रणम्य शंभुमित्यादिनैयायिकवाक्येन । बुद्धो भवेयमित्यादिबौद्धवाक्येन मोक्षमार्गस्य नेतारमित्यार्हतवाक्येन अपरैस्तत्तद्दर्शनदेवतास्तवनरूपवाक्यैश्च सामान्यतोंगीकृता । विशेषेण सर्वज्ञवीतरागस्याद्वाद्याप्तस्यैव युक्त्यापि साधनात् । विस्तरतः स्याद्वादतर्कशास्त्रेषु तत्सिद्धिर्ज्ञातव्या इत्येक सुनिश्चितासंभवद्बाधकप्रमाणत्वात् आप्तस्य तदागमस्य च सिद्धत्वात् तत्प्रणीतं मोक्षतत्त्वं बंधतत्त्वं वावश्यमभ्युपगमनीयमिति सिद्ध सिद्धेभ्योऽनंतगुणत्वमेकशरीरनिगोदजीवानां ॥ १९६ ॥

म० प्र०—एकस्मिन्निगोदशरीरे साधारणशरीरे वर्तमाना जीवा. द्रव्यप्रमाणतः द्रव्याश्रयसंख्ययानंतानंताः सर्वजीवराश्यनंतबहुभागमात्रसंसारजीवराश्यसंख्येयभागप्रमिता. सर्वदा संति ते चाक्षयानंता इत्युच्यते । सर्वजीवराश्यनंतैकभागमात्रेभ्यः अनादिकालसिद्धजीवेभ्योऽनंतगुणा । तथा सर्वस्मादतीतकालादपि अनंतगुणा । अनेन कालमाश्रित्य एकशरीरनिगोदजीवसंख्या कथिता क्षेत्रभावावाश्रित्य तत्संख्या आगमानुसारेण योजनीया । सर्वाकाशप्रदेशेभ्यः केवलज्ञानाविभागप्रतिच्छेदेभ्यश्चानंतगुणहीनतया लोकाकाशप्रदेशेभ्यः सर्वावधिज्ञानविषयभावेभ्यश्चानंतगुणतया जिनदृष्टभावायाम्तत्संख्यया परमागमे प्रसिद्धत्वात् । ननु अष्टसमयाधिकषण्मासाभ्यंतरे अष्टोत्तरषट्शतजीवेषु कर्मक्षयं कृत्वा सिद्धेषु सत्सु सिद्धिराशेर्वृद्धिदर्शनात् संसारिजीवराशेश्च हानिदर्शनात् कथं सर्वदा सिद्धेभ्योऽनंतगुणत्वमेकशरीरनिगोदजीवानां सर्वजीवराश्यनंतगुणकालसमयसमूहस्य तद्योग्यानंतभागे गते सति संसारिजीवराशिक्षयस्य सिद्धराशिबहुत्वस्य च सुघटत्वादिति चेत्तन्न, केवलज्ञानचक्षुषा केवलिभि, श्रुतज्ञानचक्षुषा श्रुतकेवलिभिश्च सदा दृष्टस्य भव्यसंसारिजीवाक्षयस्य अति सूक्ष्मतया तर्कागोचरत्वात् । प्रत्यक्षागमबाधितस्य तर्कस्याप्रमाणत्वात् । अनुष्णोऽग्निर्द्रव्यत्वात् । यद्यद्द्रव्यं तत्तदनुष्णं यथा जलं । प्रेत्यासुखप्रदो धर्मः पुरुषाश्रितत्वात् योयः पुरुषाश्रितः स सः, असुखप्रदः यथा अधर्म इत्यादितर्कवत् । तर्कबाधितस्य आगमस्य कथं प्रामाण्यं ? इति चेत्तन्न प्रत्यक्षप्रमाणतर्कांतरसंभावितस्यागमस्य अविसंवादित्वेन प्रामाण्यसुनिश्चयात् तद्द्वयविरोधिनस्तव तर्कस्याप्रमाणत्वाच्च । तर्हि किमिदं तर्कांतरं ? इति चेदुच्यते सर्वो भव्यसंसारराशिरनंतेनापि कालेन न क्षीयते अक्षयानंतत्वात् । योयः अक्षयानंतः स सः, अनंतेनापि कालेन न क्षीयते यथा इयत्तया परिच्छिन्नः कालसमयौघः सर्वद्रव्याणां पर्यायाविभागप्रतिच्छेदसमूहो वा इति तर्कस्यानुमानप्रमाणागस्य प्रामाण्यसुनिश्चयात् । हेतोः साध्यसमत्वं ? इति चेन्न भव्यराशेरक्षयानंतत्वस्य आप्तागमसिद्धस्य साध्यसमत्वाभावात् । किं बहुना ? सर्वतत्त्वानां प्रवक्तरि पुरुषे आप्ते सिद्धे सति तद्वाक्यस्यागमस्य सूक्ष्मांतरितदूरार्थेषु प्रामाण्यसुप्रसिद्धेः । तदागमपदार्थेषु निश्शंकमस्माकं चित्तमित्यलं वावदूकतया । आप्तसिद्धिश्च विश्वतश्चक्षुरिति विश्वतोमुखं, इत्यादि वेदवाक्येन, प्रणम्य शंभुमित्यादिनैयायिकवाक्येन, बुद्धो भवेयमित्यादि बौद्धवाक्येन, मोक्षमार्गस्य नेतारमित्याद्यार्हतवाक्येन परैश्च तत्तद्दर्शनदेवतास्तवनवाक्यैः सामान्यतोऽभ्युपगता । विशेषतस्तु सर्वज्ञवीतरागस्याप्तस्य स्याद्वादिन

१ प्रथमे समये ३२ । द्वितीये समये ४८ । तृतीये समये ६० । चतुर्थे समये ७२ । पञ्चमे समये ८४ । षष्ठे समये ९६ । सप्तमे समये १०८ । अष्टमे समये १०८ । एवं सकलितजीवाः ६०८ ।

एव युक्तितः साधनात् । विस्तरतः स्याद्वादतर्कशास्त्रेषु तत्सिद्धिर्ज्ञातव्या । तदेवं सुनिश्चितासंभवद्बाधकप्रमाणत्वेन आप्तस्य तदागमस्य च सिद्धत्वात्तत्प्रणीतं मोक्षत्वं बवंतत्त्व चावश्यभ्युपगमनीय इति ।सिद्ध सिद्धेभ्योऽनंतगुणत्वमेकशरीरनिगोदजीवाना ॥ १९६ ॥

सं० च०---एक निगोद शरीरविषै वर्तमान निगोद जीव ते द्रव्यप्रमाण जो द्रव्य अपेक्षा संख्या तातैं अनंतानंत है सर्व जीव राशिकौं अनंतका भाग दीजिए तामैं एक भाग प्रमाण सिद्ध हें सो अनादिकालतै जेते सिद्ध भए तिनितैं अनंतानंत गुणे हैं। बहुरि अवशेष बहुभाग प्रमाण संसारी हैं तिनके असंख्यातवें भाग प्रमाण एक निगोद शरीरविषै जीव विद्यमान हैं ते अक्षयानंत प्रमाण हैं। ऐसैं परमागम विषै काहिए है । बहुरि तैसै ही अतीतकालके समयानितैं अनंत गुणै हैं। इस करि काल अपेक्षा एक शरीर विषै निगोदजीवनिकी संख्या कही। वहुरि ऐसैं ही क्षेत्र भाव अपेक्षा तिनकी संख्या आगम अनुसारि जोडिए। तहां क्षेत्र प्रमाणतै सर्व अकाशके प्रदेशनिके अनंतवै भाग वा लोकाकाशके प्रदेशनितै अनंत गुणैं जानने। भाव प्रमाणतै केवल ज्ञानके अविभाग प्रतिच्छेदनिके अनंतवै भाग अर सर्वावधि ज्ञान गोचर जे भाव तिनितैं अनंत गुणे जानने । ऐसैं एक निगोद शरीर विषै जीवनिका प्रमाण कह्या। इहां प्रश्न—जो छह महीना अर आठ समयके मांही छसै आठ जीव कर्म नाशकरि सिद्ध होंइ सो ऐसैं सिद्ध वधते जांहि संसारी घटते जांहि तातैं तुम सदा काल सिद्धनितैं अनंत गुणे एक निगोद शरीरविषै जीव कैसे कहो हो ? सर्व जीव राशितैं अनंत गुणां अनागत कालका समय समूह है । सो यथायोग्य अनंतवां भाग प्रमाण काल गए संसारी राशिका नाश अर सिद्ध राशिका बहुत्त्व होइ तातैं सर्वदा काल सिद्धनितैं निगोद शरीरविषै निगोद जीवानिका प्रमाण अनंत गुणा संभवै नांही ? ताका समाधान कहै हैं—रे तार्किक भव्य। संसारी जीवानिका परिमाण अक्षयानंत है सो केवली केवल ज्ञान दृष्टिकरि अर श्रुतकेवली श्रुतज्ञान दृष्टिकरि ऐसै ही देखा है। सो यह सूक्ष्मता तर्कगोचर नांही जातै प्रत्यक्ष प्रमाण अर आगम प्रमाण करि विरुद्ध होइ सो तर्क अप्रमाण है। जैसे किसीने कह्या अग्नि उष्ण नाहीं जातै अग्नि है सो पदार्थ है जो जो पदार्थ है सो सो उष्ण नाहीं जैसै जल उष्ण नाहीं है ऐसी तर्क करी परि यहु तर्क

प्रत्यक्ष प्रमाणकरि विरुद्ध है अग्नि प्रत्यक्ष उष्ण है तातैं यहु तर्क प्रमाण नाहीं । बहुरि किसीने कह्या धर्म है परलोकविषैं दुःखदायक है जातैं धर्म है सो पुरुषाश्रित है जो जो पुरुषाश्रित हैं सो सो परलोकविषैं दुःख दायक है जैसे अधर्म है ऐसी तर्क करी परि यहु तर्क आगम प्रमाण करि खंडित है। आगमविषैं धर्म परलोक विषैं सुख दायक कह्या है तातैं प्रमाण नाहीं । ऐसैं ही जे केवली प्रत्यक्ष अर आगमोक्त कथन तातैं विरुद्ध तेरी तर्क प्रमाण नाहीं। इहां बहुरि तर्क करी–जो तर्क करि विरोधी आगम कैसैं प्रमाण होइ? ताका समाधान–जो प्रत्यक्ष प्रमाण अर अन्य तर्क करि संभवता जो आगम ताकैं अविरुद्धपणांकरि प्रमाणपना हो है । तौ सो अन्य तर्क कहा ? सो कहिए है–सर्व भव्य संसारी राशि अनंतकालकरि भी क्षयकौं प्राप्त न होइ जातैं यहु राशि अक्षयानंत है जो जो अक्षयानंत है सो सो अनंतकालकरि भी क्षयकौं प्राप्त न होइ जैसैं तीन कालके समयनिका परिमाण कह्या कि इतनां है परि कबहूं अंत नाहीं वा सर्वद्रव्यनिका अगुरुलघु अविभाग प्रतिच्छेदके समूहका परिमाण कह्या परि अंत नाहीं तैसैं संसारी जीवनिका भी अक्षयानंत प्रमाण जानना । ऐसा यहु अनुमानतैं आया जो तर्क सो प्रमाण है । बहुरि प्रश्न-जो अनंतकालकरि भी क्षय न होना साध्य सो अक्षयानंतके हेतुतैं दृढ कीया तातैं इहां हेतुकै साध्यसमत्व भया ? ताका समाधान–भव्यराशिका अक्षयानंतपना आप्तके आगमकरि सिद्ध है तातै साध्यसमत्वका अभाव है। बहुत कहने करि कहा ? सर्व तत्त्वनिका वक्ता पुरुष जो है आप्त ताकी सिद्धि होतै तिस आप्तके वचनरूप जो आगम ताकी सूक्ष्म अंतरित दूरि पदार्थनिविषै प्रमाणताकी सिद्धि हो है तातैं तिस आगमोक्त पदार्थनिविषै मेरा चित्त निस्संदेह रूप है। बहुत वादी होनेकरि कहा साध्य है? बहुरि आप्तकी सिद्धि कैसै सो कहिए है 'विश्वतश्चक्षुरुत विश्वतो मुखः' ऐसा वेदका वचन करि, बहुरि 'प्रणम्य शंभुं' इत्यादि नैयायिक वचनकरि, बहुरि 'बुद्धो भवेयं' इत्यादि बौद्ध वचनकरि, बहुरि, मोक्षमार्गस्य नेतारं, इत्यादि जैन वचन करि बहुरि अन्य अपना अपना मतका देवताका स्तवन रूप वचननिकरि सामान्यपनैं सर्व मतनिविषै आप्त मानै है। बहुरि विशेषपनै सर्वज्ञ वीतराग देव स्याद्वादी ही आप्त है ताका युक्तिकरि साधन कीया है सो बिस्तारतैं स्या-

द्वाद रूप जैन न्यायशास्त्रविषै आप्तकी सिद्धि जाननी। ऐसें ही निश्चयरूप जहां खंडनेवाला प्रमाण न संभवै है तातैं आप्त अर आप्तकरि प्ररूपित आगमकी सिद्धि हो है। तातैं आप्त आगमकरि प्ररूपित ज्यो मोक्षतत्त्व अर बंधतत्त्व सो अवश्य प्रमाण करना ऐसें आगमप्रमाणतैं एक शरीरविषै निगोदजीवनिकैं सिद्धराशितैं अनंत गुणापनो संभवे है। बहुरि अक्षयानंतपना भी सर्व मतवाले मानै है। कोऊ ईश्वरविषै मानै है। कोऊ स्वभावविषै मानैं है। तातैं कह्या हूवा कथन प्रमाण है ॥ १९६ ॥

**अत्थि अणंता जीवा जेहिं ण पत्तो तसाण परिणामो ।**
**भावकलंकसुपउरा णिगोदवासं ण मुंचंति ॥ १९७ ॥**

संति अनंता जीवा यैर्न प्राप्तस्त्रसानां परिणामः ।
भावकलंकसुप्रचुरा निगोदवासं न मुंचंति ॥ १९७ ॥

जी० प्र०—नित्यनिगोदलक्षणमनेन ज्ञातव्यं। तत्कथं? यैर्निगोदजीवैः त्रसानां द्वींद्रियादीनां परिणामः-पर्यायः, कदाचिदपि-प्रायेण न प्राप्तः ते जीवा अनंतानंता अनादिसंसारनिगोदभवमेवानुभवंतो नित्यनिगोदसंज्ञाः सर्वदा संति। किं विशिष्टाः? भावकलंकसुप्रचुराः-भावस्य निगोदपर्यायस्य कलंकेन तद्योग्यकषायोदयाविर्भावितदुर्लेश्यालक्षणसंक्लेशेन प्रचुराः अत्यंतं संघटिताः। एवंविधनित्यनिगोदजीवाः निगोदवासं निगोदभवस्थितिं कदाचिदपि न मुंचंति तेन कारणेन निगोदभवस्य आद्यंतरहितत्वादनंतानंतजीवानां नित्यनिगोदत्वं समर्थितं जातं। नित्यविशेषणेन पुनरनित्यनिगोदाः चतुर्गतिनिगोदरूपसादिसांतनिगोदभवयुता केचन जीवाः संतीति सूचितं ज्ञातव्यं। णिच्चचदुग्गदिणिगोदेत्यादौ परमागमे निगोदजीवानां द्वैविध्यस्य सुप्रसिद्धत्वात्। एकदेशाभावविशिष्टसकलार्थवाचिना प्रचुरशब्देन कदाचिदष्टसमयाधिकषण्मासाभ्यंतरे चतुर्गतिजीवराशितो निर्गतेषु अष्टोत्तरषट्शतजीवेषु मुक्तिंगतेषु तावंतो जीवा नित्यनिगोदभवं त्यक्त्वा चतुर्गतिभवं प्राप्नुवंतीत्ययमर्थः प्रतिपादितो बोद्धव्यः ॥ अथ त्रसकायं गाथाद्वयेनाह—

मं० प्र०—नित्यनिगोदलक्षणमनेनोच्यते तद्यथा यैर्निगोदजीवैस्त्रसानां द्वींद्रियादीनां परिणामः पर्यायः, कदाचिदपि न प्राप्त ते जीवा अनंतानंताः। अनादौ संसारे निगोदभवमेवानुभवंतो नित्यनिगोदसंज्ञाः सर्वदा संति। किंविशिष्टाः? भावकलकसुप्रचुराः—भावस्य निगोदपर्यायस्य कलंकः—तद्योग्यकषायो

दयाविर्भावितदुर्लेश्यालक्षणः संक्लेशः, तेन सुप्रचुराः-अत्यंतसंघटिताः एवंविधा नित्यनिगोदजीवाः, निगोदवासं--निगादभवस्थितिं कदाचिदपि न मुंचंति अत एव निगोदभवस्य आद्यंतरहितत्वेनानंतानंतजीवानां नित्यनिगोदत्वं समर्थितं भवति । नित्यविशेषणेन पुनरनित्यनिगोदाश्चतुर्गतिनिगोदाः सादिसांतरनिगोदभवाः केचिज्जीवाः संतीति सूचितं ज्ञातव्यं । णिच्चचदुग्गदिणिगोदथूलिदरा इत्यादौ परमागमे निगोदजीवानां द्वैविध्यस्य सुप्रसिद्धत्वात् । एकदेशाभावविशिष्टसकलार्थवाचिना प्रचुरशब्देन कदाचिदष्टसमयाधिकषण्मासाभ्यंतरे चतुर्गतिजीवराशेर्निर्गत्य अष्टोत्तरषट्शतजीवेषु मुक्तिंगतेषु तावंतो जीवा नित्यनिगोदभवं विमुच्य चतुर्गतिभवं गच्छंतीत्ययमर्थः प्रतिपादितो ज्ञातव्यः ॥ १९७ ॥ अथ त्रसकायप्ररूपणार्थं गाथाद्वयमाह–

सं० च–इस गाथाविषैं नित्यनिगोदका लक्षण कह्या है अनादि संसारविषैं निगोद पर्यायहीकौं भोगवते अनंते जीव नित्य निगोद नाम धारक सदाकाल हैं। ते कैसे है? जिनिकरि त्रस जे वेइंद्रियादिक तिनिका परिणाम जो पर्याय सो कबहूं न पाया। बहुरि भाव जो निगोद पर्याय तिहिनै कारणभूत जो कलंक कहिये कषायनिका उदय करि प्रगट भया अशुभ लेश्या रूप तीहिंकरि प्रचुरा कहिये अत्यंत संबंधरूप हैं। ऐसैं ए नित्य निगोद जीव कदाचित् निगोद वासकौं न छोडै हैं याहीतैं निगोद पर्यायकैं आदि अंत रहितपनां जानि अनंतानंत जीवनिकैं नित्य निगोदपना कह्या। नित्य विशेषणकरि अनित्य निगोदिया चतुर्गति निगोदरूप आदि अंत निगोद पर्याय संयुक्त केई जीव हैं ऐसा सूचै है जातैं णिच्चचदुग्गदिणिगोद इत्यादिक परमागमविषैं निगोद जीव दोय प्रकार कहे हैं। भावार्थ– जे अनादितैं निगोद पर्यायहीकौं धरै हैं ते नित्यनिगोद जीव हैं। बहुरि वीचि अन्य पर्याय पाय बहुरि निगोद पर्याय धरैं ते इतर निगोद जीव जानना। सो वे आदि अंत लीये हैं। बहुरि जिनिके प्रचुर भाव कलंक है ते निगोदवासकौं न छाडैं सो इहां प्रचुर शब्द है सो एकोदेशका अभावरूप है सकल अर्थका वाचक है तातैं याकरि यहु जान्या जिनकै भाव कलंक थोरा हो है ते जीव कदाचित् नित्य निगोदतैं निकसि चतुर्गतिमें आवै हैं। सो छह महीना अर आठ समयमैं छसै आठ जीव नित्यनिगोदमैंसौं निकसै हैं सोही छह महीना आठ समयमें छसै आठ जीव संसारसौं निकसिकरि मुक्ति पहुंचै हैं ॥ १९७ ॥ आगे त्रस कायकी प्ररूपणा दोय गाथाकरि कहै हैं–

**बिहि तिहि चदुहिं पंचहि सहिया जे इंदिएहिं लोयह्मि ।**
**ते तसकाया जीवा णेया वीरोवदेसेण ॥ १९८ ॥**

द्वाभ्यां त्रिभिश्चतुर्भिः पंचभिः सहिता ये इंद्रियैर्लोके ।
ते त्रसकाया जीवा ज्ञेया वीरोपदेशेन ॥ १९८ ॥

जी० प्र०—स्पर्शनरसनाभ्यां, द्वाभ्यां ताभ्यां घ्राणेन त्रिभिः च, तैश्चक्षुषेति च चतुर्भिः, तैः श्रोत्रेणेति पंचभिश्चेंद्रियैः सहिता ये जीवा लोके संति ते जीवास्त्रसकाया इति वीरवर्धमानतीर्थंकरपरमदेवस्य उपदेशेन अविच्छिन्नगुरुपर्वक्रमागतसंप्रदायेन अस्माभिः श्रुतगृहीतधारितार्थैः प्रतिपादिता ज्ञेयाः ॥ १९८ ॥

मं० प्र०—द्वाभ्या स्पर्शनरसनाभ्या, त्रिभिः स्पर्शनरसनघ्राणैः, चतुर्भिस्तैश्चक्षुरंतैः, पंचाभिश्च तैः श्रोत्रांतैरिंद्रियैः सहिताः ये जीवा लोके सति ते त्रसकाया इति वीरस्य श्रीवर्धमानतीर्थकरस्य उपदेशेन अविच्छिन्नगुरुपर्वक्रमागतसंप्रदायेन अस्माभिः श्रुतगृहीतधारितार्थैः प्रतिपादिताः ज्ञेयाः ॥१९८॥

सं० चं०—दोय इंद्री स्पर्शन रसन तिनिकरि संयुक्त द्वींद्रिय बहुरि तीन इंद्रिय स्पर्शन रसन घ्राण तिनिकरि संयुक्त त्रींद्रिय, बहुरि च्यारि इंद्रिय स्पर्शन रसन घ्राण चक्षु इनिकरि संयुक्त चतुरिंद्रिय बहुरि पांच इंद्रिय स्पर्शन रसन घ्राण चक्षु श्रोत्र इनिकरि संयुक्त पंचेंद्रिय ए कहे जे जीव ते त्रसकाय जानने। ऐसैं श्रीवर्धमान तीर्थंकर परमदेवके उपदेशतैं परंपराय क्रमकरि चल्या आया संप्रदायकरि शास्त्रका अर्थधरि हमहूं करि कहे हैं ते जानने ॥ १९८ ॥

**उववादमारणंतियपरिणदतसमुज्झिऊण सेसतसा ।**
**तसणालिवाहिरह्मि य णत्थित्ति जिणेहिं णिद्दिट्ठं ॥१९९॥**

उपपादमारणांतिकपरिणतत्रसमुज्झित्वा शेषत्रसाः ।
त्रसनालीबाह्ये च न संतीति जिनैर्निर्दिष्टं ॥ १९९ ॥

जी० प्र०—विवक्षितभवप्रथमसमयपर्यायप्राप्तिः उपपादः । मरणं-प्राणत्यागः अंतः अवसानं यस्य स मरणांतः कालः वर्तमानभवस्थितिचरमांतर्मुहूर्तः । मरणांते भवः मारणांतिकः समुद्घातः उत्तरभवोत्पत्तिस्थानपर्यंतजीवप्रदेशप्रसर्पणलक्षणः । उपपादेन परिणतं मारणांतिकसमुद्घातपरिणत चशब्दात् केवलिसमुद्घातेन परिणतं च त्रसं उज्झित्वा--वर्जयित्वा शेषाः स्वस्थानादिपदपरिणताः सर्वे त्रसजीवाः त्रसनाडिबाह्ये लोकक्षेत्रे न संतीति जिनैः अर्हदादिभिर्निर्दिष्टं-कथितं । ततः कारणात् त्रसानां नालिरिव नालिस्त्रसनालिः सा च एकरज्जुविष्कमायामा चतुर्दशरज्जूत्सेधा लोकमध्यस्थिता अन्वर्थसंज्ञया कथिता । कश्चिज्जीवः त्रसनालिबाह्ये वातवलये स्थितः त्रसे बद्धायुष्कः प्राक्तन वायुकायिकभवं त्यक्त्वा उत्तरं त्रसकायं प्राप्य अग्रतनविग्रहगतिप्रथमसमये त्रसनामकर्मोदयेन त्रसो जातः इत्युपपादपरिणतत्रसस्य त्रसनालिबाह्येऽस्तित्व । कश्चित् त्रसजीवः त्रसनालिमध्ये स्थितः तनुवातवलयस्य वायुकायिके बद्धायुष्कः स्वायुरवसानांतर्मुहूर्तकाले तनुवातवलयपर्यंतं त्रसनालिबाह्ये क्षेत्रे आत्मप्रदेशप्रसर्पणलक्षणमारणांतिकसमुद्घातं करोतीति तस्य त्रसस्य त्रसनालिबाह्यक्षेत्रेऽप्यस्तित्वं । केवली कवाटाद्याकारेण त्रसनालिबाह्ये आत्मप्रदेशप्रसर्पणलक्षणसमुद्घातं करोतीति तस्य केवलिनोऽपि त्रसनालिबाह्येऽप्यस्तित्वं सिद्धमिति शास्त्रकारस्य तात्पर्यं ॥ १९९ ॥ अथ वनस्पतिवदन्येषामपि जीवानां प्रतिष्ठिताप्रतिष्ठितविभागं कथयति--

म० प्र०—विवक्षितभवप्रथमसमयपर्यायप्राप्तिः, उपपादः, मरणं प्राणत्यागः, अंतः-अवसान यस्य स मरणांतः कालः वर्तमानभवस्थितिचरमांतर्मुहूर्तः मरणांते भवः मारणांतिक समुद्घातः उत्तरभवोत्पत्तिस्थानपर्यंतजीवप्रदेशप्रसर्पणलक्षणः, उपपादेन परिणत मारणांतिकसमुद्घातेन परिणत च त्रसजीवमुज्झित्वा वर्जयित्वा, चशब्देन सूचितं केवलसमुद्घातपरिणत च वर्जयित्वा शेषाः स्वस्थानादिपदपरिणता सर्वे त्रसजीवा त्रसनाली बाह्ये लोकक्षेत्रे न सति इति जिनैः--अर्हदादिभिः, निर्दिष्ट कथित, अत एव त्रसाना नालीव नाली एकरज्जुविष्कभायामा चतुर्दशरज्जुतुंगा लोकमध्यगता त्रसनालीत्यन्वर्थसज्ञया परमागमे प्रसिद्धा । कश्चिज्जीवः त्रसनालीबाह्ये वातवलये स्थितः त्रसे बद्धायुष्क प्राक्तन वातकायिकभव त्यक्त्वा उत्तर त्रसकायभव प्राप्य विग्रहगतौ प्रथमसमये त्रसनामकर्मोदयात् त्रसो भूत्वा वर्तत इत्युपपादपरिणतत्रसस्य त्रसनालीबाह्येऽस्तित्व । कश्चित त्रसजीव त्रसनालिमध्यस्थ, तनुवातवलये वातकायिके बद्धायुष्कः स्वायुरवसानांतर्मुहूर्ते तनुवातवलयपर्यंत त्रसनालिबाह्ये आत्मप्रदेशप्रसर्पणलक्षण मारणांतिकसमुद्घात करोतीति तस्य त्रसस्य त्रसनालिबाह्ये अस्तित्व । केवली च कवाटाद्याकारेण त्रसनालिबाह्येप्यात्मप्रदेशप्रसर्पणलक्षणं समुद्घात करोतीति तस्यापि त्रसनालिबाह्ये अस्तित्वं सिद्धमिति तात्पर्यं शास्त्रकारस्य ॥ १९९ ॥ अथ वनस्पतिवदन्येषामपि जीवाना प्रतिष्ठिताप्रतिष्ठितविभागं कथयति—

सं० च०---विवक्षित पर्यायका पहला समयविषै पर्यायकी प्राप्ति सो उपपाद कहिए बहुरि मरण जो प्राण त्याग अर अंत जो पर्यायका अंत जाकै होइ सो मरणांतकाल वर्तमान पर्यायके आयुका अंत अंतर्मुहूर्त मात्र जानना। तींहि मरणांतकालविषै उपज्या सो मारणांतिक समुद्घात कहिए। आगामी पर्यायके उपजनेका स्थान

पर्यंत आत्मप्रदेशनिका फैलना सो मारणांतिकसमुद्घात जानना। ऐसा उपपादरूप परिणम्या अर मारणांतिक समुद्घातरूप परिणम्या अर चकारतैं केवल समुद्घात रूप परिणम्या जो त्रस तींहि विना दश स्थाननिविषै अवशेष स्वस्थानस्वस्थान अर विहारवत्स्वस्थान अर अवशेष पांच समुद्घात रूप परिणमे सर्व ही त्रसजीव त्रसनाली वारै जो लोकक्षेत्र तींहिविषै न पाइए हैं ऐसा जिन जे अर्हंतादिक तिनिकरि कह्या है तातैं जैसे नाली होइ तैसैं त्रस रहनेका स्थान सो त्रसनाली जाननी। त्रस नाली इस लोकके मध्यभाग विषै चौदह राजू ऊंची एक राजू चौडी लंबी सार्थक नाम धारक जाननी। त्रस जीव त्रसनाली विषैं ही है। बहुरि जो जीव त्रसनालीके वाह्य वातलयविषैं तिष्ठता स्थावर था उसनै त्रसका आयु बांधा बहुरि सो पूर्वै वायुकायिक स्थावर पर्यायकौ छाडि आगला विग्रह गतिका प्रथम समयविषै त्रस नामा नामकर्मका उदय अपेक्षाकरि त्रसनालीके वाह्य त्रस हूवा तातै उपपादवाले त्रसका अस्तित्व त्रसनाली वाह्य कह्या। बहुरि कोई जीव त्रसनालीके माहि त्रस है बहुरि त्रसनाली वाहिर तनुवातवलय संबंधी वायुकायिक स्थावरका बंध किया था सो आयुका अंतर्मुहूर्त अवशेष रहै तब आत्मप्रदेशनिका फैलाव जहांका बंध किया था तिस स्थानक त्रसनालीके वाह्य तनुवातवलय पर्यंत गमन करै तातै मारणांतिक समुद्घातवाले त्रसका अस्तित्व त्रसनालीवाह्य कह्या। बहुरि केवली दंड कपाटादि आकारकरि त्रसनाली वाह्य अपने प्रदेशनिका फैलावनरूप समुद्घात करै है तातै केवल समुद्घातवाले त्रसका अस्तित्व त्रसनाली वाह्य कह्या। इनिविना और त्रसका अस्तित्व त्रसनाली वाह्य नाहीं है ऐसा अभिप्राय शास्त्रके कर्ताका जानना ॥ १९९ ॥ आगैं वनस्पतीवत् अन्य जीवनिकैं प्रतिष्ठित अप्रतिष्ठितपनाका भेद दिखावै हैं—

**पुढवीआदिचउण्हं केवलिआहारदेवणिरयंगा।**

**अपदिट्ठिदा णिगोदहिं पदिट्ठिदंगा हवे सेसा ॥२००॥**

**पृथिव्यादिचतुर्णां केवल्याहारदेवनिरयांगानि ।**
**अप्रतिष्ठितानि निगोदैः प्रतिष्ठितांगा भवंति शेषाः ॥ २०० ॥**

जी० प्र०—पृथिव्यप्तेजोवायुकायिकचतुर्विधजीवांगानि केवल्याहारकदेवनारकांगानि च बादरनिगोदजीवशरीरैरप्रतिष्ठितानि अनाश्रितानीत्यर्थः । शेषाणि अप्रतिषिद्धवनस्पतिकायिकशरीराणि द्वित्रिचतुःपंचेंद्रियतिर्यग्जीवशरीराणि अवशिष्टमनुष्यजीवशरीराणि च बादरनिगोदजीवशरीरैः प्रतिष्ठितानि–आश्रितानि भवंति ॥ २०० ॥ अथ स्थावरकायिकानां त्रसकायिकानां च शरीरसंस्थानमाह–

मं० प्र०—पृथिव्यादीनां चतुर्णां पृथिव्यप्तेजोवायुकायिकानां जीवानामंगानि–शरीराणि, केवल्याहारकदेवनिरयाणां च अंगानि शरीराणि, निगोदैः–बादरनिगोदजीवशरीरैः, अप्रतिष्ठितानि–अनाश्रितानि, शेषाणि अप्रतिषिद्धवनस्पतिकायिकशरीराणि, द्वित्रिचतुःपंचेंद्रियतिर्यग्जीवशरीराणि अवशिष्टमनुष्यजीवशरीराणि च बादरनिगोदशरीरैः प्रतिष्ठितानि आश्रितानि भवति ॥ २०० ॥ अथ स्थावरकायिकानां त्रसकायिकानां च शरीरसंस्थानं प्ररूपयति–

सं० च०–पृथ्वी आदि चारि प्रकार जीव, पृथ्वी १ अप २ तेज ३ वायु ४ इनिका शरीर, बहुरि केवलीका शरीर, बहुरि आहारक शरीर, बहुरि देवनिका शरीर, बहुरि नारकीनिका शरीर ए सर्व निगोद शरीरनिकरि अप्रतिष्ठित हैं आश्रित नाही। इनि विषैं निगोद शरीर न पाईए है। बहुरि अवशेष रहे जे जीव तिनिके शरीर प्रतिष्ठित जानने । इनिविषैं निगोद शरीर पाइए है। तातैं अवशेष सर्व निगोद शरीरनिकरि प्रतिष्ठित हैं आश्रित हैं। तहां सप्रतिष्ठित प्रत्येक वनस्पती द्वींद्रिय त्रींद्रिय चतुरिंद्रिय पंचेंद्रिय तिर्यंच अर पूर्वैं कहेतिनि बिना अवशेष मनुष्य इनि सबनिकैं शरीरविषैं निगोद पाइए हैं ॥ २००॥ आगैं स्थावरकायिक त्रसकायिक जीवनिके शरीरका आकार कहैं हैं—

**मसुरंबुबिंदुसूईकलावधयसण्णिहो हवे देहो ।**
**पुढवीआदिचउण्हं तरुतसकाया अणेयविहा ॥२०१॥**

मसूरांबुविंदुसूचीकलापध्वजसन्निभो भवेद्देहः ।
पृथिव्यादिचतुर्णां तरुत्रसकाया अनेकविधाः ॥ २०१ ॥

जी० प्र०---पृथिव्यप्तेजोवायुकायिकजीवानां चतुर्णां देहः-शरीरं यथाक्रमं मसूरांबुविंदुसूचीकलापध्वजसन्निभो भवति । पृथ्वीकायिकशरीरं मसूरेण वृत्तचणकेन सदृशं तद्वद्गोलकाकारमित्यर्थः । अप्कायशरीरं जलविंदुना सदृशं इदमपि गोलकाकारमित्यर्थः । तेजस्कायिकशरीरं सूचीकलापेन सदृशं तादृगूर्ध्ववहुमुखमित्यर्थः । वातकायिकशरीरं ध्वजेन सदृशं तादृगायतचतुरस्रमित्यर्थः । यद्यपि तच्छरीराणि उक्तसंस्थानानि तथापि तदवगाहनं घनांगुलासंख्येयभागमात्रमेवेति दृष्टिगोचरं नास्ति--इंद्रियगोचरं नास्ति। इंद्रियगोचरत्वेन प्रतीयमानं पृथिव्यादिकं तु वहुशरीरसमूह इति ग्राह्यं । तरूणां वनस्पतिकायिकानां, त्रसानां द्वींद्रियादीनां च कायाः शरीराणि अनेकविधाः अनियतसंस्थाना यथासंभवं घनांगुलासंख्येयभागादिसंख्यातगुणितघनांगुलावसानावगाहनविकल्पविशिष्टाः संतीति ज्ञातव्याः ॥ २०१ ॥ एवं कायमार्गणाकथनानंतरं कायसहितसंसारिजीवस्य दृष्टांतपूर्वकं व्यवहारमाह---

मं० प्र०---पृथिव्यादीनां चतुर्णां देहो यथाक्रम मसूरांबुविंदुसूचीकलापध्वजसन्निभो भवति । पृथ्वीकायिकस्य शरीरं मसूरेण वृत्तचणकेन सदृशं तद्वद्गोलकाकारमित्यर्थः । अप्कायिकस्य शरीरं जलविंदुसदृशं । इदमपि गोलकाकारमित्यर्थः । तेजस्कायिकस्य शरीर सूचीकलापसदृश, तद्वदूर्ध्वबहुमुखमित्यर्थः । वातकायिकस्य शरीरं ध्वजसदृशं तद्वदायतचतुरस्रमित्यर्थः । यद्यप्येतेषा शरीराणि कथितसंस्थानानि तथापि तदवगाहनं घनांगुलासंख्यातभागमात्रमेव ततो न दृष्टिगोचरः । इंद्रियगोचरतया प्रतीयमानं पृथिव्यादिकं तु बहुशरीरसमूह इति ग्राह्यं । तरूणा वनस्पतिकायिकानां त्रसकायिकाना च कायाः--शरीराणि अनेकविधाः--अनियतसंस्थानाः यथासंभवं घनांगुलासंख्यातभागसंख्यातभागसंख्यातगुणितघनांगुलप्रमितावगाहनाः ज्ञातव्याः ॥२०१॥ अथैव कायमार्गणां प्ररूप्य तत्कायसहितस्य संसारिणः दृष्टांतपूर्वकं व्यवहारं प्ररूपयति--

सं० च०--पृथिवीकायिक जीवनिके शरीर मसूर अन्न समान गोल आकार धरैं है । बहुरि अपकायिक जीवनिका शरीर जलकी बूंदके समान गोल आकार धरै है । बहुरि अगिनिकायिक जीवनिका शरीर सुईनिका समूहके समान लंबा अर ऊर्ध्वविषैं चौड़ा बहुमुखरूप आकार धरै है । बहुरि वातकायिक जीवनिका शरीर ध्वजा समान लंबा चौकोर आकार धरै है । ऐसैं इनिके आकार कहे तथापि इनिकी अवगाहना घनांगुलके असंख्यातवें भागमात्र है तातैं जुदे जुदे दीसैं नाहीं । जो पृथ्वी आदि इंद्रियगोचर है सो घने शरीरनिका समुदाय है ऐसा जानना । बहुरि तरु जे बनसपती कायिक अर द्वींद्रियादिक त्रस कायिक इनिके शरीर अनेक

प्रकार आकार धरैं हैं नियम नाहीं। ते घनांगुलका असंख्यातवां भागतैं लगाइ संख्यात घनांगुल पर्यंत अवगाहना धरैं है ऐसैं जानना ॥ २०१ ॥ आगैं काय मार्गणाके कथनके अनंतर कायसहित संसारी जीवनिका दृष्टांतपूर्वक व्यवहार कहैं हैं—

**जह भारवहो पुरिसो वहइ भरं गेहिऊण कावलियं।**
**एमेव वहइ जीवो कम्मभरं कायकावलियं ॥ २०२ ॥**

यथा भारवहः पुरुषो वहति भारं गृहीत्वा कावटिकं।
एवमेव वहति जीवः कर्मभरं कायकावटिकं ॥ २०२ ॥

जी० प्र०—लोके यथा भारवाहकः पुरुषः कावटिक-कावटिभृत भारं गृहीत्वा विवक्षितस्थानं वहति नयति प्रापयति तथा संसारिजीवः औदारिकादिनोकर्मशरीरक्षिप्तज्ञानावरणादिद्रव्यकर्मभारं गृहीत्वा नानायोनिस्थानानि वहति । पुनरपि स एव विप्रमुक्तकावटिकभारः एकत्र तदिष्टस्थाने तद्भाराक्रांतिजनितदुःखविगमेन सुखी भूत्वा तिष्ठति तथा कश्चिद्भव्यजीवोऽपि लब्धिभिः स्वीकृतसम्यग्दर्शनादिसामग्रीसंपन्नः तत्त्वज्ञानी शरीरकावटिकभृतकर्मभरं विप्रमुच्य तद्भाराक्रांतिजनितनानाविधदुःखवेदनाविगमेनेष्टे लोकाग्रनिवासे सुखीभूत्वा तिष्ठति इति भव्यजनहितोपदेशोयमाचार्यस्याभिप्रायगतो लक्ष्यः ॥ २०२ ॥ अथ दृष्टांतपुरस्सरं कायमार्गणाव्यतिक्रांतसोपायसिद्धस्वरूपं प्ररूपयति—

म० प्र०—यथा भारवहः कश्चित् पुरुषः कावटिकं भारं गृहीत्वा विवक्षितस्थानं वहति- नयति प्रापयति । एवमेव संसारिजीवः कायकावटिकं-औदारिकादिनोकर्मशरीरकावटिसभृतं, कर्मभारं- ज्ञानावरणादिद्रव्यकर्मभारं गृहीत्वा नानायोनिस्थानानि वहति । कावट्या भवः कावटिकः-कावटिसभृत इत्यर्थः । ततो विप्रमुक्तकावटिकभारः पुरुषो यथा क्वचिदिष्टस्थाने तद्भाराक्रांतिजनितदुःखविरहात्सुखी सन्नास्ते तथा कश्चिदासन्नभव्योऽपि लब्धिसंभूतसम्यग्दर्शनादिसामग्रीसंपन्न, तत्त्वज्ञानी शरीरकावटिसंभृतकर्मभारं विप्रमुच्य तद्भाराक्रांतिजनितनानाविधदुःखवेदनाविगमात् क्वचिदिष्टलोकाग्रनिवासे सुखी सन्नास्ते इति भव्यजनहितोपदेशोयमाचार्यस्याभिप्रायगतो लक्ष्य. ॥ २०२ ॥ अथ दृष्टांतपुरस्सरं कायमार्गणाव्यतिक्रांतं सोपायसिद्धस्वरूपं प्ररूपयति—

सं० च०—लोकविषैं जैसैं बोझका वहनहारा कोऊ पुरुष कावडियासो कावडिमैं भर्‍या जो बोझ भार ताहि लेकरि विवक्षित स्थानक पहुंचावै है तैसैं ही यहु संसारी जीव औदारिक आदि नोकर्मशरीरविषै भर्‍या

हूवा ज्ञानावरणादिक द्रव्यकर्मका भार ताहि लेकरि नानाप्रकार योनिस्थानकनिकौं प्राप्त करै है। बहुरि जैसैं सोई पुरुष कावड़िका भारकौं गेरि कोई एक इष्ट स्थानकविषै विश्राम करि तिस भारकरि निपज्या दुःखके वियोगकरि सुखी होइ तिष्ठै है तैसैं कोई भव्य जीव कालादि लब्धिनिकरि अंगीकार कीनीं जो सम्यग्दर्शनादि सामिग्री तींहि करि युक्त होता संता संसारी कावडिकाविषैं भर्‍या कर्म भारकौं छांड़ि तिस भार करि निपज्या नाना प्रकार दुःख पीड़ाका वियोगकरि इष्ट लोकका अग्रभागविषैं सुखी होइ तिष्ठै है। ऐसा हित उपदेश रूप आचार्य का अभिप्राय है ॥२०२॥ आगै दृष्टांतपूर्वक कायमार्गणारहित जे सिद्ध तिनिका उपायसहित स्वरूपकौं कहैं हैं—

## जह कंचणमग्गिगयं मुंचइ किट्टेण कालियाए य।
## तह कायबंधमुक्का अकाइया झाणजोगेण ॥ २०३ ॥

यथा कांचनमग्निगतं मुच्यते किट्टेन कालिकया च।
तथा कायबंधमुक्ता अकायिका ध्यानयोगेन ॥ २०३ ॥

जी० प्र०—यथा लोके मलिनं कांचनं- सुवर्णं, अग्निगतं-प्रज्वलज्ज्वलनदग्धं, अंतरंगसूतादिभावनासंस्कृतं सत् किट्टेन-बहिर्मलेन कालिकया च वैवर्ण्यरूपांतरंगमलेन च मुच्यते जाज्वल्यत्षोडशवर्णलक्षणस्वरूपोपलब्धिं प्राप्य सर्वजनैः श्लाघ्यते। तथा ध्यानयोगेन--धर्म्यशुक्लध्यानभावनया संस्कृतबहिरंगतपोग्निविशेषेण आसन्नभव्यजीवा अपि औदारिकतैजसकार्माभ्यां कार्मणशरीरसंश्लेषरूपबंधेन च मुक्ता भूत्वा अकायिकाः-अशरीराः सिद्धपरमेष्ठिनः, अनंतज्ञानादिस्वरूपोपलब्धिं प्राप्य-लोकाग्रे सर्वलोकेन स्तुतिप्रणामार्चनादिभिः श्लाघ्यंते। काय अस्ति एषामिति कायिकाः--शरीरिणः संसारिण इत्यर्थः। तद्विपरीता अकायिका मुक्ता इत्यर्थः ॥ २०३ ॥ अथ श्रीमाधवचंद्रत्रैविद्यदेवा एकादशगाथासूत्रैः कायमार्गणायां पृथ्वीकायिकादिजीवसंख्यामाख्यांति—

म० प्र०—यथा लोके काचनं-मलिनं सुवर्णं अग्निगतं- प्रज्वलज्ज्वलनदग्धमंतरंगरसादिभावनासंस्कृतं सत् किट्टेन बहिर्मलेन कालिकया च वैवर्ण्यरूपांतरमलेन मुच्यते ततश्च जाज्वलत्षोडशवर्णलक्षणस्वरूपोपलब्धिं प्राप्य सर्वलोकैः श्लाघ्यते तथा ध्यानप्रयोगेन धर्म्यशुक्लध्यानभावनया संस्कृता बहिरंगतपोग्निविशेषदग्धाः आसन्नभव्यजीवाः कायाभ्यां--औदारिकतैजसशरीराभ्यां, बंधेन कार्मणशरीरसंश्लेषेण मुक्ताः संतः, अशरीराः-अकायिकाः सिद्धपरमेष्ठिनः,

अनंतज्ञानादिस्वरूपोपलब्धिं प्राप्य लोकाग्रे सर्वलोकैः स्तुतिप्रणामार्चनादिभिः श्लाघ्यंते । कायोऽस्त्येषामिति कायिकाः शरीरिणः संसारिण इत्यर्थः । तद्विपरीता अकायिका मुक्ता इति ॥ २०३ ॥ अथ श्रीमाधवचंद्रत्रैविद्यदेवाः एकादशभिर्गाथाभिः कायमार्गणायां पृथ्वीकायिकादिजीवानां सख्याविशेषं प्रतिपादयंति—

सं० च०—जैसैं लोकविषैं मलयुक्त सोना सो अग्निकौं प्राप्त होता संता अंतरंग पारा आदिकी भावनाकरि संवार्‍या हुवा बाह्यमल तौ कीटिका अर अंतरंग मल श्वेतादि रूप अन्यवर्ण ताकरि रहित हो है। देदीप्यमान सोलहवान निज स्वरूपकी लब्धिकौं पाइ सर्व जननिकरि सराहिए है तैसें ध्यान योग जो धर्मध्यान शुक्लध्यान रूप भावना ताकरि अर बहिरंग तपरूपी अगिनिका संस्कार करि निकट भव्य जीव हैं ते भी औदारिक तैजस शरीर सहित कार्माण शरीरका संबंध रूप बंधकरि मुक्त होइ अकायिकाः कहिए शरीररहित सिद्ध परमेष्ठी ते अनंत ज्ञानादि स्वरूपकी उपलब्धिकौं पाइ लोकाग्रविषैं सर्व इंद्रादि लोककरि स्तुति नमस्कार पूजनादिक करि सराहिए है। काय जिनिकैं पाइए ते कायिक शरीरधारक संसारी जानने तिनतैं विपरीत कायरहित अकायिक मुक्तजीव जानने ॥२०३॥ आगैं श्रीमाधवचंद्र त्रैविद्यदेव ग्यारह गाथा सूत्रनिकरि पृथिवीकायिक आदि जीवनिकी संख्या कहैं हैं—

**आउड्ढरासिवारं लोगे अण्णोण्णसंगुणे तेऊ ।**
**भूजलवाऊ अहिया पडिभागोऽसंखलोगो दु ॥२०४॥**

सार्धत्रयराशिवारं लोके अन्योन्यसंगुणे तेजः ।
भूजलवायवः अधिकाः प्रतिभागोऽसंख्यलोकस्तु ॥ २०४ ॥

जी० प्र०—जगच्छ्रेणिघनप्रमितलोकप्रदेशप्रमाणं शलाकाविरलनदेयरूपेण त्रिःप्रतिकं कृत्वा श । वि । दे । विरलनराशिं विरलयित्वा
≡ ≡ ≡

रूपं रूपं प्रति देयराशिं दत्त्वा वर्गितसंवर्गं कृत्वा, समंतात् वर्गः संवर्गः वर्गितस्य संवर्गः वर्गितसंवर्गः तं विधायेत्यर्थः शलाकाराशितः एकं रूपमपनयेत्। पुनः तत्रोत्पन्नराशिं विरलयित्वा रूपं रूपं प्रति तमेव राशिं दत्त्वा वर्गितसंवर्गं कृत्वा तच्छलाकाराशितः अपरं रूपमपनयेत्। एवं लोकप्रमितशलाकाराशिपरिसमाप्तिपर्यंतं कृत्वा तं च समुत्पन्नराशिं शलाकाविरलनदेयरूपेण त्रिःप्रतिकं कृत्वा श ≡a वि ≡a दे ≡a विरलनराशिं विरलयित्वा रूपं रूपं प्रति देयराशिं दत्त्वा वर्गितसंवर्गं कृत्वा द्वितीयवारस्थापितशलाकाराशितः एकं रूपमपनयेत्। तत्रोत्पन्नराशिं विरलयित्वा रूपं रूपं प्रति देयराशिं दत्त्वा वर्गितसंवर्गं कृत्वा शलाकाराशितः अपरं रूपमपनयेत्। एवं द्वितीयवारस्थापितशलाकाराशिं निष्ठाप्य तत्रतनचरमसमुत्पन्नमहाराशिं प्राग्वत् त्रिःप्रतिकं कृत्वा श ≡a वि ≡a दे ≡a विरलनराशिं विरलयित्वा रूपं रूपं प्रति देयराशिं दत्त्वा वर्गितसंवर्गं कृत्वा तृतीयवारस्थापितशलकाराशितः एकं रूपमपनयेत्। तत्रोत्पन्नराशिं विरलयित्वा रूपं रूपं प्रति तमेव राशिं दत्त्वा वर्गितसंवर्गं कृत्वा शलाकाराशितः अपरं रूपमपनयेत्। एवं तृतीयवारस्थापितशलाकाराशिं निष्ठाप्य चरमसमुत्पन्नमहाराशिं प्राग्वत् त्रिःप्रतिकं कृत्वा

श ≡a वि ≡a दे ≡a विरलनराशिं विरलयित्वा रूपं रूप प्रति देयराशिं दत्त्वा वर्गितसंवर्गं कृत्वा चतुर्थवारस्थापितशलाकाराशितः एकं रूपमपनयेत्। तत्रोत्पन्नमहाराशिं विरलयित्वा रूपं रूपं प्रति देयराशिं दत्त्वा वर्गितसंवर्गं कृत्वा शलाकाराशितः अपरं रूपमपनयेत्। एवं प्रथमद्वितीयतृतीयवारस्थापितशलाकाराशिन्यूनचतुर्थवारस्थापितशलाकाराशिपरिसमाप्तौ सत्यां तत्रोत्पन्नमहाराशिः तेजस्कायिकजीवराशेः प्रमाणं भवति। अस्य राशेः अन्योन्याभ्यस्तगुणकारशलाकाराशिवर्गशलाकाराशर्धच्छेदराशीनां प्रमाणं तदल्पबहुत्वं च प्राक् परिभाषोक्तमत्रापि ज्ञातव्यं। पुनः भूजलवायुकायिकाः क्रमेण तेजस्कायिकराशितोऽधिका भवंति तदधिकागमननिमित्त भागहारः प्रतिभागहारः असंख्यातलोकप्रमितो भवति। तत्संदृष्टिर्नवांकः। अधिकक्रमो दर्श्यते तद्यथा—उक्ततेजस्कायिकराशौ ≡a अस्यैव तत्प्रतिभागहारभक्तैकभागेन ≡a । १/९ अधिकीकृते सति पृथ्वीकायिकजीवराशिप्रमाणं भवति। ≡a १०/९। पुनः अस्मिन्नेव राशौ अस्यैव तत्प्रतिभागहारभक्तैकभागेन ≡a । १०/९ । १/९ अधिकीकृते सत्यप्कायिकजीवराशिप्रमाणं भवति ≡a।१०/९।१०/९ पुनः अस्मिन्नेव राशौ अस्यैव प्रतिभागहारभक्तैकभागेन ≡a।१०/९।१०/९।१/९ अधिकीकृते सति वायुकायिकजीवराशिप्रमाणं भवति ≡a । १०/९ । १०/९ । १०/९ ॥ २०४ ॥

जी० प्र०—यस्मात् कारणात् लोके यो जीवः पुरुगुणे सम्यग्ज्ञानाधिकगुणसमूहे शेते—स्वामित्वेन प्रवर्तते, पुरुभोगे नरेंद्रनागेंद्रदेवेंद्राद्यधिकभोगचये भोक्तृत्वेन प्रवर्तते, पुरुगुणं कर्म धर्मार्थकाममोक्षलक्षणपुरुषार्थसाधनरूपदिव्यानुष्ठानं शेते—करोति च। पुरूत्तमे परमेष्ठिपदे शेते—तिष्ठति पुरूत्तमः सन् तिष्ठति इत्यर्थः तस्मात् कारणात् स जीवः पुरुः इति द्रव्यभावद्वयसंपन्नः पुरुषः इत्ययं जीवो वर्णितः। धातूनामनेकार्थत्वाचकत्वसंभवेन शीङ् स्वप्ने इत्येतस्य धातोः प्रवृत्तिकरणस्थानलक्षणार्थविशेषाः आचार्येण उक्ता न विरुध्यंते। पृषोदरादित्वेन अक्षरविपर्यासश्च तालव्यस्य षत्वं पुरुष इति। षोंतकर्मणि इत्येतस्य धातोर्वा ज्ञातव्यः॥ २७३॥

मं० प्र०—यस्मात्कारणात् लोके यो जीवः पुरुगुणे—सम्यग्ज्ञानाद्यधिकगुणसमूहे शेते—स्वामित्वेन प्रवर्तते। पुरुभोगे नरेंद्रनागेंद्रदेवेंद्राद्यधिकभोगचये भोक्तृत्वेन प्रवर्तते च। पुरुगुणवत् कर्म—धर्मार्थकाममोक्षलक्षणपुरुषार्थसाधनमनुष्ठानं शेते—करोति च, पुरौ—उत्तमे परमेष्ठिपदे शेते तिष्ठति च, तस्मात्कारणात् स जीवः पुरुषः इति वर्णितः। अयं च द्रव्यभावाभ्या सपन्नः पुरुषः कथितः। धातूनामनेकार्थसंभवेन शीङ् स्वप्ने इत्यस्य धातोः प्रवृत्तिकरणस्थानलक्षणार्थविशेषा आचार्येण कथिता न विरुध्यंते, पृषोदरादित्वादक्षरविपर्यासश्च, 'षोंऽतकर्मणि' इत्यस्य धातोर्वा॥ २७३॥

स० चं०—जातैं जो जीव पुरुगुण जो उत्कृष्ट सम्यग्ज्ञानादिक तीहिंविषैं शेते कहिए स्वामी होइ प्रवर्तै। बहुरि पुरुभोग जो उत्कृष्ट इंद्रादिकका भोग तीहिविषै शेते कहिए भोक्ता होय प्रवर्तै। बहुरि पुरुगुण कर्म जो धर्म अर्थ काम मोक्षरूप पुरुषार्थ तीहिनैं शेते कहिए करै। बहुरि पुरु जो उत्तम परमेष्ठीका पद तीहिविषैं शेते कहिए तिष्ठै तातैं सो द्रव्य भाव लक्षण संयुक्त द्रव्य भावतैं पुरुष कह्या है। पुरुष शब्दकी निरुक्तिकरि वर्णन कीया है धातुनिके अनेक अर्थ हैं तातैं शीङ् स्वप्ने इस धातुका स्वामी होना भोगवना करना तिष्ठना अैसैं अर्थ कहे विरोध न उपजावैं है। बहुरि इहां पृषोदर शब्दकीज्यों अक्षरविपर्यास जानने। तालवी शकारका मूर्धनी षकार करना। अथवा 'षोंऽतकर्मणि' इस धातुतैं निपज्या पुरुष शब्द जानना॥ २७३॥

**छादयदि सयं दोसे णयदो छाददि परं वि दोसेण।**
**छादणसीला जह्मा तह्मा सा वण्णिया इत्थी॥ २७४॥**

छादयति स्वकं दोषैः नयतः छादयति परमपि दोषेण।

छादनशीला यस्मात् तस्मात् सा वर्णिता स्त्री ॥ २७४ ॥

जी० प्र०—यस्मात्कारणात् स्वयमात्मानं दोषैः मिथ्यादर्शनाज्ञानासंयमक्रोधमानमायालोभैः छादयति संवृणोति, नयतः मृदुभाषितस्निग्धविलोकनानुकूलवर्तनादिकुशलव्यापारैः, परमपि अन्यपुरुषमपि स्ववशं कृत्वा दोषेण हिंसानृतस्तेयाब्रह्मपरिग्रहादिपातकेन छादयति आवृणोति तस्मात्कारणात् छादनशीला द्रव्यभावाभ्यां सा अंगना स्त्रीति वर्णिता-परमागमे प्रतिपादिता। यद्यपि तीर्थकरजनन्यादीनां कासांचित् सम्यग्दृष्टीनां एतदुक्तदोषाभावः, तथापि तासां दुर्लभत्वेन सर्वत्र सुलभप्राचुर्यव्यवहारापेक्षया स्त्रीलक्षणं निरुक्तिपूर्वकमुक्तं। (सा स्तृणाति स्वयमन्य च दोषैरिति निरुक्तिपूर्वकमाचार्येणोक्तं ) ॥ २७४ ॥

मं० प्र०—यस्मात् कारणात् य स्तृणाति स्वयं आत्मानं दोषैः--मिथ्यादर्शनाज्ञानासंयमक्रोधमानमायालोभादिभिः छादयति--संवृणोति, नयतः—मृदुभाषितस्निग्धविलोकनानुकूलवर्तनादिकुशलव्यापारैः परमपि--पुरुषमपि स्ववश्यं कृत्वा, दोषेण हिंसानृतस्तेयाब्रह्मपरिग्रहादिपातकेन छादयति तस्मात् छादनशीला द्रव्यभावाभ्या महिला सा स्त्रीति वर्णिता—परमागमे प्रतिपादिता। यद्यपि तीर्थंकरजनन्यादीनां कासांचित्सम्यग्दृष्टीनां प्रोक्तदोषाभावस्तथापि तासां दुर्लभत्वेन सर्वत्र सुलभप्राचुर्यव्यवहारापेक्षया स्त्रीलक्षणं निरुक्तिपूर्वकमाचार्यैरुक्तं ॥ २७४ ॥

सं० च०—जातैं जो स्वयं कहिए आपकौं दोषैः कहिए मिथ्यात्व अज्ञान असंयम क्रोधादिक तिनिकरि स्तृणाति कहिए आच्छादित करै है बहुरि नाहीं केवल आपहीकौं आच्छादित करै है जातैं पर जु है पुरुषवेदी जीव, ताहि कोमल वचन कटाक्ष सहित विलोकन मानुकूल प्रवर्तन इत्यादि प्रवीणतारूप व्यापारनितैं अपने वश करि दोष जे हैं हिंसादिक पाप तिनिकरि स्तृणाति कहिए आच्छादै है ऐसा आच्छादन रूप ही है स्वभाव जाका तातैं सो द्रव्य भावकरि स्त्री ऐसा कह्या है ऐसी स्त्री शब्दकी निरुक्तिकरि वर्णन कीया। यद्यपि तीर्थंकर की माता आदि सम्यग्दृष्टिणी स्त्री निविषै दोष नाहीं तथापि वे स्त्री थोरी अर पूर्वोक्त दोषकरि संयुक्त स्त्री घनी तातैं प्रचुर व्यवहार अपेक्षा ऐसा लक्षण आचार्यनै स्त्रीका कह्या ॥ २७४ ॥

णेवित्थी णेव पुमं णउंसओ उहयलिंगविदिरित्तो।
इट्ठावग्गिसमाणगवेदणगरुओ कलुसचित्तो ॥ २७५ ॥

तैं संख्यातगुणे घाटि द्रव्यपुरुष वेदी तिर्यंच हैं। बहुरि तातैं संख्यातगुणे घाटि सैनी पंचेंद्री तिर्यंच हैं। बहुरि तातैं संख्यातगुणा घाटि पीतलेश्याका धारक सैनी पंचेंद्री तिर्यंच हैं। बहुरि तीहस्यों संख्यातगुणा घाटि पद्मलेश्याका धारक सैनी पंचेंद्री तिर्यंच हैं। ऐसैं ए सब संख्यातगुणा घाटि कह्या ॥ २७७ ॥

## इगिपुरिसे बत्तीसं देवी तज्जोगभजिददेवोघे।
## सगगुणगारेण गुणे पुरुसा महिला य देवेसु ॥ २७८ ॥

एकपुरुषे द्वात्रिंशद्देव्यः तद्योगभक्तदेवौघे।
स्वकगुणकारेण गुणे पुरुषा महिलाश्च देवेषु ॥ २७८ ॥

जी॰ प्र॰—देवगतौ एकस्मिन् पुरुषे देवे तद्देव्यो द्वात्रिंशत् सर्वजघन्येन एकैकस्य पुरुषस्य द्वात्रिंशत् द्वात्रिंशत्। यद्यपि इंद्रादीनां ततः संख्यातगुणिता देव्यः संति तथापि तेषां अल्पत्वेन प्रकीर्णकादीनां असंख्येयगुणितत्वेन बहुत्वं, इंद्रादिदेव्याधिक्यस्य विवक्षा न कृता। तदेकदेवद्वात्रिंशद्देवीनां संयोगेन त्रयस्त्रिंशता ३३ देवौघं देवसामान्यराशिं भक्त्वा तदेकभागेन एकरूपेण पुरुषगुणकारेण गुणिते यल्लब्धं तावंतो देवगतौ पुरुषा भवंति। = ॥ १ / ४ । ६५ = । १ । ३३ । द्वात्रिंशता गुणिते तु यल्लब्धं तावंत्यो देव्यो भवंति। = ॥ ३२ / ४ । ६५ = । १ । ३३ (देवदेवीभेदमकृत्वा सामान्यापेक्षया स्वकगुणकारेणेति उक्तं तेनात्र भेदो ज्ञातव्यः) ॥ २७८ ॥

मं॰ प्र॰—देवगतौ एकस्मिन् पुरुषे देवे तद्देव्यो द्वात्रिंशत् एकैकस्य देवस्य सर्वजघन्यतोऽपि द्वात्रिंशद् द्वात्रिंशद्देव्यो भवंतीत्यर्थः।[1] यद्यपींद्रादीनां संख्यातगुणा देव्यः संति तथापि तेषामल्पत्वात् प्रकीर्णकादीनां असंख्येयगुणत्वेन बहुत्वमिति इंद्रादिदेव्याधिक्यस्याविवक्षा। तासां देवदेवीनां योगः त्रयस्त्रिंशन्मात्रः। ३३। तेन देवौघं देवसामान्यराशिं भक्त्वा तदेकभागे एकरूपेण पुरुषगुणकारेण गुणिते लब्धमात्रा देवेषु पुरुषा भवंति। ॥ = १ । १ / ४ । ६५ = । १ । ३३ द्वात्रिंशत्प्रमितेन

१ "देवगतौ एकपुरुषस्य देव्य सर्वजघन्येन द्वात्रिंशत् भवति" इति च पुस्तके पाठः।

नैव स्त्री नैव पुमान् नपुंसक उभयलिंगव्यतिरिक्तः ।

इष्टापाकाग्निसमानकवेदनागुरुकः कलुषचित्तः ॥ २७५ ॥

जी०प्र०——यो जीवो नैव पुमान्–पूर्वोक्तपुरुषलक्षणाभावात् पुरुषो न भवति, नैव स्त्री–उक्तस्त्रीलक्षणाभावात् स्त्री अपि न भवति ततः कारण त् उभयलिंगव्यतिरिक्तः श्मश्रुस्तनादिपुंस्त्रीद्रव्यलिंगरहितः इष्टिकापाकाग्निसमानतीव्रकामवेदनागुरुकः, कलुषचित्तः सर्वदा तद्वेदनया कलंकितहृदयः स जीवो नपुंकमिति परमागमे वर्णितः कथितः, तथापि स्त्रीपुरुषाभिलाषरूपतीव्र कामवेदनालक्षणो भावनपुंसकवेदोऽस्तीति आचार्यस्य तात्पर्यं ज्ञातव्यं ॥ २७५ ॥

म० प्र०——यो जीव. नैव पुमान् उक्तपुंलक्षणाभावात्, नैव स्त्रीं उक्तस्त्रीलक्षणाभावात् ततः उभयलिंगव्यतिरिक्त'—स्मश्रुस्तनादिपुंस्त्रीद्रव्यलिंगरहितः, इष्टिकापाकाग्निसमानतीव्रकामवेदनागुरुकः, कलुषचित्तः—सदा तद्वेदनया कलंकितहृदय. स जीवः नपुंसकामिति परमागमे वर्ण्यते तथापि स्त्रीपुरुषाभिलाषरूपतीव्रकामवेदनालक्षणो भावनपुसकवेदोस्तीति आचार्यस्य तात्पर्यं ज्ञातव्यं ॥ २७५ ॥

सं० च०——जो जीव पूर्वोक्त पुरुष वा स्त्रीनिके लक्षणके अभावतैं पुरुष नाहीं वा स्त्री नाहीं तातैं दोऊही वेदनिके डाढी मूंछ वा स्तन योनि इत्यादि चिह्न तिनिकरि रहित है बहुरि इष्टका पाक जो ईंट पचावनेका पंजावा ताकी अग्नि समान तीव्र काम पीडा करि गरवा भऱ्या है। बहुरि स्त्री वा पुरुष दोऊनिका अभिलाषरूप मैथुन संज्ञाकरि मैला है चित्त जाका ऐसा जीव नपुंमक आगम विषैं कह्या है यहु नपुंसक शब्दकी निरुक्तिकरि वर्णन कीया। स्त्री पुरुषका अभिलाषरूप तीव्र कामवेदना लक्षण धरैं भावनपुंसक है ऐसा तात्पर्य जानना ॥ २७५ ॥

तिणकारिसिट्ठपागग्गिसरिसपरिणामवेयणुम्मुक्का ।

अवगयवेदा जीवा सगसंभवणंतवरसोक्खा ॥ २७६ ॥

तृणकारीषेष्टपाकाग्निसदृशपरिणामवेदनोन्मुक्ताः ।

स्त्रीगुणकारेण गुणिते ......प्रमाणा देवेषु महिला देव्यो भवंति = ७ । ३२ ‌ देवदेवीभेदमकृत्वा सामान्यापेक्षया स्वकगुणकारेणेति सूत्रकारेणोक्तं तदेव
४ । ६५ = ७ । ३३
मया भेदेनोक्तं ॥ २७८ ॥

स० चं०—देवगतिविषैं एक पुरुषके बत्तीस देवांगना होंइ। कोई ही देवकैं बत्तीससौं घाटि देवांगना नाहीं अर इंद्रादिकनिके देवांगना तिनतैं संख्यातगुणी बहुत हैं तथापि जिनके बहुत देवांगना हैं असे देव तौ थोरे हैं अर बत्तीस देवांगना जिनके हैं असैं प्रकीर्णकादिक देव घने तिनतैं असंख्यात गुणे हैं। तातैं एक एक देवकैं बत्तीस बत्तीस देवांगनाकी विवक्षाकरि अधिककी न करि कही। सो बत्तीस देवांगना अर एक देव मिलाएं तैंतीस भए सो पूर्वै जो देवनिका परिमाण कह्या था ताकौं तेतीसका भाग दीएं जो एक भागका परिमाण आवै ताकौं एक करि गुणें तितना ही रह्या सो इतने तौ देवगतिविषैं पुरुष जानने अर याकौं बत्तीस गुणां कीएं जो परिमाण होइ तितनी देवांगना जाननी। भावार्थ—देवराशिका तेतीस भागमें एकभाग प्रमाण देव है बत्तीस भाग प्रमाण देवांगना हैं॥ २७८ ॥

## देवेहिं सादिरेया पुरिसा देवीहिं साहिया इत्थी ।
## तेहिं विहीण सवेदो रासी संढाण परिमाणं ॥ २७९ ॥

देवैः सातिरेकाः पुरुषाः देवीभिः साधिकाः स्त्रियः ।
तैर्विहीनः सवेदो राशिः षंढानां परिमाणं ॥ २७९ ॥

जी० प्र०—तिर्यग्मनुष्यपुरुषराशिभ्यां अधिको देवपुरुषराशिः स सामान्यपुरुषराशिर्भवति = ७ । १ । मनुष्यतिर्यक्-
४ । ६५ = ७ । ३३ ।

स्त्रीराशिभ्यामधिको देवीराशिः स सामान्यस्त्रीराशिर्भवति = ७ । ३२ / ४ । ६५ = ७ । ३३ । एतत्पुरुषस्त्रीराशिद्वयविहीनसवेदराशिनपुंसकवेदराशिर्भवति १३ ≡ सवेदराशिस्तु अवेदानिवृत्तिकरणाद्ययोगकेवल्यंतानां संख्यया हीनसंसारराशिः १३–॥ २७०. ॥

मं० प्र०—देवेभ्यः पुरुषदेवराशेः सातिरेकाः—तिर्यग्मनुष्यपुरुषराशिना साधिकाः सामान्यतः पुरुषाः पुंवेदिप्रमाण भवति = ७ । १ / ४ । ६५=७ । ३३ देवीभ्यः प्रागानीतदेवीराशेः सातिरेकाः—तिर्यग्मनुष्यपुरुषराशिना साधिकाः सामान्यतः स्त्रियः स्त्रीवेदिप्रमाण भवंतीत्यर्थः = ७ । ३२ / ४ । ६५=७ । ३३ ताभ्यां—सामान्यपुंवेदिस्त्रीवेदिराशिभ्यां विहीनः सवेदराशिः षढानां—नपुंसकवेदिनां परिमाणं भवति । १३ ≡ । अपगतवेदानिवृत्तिकरणसूक्ष्मसांपरायोपशांतकषायक्षीणकषायसयोगायोगकेवलिसंख्यारहितः ससारिजीवराशिः ।१३ –। सवेदराशिरित्यर्थः ॥ २७९ ॥

स० चं०—पुरुषवेदी देवनिका जो परिमाण कह्या तींहिविषैं पुरुषवेदी तिर्यंच मनुष्यनिका परिमाण मिलाएं सर्व पुरुषवेदी जीवनिका परिमाण हो है। बहुरि देवांगनाका जो परिमाण कह्या तींहिंविषैं तिर्यंचणी वा मनुष्यणीका परिमाण मिलाएं सर्वस्त्रीवेदी जीवनिका परिमाण हो है। बहुरि नवमा गुणस्थानका वेदरहित भागतैं लगाइ अयोगकेवली पर्यंत जीवनिका संख्यारहित सर्वसंसारी जीवनिका परिमाणमें पुरुषवेदी अर स्त्रीवेदी जीवनिका परिमाण घटाएं जो अवशेष प्रमाण रहै तितने नपुंसकवेदी जीव जानने ॥ २७९ ॥

**गब्भणपुइत्थिसण्णी सम्मुच्छणसण्णिपुण्णगा इदरा।**
**कुरुजा असण्णिगब्भजणपुइत्थीवाणजोइसिया ॥ २८० ॥**

**थोवा तिसु संखगुणा तत्तो आवलिअसंखभागगुणा ।**
**पल्लासंखेज्जगुणा तत्तो सव्वत्थ संखगुणा ॥ २८१ ॥**

गर्भनपुंस्त्रीसंज्ञिनः सम्मूर्छनसंज्ञिपूर्णका इतरे ।
कुरुजा असंज्ञिगर्भजनपुंस्त्रीवानज्योतिष्काः ॥ २८० ॥
स्तोकाः त्रिषु संख्यगुणाः तत आवल्यसंख्यभागगुणाः ।
पल्यासंख्येयगुणाः ततः सर्वत्र संख्यगुणाः ॥ २८१ ॥

जी० प्र०–संज्ञिपंचेंद्रियगर्भजनपुंसकवेदिनः, संज्ञिपंचेंद्रियगर्भजपुंवेदिनः, संज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः, सम्मूर्छिमसंज्ञिपंचेंद्रियपर्याप्ताः, संमूर्छिमसंज्ञिपंचेंद्रियापर्याप्ताः, अस्मिन् स्थानद्वये नपुंसकवेदिन एव कुरुजा भोगभूमिजाः ते च गर्भजसंज्ञिपंचेंद्रियपर्याप्ताः स्त्रीपुंवेदिन एव असंज्ञिपंचेंद्रियगर्भजनपुंसकवेदिनः, असंज्ञिपंचेंद्रियगर्भजपुंवेदिनः असंज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः व्यंतरदेवाः ज्योतिष्काश्च इत्येे द्वादश जीवराशयः उक्तक्रमेण उपर्युपरि रचयितव्याः। तत्र सर्वाधस्तनराशिः सर्वतः स्तोकः अष्टवारसंख्यातरूपैः आवल्यसंख्येयभागेन पल्यासंख्येयभागेन पणट्ठिगुणितप्रतरांगुलैश्च जगत्प्रतरे भक्ते यल्लब्धं तत्प्रमाणं भवति। =४ । ६५ = १११११ प ८ १११ (a a) । ततः उपरि त्रिषु स्थानेषु द्वितीय– =४ । ६५ = १११११ प ८ ११ (a a)

तृतीय— =४ । ६५ = १ १ १ १ १ प ८ १ (a a) चतुर्थ— =४ । ६५ १ १ १ १ १ प ८ (a a) राशयः संख्यातगुणितक्रमा भवंति । तत उपरि

स्थितः पंचमराशिः आवल्यसंख्येयभागगुणितः =४ । ६५ = १ १ १ १ १ प (a) अत उपरि स्थितः षष्ठराशिः पल्यासंख्येयभागगुणितः—

४ । ६५ = ७ ७ ७ ७ ७ अतः उपरि स्थानेषु सर्वेषु सप्तम—४ । ६५ = ७ ७ ७ ७ अष्टम ४ । ६५ = ७ ७ ७ नवम ४।६५ = ७ ७
दशम ४ । ६५ = ७ एकादश ४ । ६५ = राशयः पंचापि संख्यातगुणितक्रमा भवंति ॥ २८०–२८१ ॥

इति श्रीनेमिचंद्रविरचितायां गोम्मटसारापरनाम पंचसंग्रहवृत्तौ जीवतत्त्वप्रदीपिकाख्यायां जीवकांडे विंशतिप्ररूपणासु वेदमार्गणाप्ररूपणो नाम दशमोऽधिकारः॥ १०॥

मं० प्र०—संज्ञिपंचेंद्रियगर्भजनपुंसकवेदिनः, संज्ञिपंचेंद्रियगर्भजपुंवेदिनः, संज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः, संमूर्छिमसंज्ञिपंचेंद्रियपर्याप्ताः, संमूर्छिमसंज्ञिपंचेंद्रियापर्याप्ताः, अस्मिन् स्थ नद्वये नपुंसकवेदिन एव, कुरुजा भोगभूमिजाः ते च गर्भजसंज्ञिपंचेंद्रियपर्याप्ताः स्त्रीपुंसवेदिन एव, असंज्ञिपंचेंद्रियगर्भजनपुंसकवेदिन, असंज्ञिपंचेंद्रियगर्भजपुंवेदिनः, असंज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः, वानाः व्यंतरदेवाः, ज्योतिषिका इत्येते एकादशजीवराशयः उत्क्रमेण उपर्युपरि रचयितव्याः ॥ २८० ॥

मं० प्र०—तेषु सर्वाधस्तनप्रथमराशिः सर्वतः स्तोकः अष्टवारसंख्यातरूपैः आवल्यसंख्येयभागेन पल्यासंख्येयभागेन पणट्ठिना प्रतरांगुलेन च जगत्प्रतरे भक्ते सति यल्लब्धं तत्प्रमाणो भवति । तत उपरि त्रिषु स्थानेषु द्वितीयतृतीयचतुर्थराशयः संख्येयगुणाः। तत उपरिस्थित पंचमराशिः आवल्यसंख्येयभागगुणः। तत उपरिस्थितः षष्ठराशिः पल्यासंख्येयभागगुणः । तत उपरिस्थानेषु सर्वेषु सप्तमाष्टमनवमदशमैकादशराशयः पंचापि संख्येयगुणाः ॥ २८१ ॥

इति श्रीमदभयचन्द्रसूरिसिद्धान्तचक्रवर्तिकृतौ गोम्मटसारपञ्चसंग्रहवृत्तौ वेदमार्गणाप्ररूपणनामा दशमोऽधिकारः ॥ १० ॥

स० चं०—सैनी पंचेंद्री गर्भज नपुंसकवेदी १ बहुरि सैनी पंचेंद्री गर्भज पुरुषवेदी २ बहुरि सैनी पंचेंद्री गर्भज स्त्रीवेदी ३ बहुरि सम्मूर्छन सैनी पंचेंद्रिय पर्याप्त नपुंसकवेदी ४ बहुरि सम्मूर्छन सैनी पंचेंद्री अपर्याप्त नपुंसकवेदी ५ बहुरि भोगभूमियां गर्भज सैनी पंचेंद्री पर्याप्त पुरुषवेदी वा स्त्रीवेदी ६ बहुरि असैनी पंचेंद्री गर्भज नपुंसकवेदी ७ बहुरि असैनी पंचेंद्री गर्भज पुरुषवेदी ८ बहुरि असैनी पंचेंद्री गर्भज स्त्रीवेदी ९ बहुरि व्यंतरदेव १० अर ज्योतिषदेव ११ ए ग्यारा जीवराशि अनुक्रमतें ऊपरि ऊपरि लिखनी ॥ २८० ॥

सो खेतविषैं बोया हूवा बीज जैसैं बहुत फलकौं प्राप्त होइ वा बहुत सींव पर्यंत होइ तैसैं हलादिकतैं धरतीका फाडना इत्यादिक कृषिकर्मकों करै हैं तैसैं संसारी जीवका किंकर क्रोधादि कषाय नामा पालती सो प्रकृति प्रदेश स्थिति अनुभाग रूप कर्मका बंध सोही भया खेत तींहिं विषै मिथ्यात्वादिक परिणाम रूप बीज जैसैं कालादिककी सामग्री पाइ अनेक प्रकार सुख दुःख रूप बहुत फलकौं प्राप्त होइ वा अनंत समय पर्यंत फलकौं प्राप्त होइ तैसैं कार्यकौ करैं तातैं इन क्रोधादिकनिका कषाय ऐसा नाम कह्या 'कृषि विलेखने' इस धातुका अर्थकरि कषाय शब्दका निरुक्तिपूर्वक निरूपण आचार्यकरि कीया है ॥ २८२ ॥

**सम्मत्तदेससयलचरित्तजहक्खादचरणपरिणामे ।**
**घादंति वा कषाया चउसोलअसंखलोगमिदा ॥ २८३ ॥**

सम्यक्त्वदेशसकलचरित्रयथाख्यातचरणपारिणामान् ।
घातयंति वा कषायाः चतुःषोडशासंख्यलोकमिताः ॥ २८३ ॥

जी० प्र०---वा अथवा सम्यक्त्वं तत्त्वार्थश्रद्धानं, देशचारित्रं-अणुव्रतं, सकलचारित्रं-महाव्रतं, यथाख्यातचरणं-यथाख्यातचारित्रं एवंविधान् आत्मविशुद्धिपरिणामान् कषंति हिंसंति घ्नंतीति कषाया इति निर्वचनीयं । तद्यथा-अनंतानुबंधिक्रोधमानमायालोभकषाया आत्मनः सम्यक्त्वपरिणामं कषंति अनंतसंसारकारणत्वात्, अनंतं-मिथ्यात्वं, अनंतभवसंस्कारकालं वा अनुबध्नंति संघटयंतीत्यनंतानुबंधिन इति निरुक्तिसामर्थ्यात् । अप्रत्याख्यानावरणाः अणुव्रतपरिणामं कषंति । अप्रत्याख्यानं ईषत् प्रत्याख्यानं अणुव्रतं आवृण्वंति घ्नंतीति निरुक्तिसिद्धत्वात् । प्रत्याख्यानावरणाः सकलचारित्रं महाव्रतपरिणामं कषंति प्रत्याख्यानं-सकलसंयमं आवृण्वंति घ्नंतीति निरुक्तिसिद्धत्वात् । संज्वलनास्ते यथाख्यातचारित्रपरिणामं कषंति, सं समीचीनं, विशुद्धं संयमं यथाख्यातचारित्रनामधेयं ज्वलंति दहंति इति संज्वलनाः इति निरुक्तिबलेन तदुदये सत्यपि सामायिकादीतरसंयमाविरोधः सिद्धः । एवंविधः कषायः सामान्येन एकः, विशेषविवक्षायां तु अनंतानुबंध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनभेदाच्चत्वारः । पुनस्ते चत्वारोऽपि प्रत्येकं क्रोधमानमायालोभा इति षोडश १६ । तद्यथा—अनंतानुबंधिक्रोधमानमायालोभाः अप्रत्याख्यानावरणक्रोधमानमायालोभाः प्रत्याख्यानावरणक्रोधमानमायालोभाः संज्वलनक्रोधमानमायालोभाः इति पुनः सर्वेपि उदयस्थानविशेषापेक्षया असंख्यातलोकप्रमिता भवंति । कुतः ? तत्कारणचारित्रमोहनीयोत्तरोत्तरप्रकृतिविकल्पानां असंख्यातलोकमात्रत्वात् ≡ ३ ॥ २८३ ॥

स० चं०—पूर्वै जो ग्यारा राशि कहे तिनिविषै नीचला राशि सैनी पंचेंद्री गर्भज नपुंसकवेदी सो सर्वतैं स्तोक है। आठवार संख्यात अर आवलीका असंख्यातवां भाग अर पल्यका असंख्यातवां भाग अर पैंसठि हजार पांचसै छत्तीस प्रतरांगुल इनिका भाग जगत्प्रतरकौं दीएं जो परिमाण आवै तितने जानने। बहुरि याकै ऊपरि सैनी पंचेंद्री गर्भज पुरुष वेदीस्यों लगाइ तीन राशि अनुक्रमतैं संख्यातगुणा जानना। बहुरि चौथी राशितैं पंचम राशि संमूर्छन सैनी पंचेंद्री अपर्याप्त नपुंसकवेदी आवलीका असंख्यातवां भागगुणा जानना। बहुरि इस पंचम राशितैं षष्ठराशि पल्यका असंख्यातवां भागगुणा जानना। बहुरि यातैं असैनी पंचेंद्री गर्भज नपुंसक वेदीस्यों लगाइ ज्योतिषी पर्यंत सप्तम अष्टम नवम दशम एकादशम राशि अनुक्रमतैं संख्यातगुणा जानना। ऐसैं वेदमार्गणाविषैं जीवनिकी संख्या कही ॥ २८१ ॥

इति आचार्य श्रीनेमिचंद्रसिद्धांतचक्रवर्तिविरचित गोम्मटसार द्वितीयनाम पंचसंग्रह ग्रंथकी जीवतत्त्वप्रदीपिका नाम संस्कृत टीकाके अनुसारि सम्यग्ज्ञानचंद्रिका नामा भाषाटीकाकेविषैं जीवकांडविषैं प्ररूपित जे वीसप्ररूपणा तिनिविषैं वेदमार्गणा प्ररूपणा नामा दशमां अधिकार समाप्त भया ॥ १० ॥

मं.प्र.-वा--अथवा, सम्यक्त्वं-तत्त्वार्थश्रद्धानं, देशचारित्रं--अणुव्रतं, सकलचारित्रं-महाव्रतं, यथाख्यातचरणं यथाख्यातचारित्रं, एवं रूपान् आत्मनो विशुद्धपरिणामान्, कषंति हिंसति घ्नंतीति कषाया इति निरुच्यंते। तद्यथा- अनंतानुबंधिनः क्रोधमानमायालोभाः कषाया आत्मनः सम्यक्त्वपरिणामं कषंति। अनंतसंसारकारणत्वादनंतं मिथ्यात्वं अनंतभवसंस्कारकालं वा अनुबध्नाति संघटयंति इत्यनंतानुबंधिनः इति निरुक्तिसामर्थ्यात्। अप्रत्याख्यानावरणास्ते अणुव्रतपरिणामं कषंति, अप्रत्याख्यानं ईषत्प्रत्याख्यानमणुव्रतमावृण्वंति घ्नंतीति निरुक्तिसिद्धत्वात्। प्रत्याख्यानावरणास्ते सकलचारित्रं-महाव्रतपरिणामं कषंति, प्रत्याख्यानं सकलसंयममावृण्वंति घ्नंतीति प्रत्याख्यानावरणाः इति निरुक्तिवशात्। संज्वलनास्ते यथाख्यातचारित्रपरिणामं कषंति, सं--समीचीन, विशुद्धं संयमं यथाख्यातचारित्रनामधेयं ज्वलंति दहति इति संज्वलनाः इति निरुक्तिबलाच्चदुदयेऽपि सामायिकादीतरसंयमाविरोधः सिद्धः, एवंविधः कषायः सामान्यादेकः, विशेषविवक्षायां चत्वारः- अनंतानुबंध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनभेदात्, पुनस्ते षोडश भवंति एतेषां चतुर्णां प्रत्येकं क्रोधमानमायालोभभेदात्। तद्यथा-अनंतानुबंधिनः क्रोधमानमायालोभाः, अप्रत्याख्यानावरणाः क्रोधमानमायालोभाः, प्रत्याख्यानावरणाः क्रोधमानमायालोभाः, संज्वलनाः क्रोधमानमायालोभाः। इति पुनस्ते सर्वेप्युदयस्थानविशेषापेक्षया असंख्यातलोकप्रमिता भवंति। तत्कारणचारित्रमोहनीयोत्तरोत्तरप्रकृतिविकल्पानामसंख्यातलोकमात्रत्वात् ॥ २८३ ॥

स० चं०—अथवा 'कषंतीति कषायाः' जे हनैं घात करैं तिनिकौं कषाय कहिए। सो ए क्रोधादिक हैं ते सम्यक्त्व वा देश चारित्र वा सकल चारित्र वा यथाख्यात चारित्र रूप आत्माके विशुद्ध परिणामनिकौं घातैं हैं तातैं इनिका कषाय ऐसा नाम है। यहु कषाय शब्दका दूसरा अर्थ अपेक्षा लक्षण कह्या तहां अनंतानुबंधी क्रोधादिक हैं ते तत्त्वार्थ श्रद्धानरूप सम्यक्त्वकौं घातैं हैं जातैं अनंत कहिए अनंत संसारका कारण मिथ्यात्व वा अनंत संसार अवस्थारूप काल ताहि अनुबंध्नंति कहिए संबंधरूप करैं तिनिकौं अनंतानुबंधी कहिए। बहुरि अप्रत्याख्यानावरण क्रोधादिक कहे ते अणुव्रतरूप देश चारित्रकौं घातैं हैं जातैं अप्रत्याख्यान कहिए ईषत् प्रत्याख्यान किंचित् त्यागरूप अणुव्रत ताकौं आवृण्वंति कहिए आवरैं नष्ट करैं ताकौं अप्रत्याख्यानावरण कहिए। बहुरि प्रत्याख्यानावरण क्रोधादिक हैं ते महाव्रतरूप सकल चारित्रकौं घातैं हैं जातैं प्रत्याख्यान कहिए सकल त्यागरूप महाव्रत ताकौं आवृण्वंति कहिए आवरै नष्ट करै ताकौं प्रत्याख्यानावरण कहिए। बहुरि संज्वलन क्रोधादिक हैं ते सकल कषायका अभावरूप यथाख्यात चारित्रकौं घातैं हैं जातैं 'सं' कहिए समीचीन निर्मल यथाख्यात चारित्र ताकौं 'ज्वलंति' कहिए दहन करैं

तिनकौं संज्वलन कहिए इस निरुक्तितैं संज्वलनका उदय होते संतैभी सामायिकादि अन्य चारित्र होनेका अविरोध सिद्ध हो है। ऐसा यह कषाय सामान्यपनैं एक प्रकार है विशेषपनैं अनंतानुबंधी १ अप्रत्याख्याना-वरण २ प्रत्याख्यानावरण ३ संज्वलन ४ भेदतैं च्यारि प्रकार है बहुरि इनके एक एकके क्रोध मान माया लोभ करि च्यारि च्यारि भेद कीजिए तब सोलह प्रकार हो हैं। अनंतानुबंधी क्रोध १ मान २ माया ३ लोभ ४। अप्रत्या-ख्यानावरण क्रोध १ मान २ माया ३ लोभ ४। प्रत्याख्यानावरण क्रोध १ मान २ माया ३ लोभ ४। सं-ज्वलन क्रोध १ मान २ माया ३ लोभ ४। ऐसैं सोलह भेद भए। बहुरि उदय स्थानकोंके विशेषकी अ-पेक्षा असंख्यात लोक प्रमाण है जातैं कषायनिका कारणभूत जो चारित्रमोह ताकी प्रकृतिके भेद असंख्यात लोक प्रमाण हैं ॥ २८३ ॥

**सिलपुढविभेदधूलीजलराइसमाणओ हवे कोहो।**
**णारयतिरियणरामरगईसु उप्पायओ कमसो ॥ २८४ ॥**

शिलापृथ्वीभेदधूलिजलराशिसमानको भवेत् क्रोधः।
नारकतिर्यग्नरामरगतिषूत्पादकः क्रमशः ॥ २८४ ॥

जी० प्र —शिलाभेदपृथ्वीभेदधूलीरेखाजलरेखासमानः उत्कृष्टानुत्कृष्टाजघन्यजघन्यशक्तिविशिष्टक्रोधकषायः भवेत् स नारकतिर्यग्नरा-मरगतिषु क्रमशः यथाक्रमं उत्पादयति जीवं। तद्यथा—शिलाभेदसमानोत्कृष्टशक्तिविशिष्टक्रोधकषायः जीवं नरकगतावुत्पादयति। पृथ्वीभेदस-मानानुत्कृष्टशक्तिविशिष्टः क्रोधः तिर्यग्गतौ जीवमुत्पादयति। धूलीरेखासमानाजघन्यशक्तियुक्तः क्रोधः जीवं मनुष्यगतावुत्पादयति। जलरे-खासमानजघन्यशक्तियुक्तः क्रोधः जीवं देवगतावुत्पादयति। तत्तच्छक्तियुक्तक्रोधकषायपरिणतो जीवः तत्तद्गत्युत्पत्तिकारणतत्तदायुर्गत्यानुपूर्व्या-दिप्रकृतीर्बध्नातीत्यर्थः। अत्र राजिशब्दो रेखार्थवाची न तु पंक्तिवाची। यथा शिलादिभेदानां चिरतरचिरशीघ्रशीघ्रतरकालैर्विना अनुसंधानं न घ-टते तथोत्कृष्टादिशक्तियुक्तक्रोधपरिणतो जीवोऽपि तथाविधकालैर्विना क्षमालक्षणसंधानार्हो न स्यात् इत्युपमानोपमेययोः साहश्यं संभवतीति तात्पर्यार्थः ॥ २८४ ॥

मं० प्र०——शिलाभेदपृथ्वीभेदधूलीरेखाजलरेखासमानः उत्कृष्टानुत्कृष्टाजघन्यजघन्यशक्तिविशिष्टः क्रोधकषायो भवेत् स नारकतिर्यग्नरामरगतिषु क्रमशः यथाक्रमं जीवस्योत्पादको भवति । तद्यथा–शिलाभेदसमानोत्कृष्टशक्तिविशिष्टः क्रोधः-कोपः जीवं नारकगतौ व्युत्पादयति । पृथ्वीभेदसमानानुत्कृष्टशक्तिविशिष्टः क्रोधस्तिर्यग्गतौ जीवमुत्पादयति । धूलिरेखासमानाजघन्यशक्तिविशिष्टः क्रोधः मनुष्यगतौ जीवमुत्पादयति, जलरेखासमानजघन्यशक्तिविशिष्टः क्रोधः देवगतौ जीवमुत्पादयति । अत्र राजिशब्दो रेखावाची न तु पंक्तिवाची । तत्तच्छक्तियुक्तक्रोधकषायपरिणतो जीवः तत्तद्गत्युत्पत्तिकारणतत्तदायुर्गत्यानुपूर्वीनामादिप्रकृतीर्बध्नाति इत्यर्थः । यथा शिलादिभेदाना चिरतरचिरशीघ्रशीघ्रतरकालैर्विना संधानं न घटते तथा उत्कृष्टादिशक्तियुक्तक्रोधपरिणतो जीवोऽपि तथाविधकालैर्विना क्षमालक्षणसंधानार्हो न भवतीत्युपमानोपमेययोः सादृश्यं संभवतीति तात्पर्यार्थः ॥ २८४ ॥

स०चं०--शिलाभेद १ पृथ्वीभेद २ धूलिरेखा ३ जलरेखा ४ समान क्रोध कषाय सो अनुक्रमतैं नारक तिर्यंच मनुष्य देवगतिविषैं जीवकौं उपजावन हारा है। सोई कहिए हैं-जैसैं शिला जो पाषाणका भेद खंड होना सो बहुत घने काल गए बिना मिलै नाहीं तैसैं बहुत घने काल गए बिना क्षमारूप मिलनकौं न प्राप्त होइ ऐसा जो उत्कृष्ट शक्ति लीएं क्रोध सो जीवकौं नरकगति विषैं उपजावै है। बहुरि जैसैं पृथ्वीका भेद खंड होना सो घने काल गएं बिना मिलै नाहीं तैसैं घने काल गए बिना जो क्षमारूप मिलनेकौं न प्राप्त होइ ऐसा जो अनुत्कृष्ट शक्ति लीएं क्रोध सो जीवकौं तिर्यंचगतिविषैं उपजावै है । बहुरि जैसैं धूलिविषैं करी लीक सो थोरा काल गएं बिना मिलै नाहीं तैसैं थोरा काल गएं बिना जो क्षमारूप मिलनकौं प्राप्त न होइ ऐसा अजघन्य शक्ति लीएं क्रोध सो जीवकौं मनुष्यगतिविषैं उपजावै है। बहुरि जैसैं जलविषैं करीहुई लीक बहुत थोरा काल गएं विना मिलै नाहीं तैसैं बहुत थोरा काल गएं विना जो क्षमारूप मिलनको प्राप्त न होइ ऐसा जो जघन्यशक्ति लीएं क्रोध सो जीवकौं देवगतिविषैं उपजावै है। तिस तिस उत्कृष्टादि शक्तियुक्त क्रोधरूप परिणम्या जीव सो तिस तिस नरक आदि गतिविषैं उपजनेकौं कारण आयुगति आनुपूर्वी आदि प्रकृतिनिकौं बांधै है ऐसा अर्थ जानना। इहां राजि शब्द रेखावाचक जानना, पंक्तिवाचक न जानना। बहुरि इहां शिलाभेद आदि उपमान अर उत्कृष्टशक्तियुक्त आदि क्रोधादिक उपमेय ताका समानपना अतिघना कालादि गएं विना मिलना न होनेकी अपेक्षा जानना ॥२८४॥

**सेलट्ठिकट्ठवेत्ते णियभेएणणुहरंतओ माणो ।**
**णारयतिरियणरामरगईसु उप्पायओ कमसो ॥ २८५ ॥**

शैलास्थिकाष्ठवेत्रान् निजभेदेनानुहरन् मानः ।
नारकतिर्यग्नरामरगतिषूत्पादकः क्रमशः ॥ २८५ ॥

जी० प्र०—शैलास्थिकाष्ठवेत्रान् निजोत्कृष्टादिशक्तिभेदैरनुहरन् उपमीयमानो मानकषायः क्रमशः—क्रमेण नारकतिर्यग्नरामरगतिषु जीवमुत्पादयति । तद्यथा—शिलास्तंभसमानोत्कृष्टशक्तियुक्तमानकषायः जीवं नारकगतावुत्पादयति । अस्थिसमानानुत्कृष्टशक्तियुक्तमानकषायः जीवं तिर्यग्गतावुत्पादयति । काष्ठसमानाजघन्यशक्तियुक्तमानकषायः मनुष्यगतौ जीवमुत्पादयति । वेत्रसमानजघन्यशक्तियुक्तमानकषायः जीवं देवगतावुत्पादयति । यथा हि चिरतरादिकालैर्विना शैलास्थिकाष्ठवेत्राः नामयितुं न शक्यंते तथोत्कृष्टादिशक्तियुक्तमानपरिणतो जीवोऽपि तथाविधकालैर्विना मानं परिहृत्य विनयरूपनमनं कर्तुं न शक्नोतीति सादृश्यसंभवोऽत्र ज्ञातव्यः । तत्तच्छक्तियुक्तमानकषायपरिणतो जीवः तत्तद्गत्युत्पत्तिहेतुतत्तदायुर्गत्यानुपूर्वीनामादिकर्म बध्नातीति तात्पर्यं ॥ २८५ ॥

मं० प्र०—शैलास्थिकाष्ठवेत्रान्निजोत्कृष्टादिशक्तिभेदेन अनुहरन्नुपमीयमानो मानः—अभिमानः कषायः क्रमशः नारकतिर्यग्नरामरगतिषु जीवस्योत्पादको भवेत् । तथाहि शैलसमानोत्कृष्टशक्तियुक्तो मानो नरकगतौ जीवमुत्पादयति । अस्थिसमानानुत्कृष्टशक्तियुक्तो मानस्तिर्यग्गतौ जीवमुत्पादयति । काष्ठसमानाजघन्यशक्तियुक्तो मानो मनुष्यगतौ जीवमुत्पादयति । वेत्रसमानजघन्यशक्तियुक्तो मानो देवगतौ जीवमुत्पादयति । यथा चिरतरादिकालैर्विना शैलास्थिकाष्ठवेत्रा नामयितुं न शक्यंते तथा उत्कृष्टादिशक्तियुक्तमानपरिणतो जीवोऽपि तथाविधकालैर्विना मानमपाकृत्य विनयरूपनाम प्रापयितुं न शक्यते इति सादृश्यसंभवः । तत्तच्छक्तियुक्तमानपरिणतो जीवस्तत्तद्गत्युत्पत्तिहेतुतत्तदायुर्गत्यानुपूर्वीनामादिकर्मबंधको भवतीति तात्पर्यार्थः ॥ २८५ ॥

स० चं०—शैल १ अस्थि २ काष्ठ ३ वेत ४ समान जो अपने भेदनिकरि उपमीयमान च्यारि प्रकार मान कषाय सो क्रमतैं नारक तिर्यंच मनुष्य देवगतिविषैं जीवकौं उपजावै है । सो कहिए है—जैसें शैल जो पाषाण सो बहुत घने काल विना नमावने योग्य न होइ तैसें बहुत घनेकाल विना जो विनयरूप नमनकौं प्राप्त न होइ ऐसा जो उत्कृष्टशक्तिलीएं मान सो जीवनिकौं नरक गतिविषैं उपजावै है । बहुरि जैसें अस्थि जो हाड सो घने काल

विना नमावने योग्य न होइ तैसें घने काल विना जो विनयरूप नमनकौं प्राप्त न होइ ऐसा जो अनुत्कृष्टशक्ति
लीएं मान सो जीवकौं तिर्यंच गतिविषैं उपजावै है। बहुरि जैसें काठ थोरा कालविषैं नमावने योग्य न होइ तैसें
थोरा काल विना जो विनयरूप नमनकों प्राप्त न होइ ऐसा जो अजघन्यशक्ति लीएं मान सो जीवकौं मनुष्यग-
तिविषैं उपजावै है। बहुरि जैसें वैंतकी लकडी बहुत थोरे काल विना नमावने योग्य न होइ तैसें बहुत थोरा
काल विना जो विनयरूप नमनका प्राप्त न होइ ऐसा जो जघन्यशक्ति लीएं मान सो जीवकौं देवगतिविषैं उप-
जावै है। इहां भी पूर्वोक्त प्रकार प्रकृतिबंध होना वा उपमा उपमेयका समानपना जानना ॥ २८५ ॥

## वेणूवमूलोरब्भयसिंगे गोमुत्तए य खोरप्पे।
## सरिसी माया णारयतिरियणरामरगईसु खिवदि जियं॥२८६॥

वेणूपमूलोरभ्रकशृंगेण गोमूत्रेण च क्षुरप्रेण।
सदृशी माया नारकतिर्यग्नरामरगतिषु क्षिपति जीवं ॥ २८६ ॥

जी० प्र०—वेणूपमूलोरभ्रकशृंगगोमूत्रक्षुरप्रसदृशोत्कृष्टादिशक्तियुक्ता माया—वंचना यथाक्रमं नारकतिर्यग्नरामरगतिषु जीवं निक्षिपति। तद्यथा—वेणूमूलं वेणुमूलग्रंथिः तेन समानोत्कृष्टशक्तियुक्तमायाकषायः जीवं नरकगतौ निक्षिपति। उरभ्रकः—मेषः, तच्छृंगसदृशानुत्कृष्टशक्तियुक्तमायाकषायः जीवं तिर्यग्गतौ निक्षिपति। गोमूत्रसमानजघन्यशक्तियुक्तमायाकषायः जीवं मनुष्यगतौ निक्षिपति। यथा वेणूमूलादयः चिरतरादिकालं विना स्वस्ववक्रतां परिहृत्य ऋजुत्वं न प्राप्नुवंति तथा जीवोऽपि उत्कृष्टादिशक्तियुक्तमायाकषायपरिणतः तथाविधकालं विना स्वस्ववक्रतां परिहृत्य ऋजुपरिणामो न स्यात् इति सादृश्यं युक्तं। "तत्तदुत्कृष्टादिशक्तियुक्तमायाकषायपरिणतजीवः तत्तद्गतिक्षेपकारणं तत्तदायुर्गत्यानुपूर्व्यादिकर्म बध्नाति।" इति तात्पर्यार्थः ॥ २८६ ॥

मं० प्र०—वेणूपमूलोरभ्रकशृंगगोमूत्रक्षुरप्रसदृशोत्कृष्टादिशक्तियुक्ता माया-वंचना, यथाक्रमं नारकतिर्यग्नरामरगतिषु जीवं क्षिपति। तद्यथा-वेणूपमूलं वेणुमूलग्रंथिः, तेन सदृशोत्कृष्टशक्तियुक्ता माया नारकगतौ जीवं क्षिपति पातयति। उरभ्रकः—मेषः तच्छृंगसदृशानुत्कृष्टशक्तियुक्ता माया तिर्यग्गतौ जीवं क्षिपति। गोमूत्रसदृशाऽजघन्यशक्तियुक्ता माया मनुष्यगतौ जीवं क्षिपति। क्षुरप्रसमानजघन्यशक्तियुक्ता माया देवगतौ जीवं क्षिपति। यथा वेणूपमूला-

दयश्चिरतरादिकालैर्विना स्वस्वबक्रतां त्यक्त्वा ऋजुत्वं न गच्छंति तथा उत्कृष्टादिशक्तियुक्तमायापरिणतो जीवोऽपि तथाविधकालैर्विना मायां त्यक्त्वा ऋजुपरिणामो न भवति इति सादृश्यं युक्तं । तत्तदुत्कृष्टादिशक्तियुक्तमायापरिणतो जीवः तत्तद्गतिक्षेपकारणात्तत्तदायुर्गत्यानुपूर्वीनामादिकर्मबंधको भवतीति तात्पर्यार्थः ॥ २८६ ॥

स० चं०—वेणूपमूल १ उरभ्रकशृंग २ गोमूत्र ३ क्षुर समान माया ठिगनेरूप परिणति सो क्रमतैं नारक तिर्यंच मनुष्य देवगतिविषैं जीवकौं उपजावै है। सोई कहिए हैं-जैसैं वेणूपमूल जो वांसकी लकडीकी जड सो बहुत घने काल विना सरल न होइ तैसैं बहुत घने काल विना जो सरल न होइ ऐसा जो उत्कृष्ट शक्तिकौं लीएं माया सो जीवकौं नरकगतिविषैं उपजावै है। बहुरि जैसैं उरभ्रकशृंग जो मींढेका सींग सो घने काल विना सरल न होइ तैसैं घने काल विना जो सरल न होइ ऐसा जो अनुत्कृष्ट शक्ति लीएं माया सो जीवकौं तिर्यंच गतिविषैं उपजावै है। बहुरि जैसैं गोमूत्र जो गायमूत्रकी धारा सो थोरा कालविना सरल न होइ तैसैं थोरा कालविना सरल न होइ ऐसा अजघन्य शक्तिलीएं माया सो जीवकौं मनुष्यगतिविषैं उपजावै है। बहुरि जैसैं खुर जो पृथ्वी ऊपरि वृषभादिकका खोज सो बहुत थोरा कालविना सरल न होइ तैसैं बहुत थोरा काल विना जो सरल न होइ ऐसी जो जघन्यशक्ति लीएं माया सो जीवकौं देवगतिविषैं उपजावै है। इहां भी पूर्वोक्तप्रकार प्रकृतिबंध होना वा उपमा उपमेयका समानपना जानना ॥ २८६ ॥

## किमिरायचक्कतणुमलहरिद्दराएण सरिसओ लोहो ।
## णारयतिरिक्खमाणुसदेवेसुप्पायओ कमसो ॥ २८७ ॥

क्रिमिरागचक्रतनुमलहरिद्रारागेण सदृशो लोभः ।
नारकतिर्यग्मानुषदेवेषु उत्पादकः क्रमशः ॥ २८७ ॥

जी० प्र०—क्रिमिरागचक्रमलतनुमलहरिद्रारागवंधसमानोत्कृष्टादिशक्तियुक्तो लोभकषायो विषयामिलापरूपः क्रमशो—यथासंख्यं नार-

कतिर्यग्मानुषदेवगतिषु जीवमुत्पादयति । तद्यथा–क्रिमिरागेण कंबलादिरंजनेन समानोत्कृष्टशक्तियुक्तलोभकषायः जीवं नारकगतौ उत्पादयति । चक्रमलः–रथांगमलं, तेन समानानुत्कृष्टशक्तियुक्तलोभकषायः जीवं तिर्यग्गतौ उत्पादयति । तनुमलः शरीरमलः बहिर्गतः जल्लमल्लं, तद्बंधसदृशाजघन्यशक्तियुक्तलोभकषायः जीवं मनुष्यगतावुत्पादयति । हरिद्रारागः, अंगवस्त्रादिरंजनद्रव्यरागः–तद्बंधसदृशजघन्यशक्तियुक्तलोभकषाय. जीवं देवगतावुत्पादयति । क्रिमिरागादिसदृशतच्चदुत्कृष्टादिशक्तियुक्तलोभपरिणामेन परिणतो जीवः तन्नारकादिभवोत्पत्तिकारणतत्तदायुर्गत्यानुपूर्व्यादि कर्म बध्नातीति भावार्थः ॥ २८७ ॥

मं० प्र०— क्रिमिरागचक्रमलतनुमलहरिद्रारागबंधनमानोत्कृष्टादिशक्तियुक्तो लोभः- विषयाभिलाषरूपः, क्रमशः–यथासंख्यं नारकतिर्यग्मानुषदेवगतिषु जीवस्योत्पादको भवति। तद्यथा क्रिमिरागेण –कंबलादिरंजनेन सदृशोत्कृष्टशक्तियुक्तो लोभो नारकगतौ जीवमुत्पादयति । चक्रस्य–रथांगस्य मल –अक्षम्रक्षणस्नेह', तत्सदृशानुत्कृष्टशक्तियुक्तो लोभास्तिर्यग्गतौ जीवमुत्पादयति । तनोः–शरीरस्य, मलं –बहिर्गतं जल्लमलं, तद्बंधसदृशाजघन्यशक्तियुक्तो लोभो मानुषगतौ जीवमुत्पादयति । हरिद्रारागः--अंगवस्त्रादिरंजनद्रव्यरागस्तद्बंधसदृशजघन्यशक्तियुक्तो लोभो देवगतौ जीवमुत्पादयति । क्रिमिरागादिसदृशतत्तदुत्कृष्टादिशक्तियुक्तलोभपरिणतो जीवस्तत्तन्नारकादिभवोत्पत्तिकारणतदायुर्गत्यानुपूर्व्यानामादिकर्मबंधको भवतीति तात्पर्यार्थः ॥ २८७ ॥

स० चं०----क्रिमिराग १ चक्रमल २ तनुमल ३ हरिद्राराग ४ समान जो लोभ विषयाभिलाषरूप परिणाम सो क्रमतैं नरक तिर्यंच मनुष्य देवगतिविषै उपजावै है । सोई कहिए है--जैसैं क्रिमिराग कहिए किरमिची रंग सो बहुत घनेकाल गये विना नष्ट न होइ तैसैं जो बहुत घने काल विना नष्ट न होइ ऐसा जो उत्कृष्ट शक्तिलीएं लोभ सो जीवकौं नरकगतिविषै उपजावै है । बहुरि जैसैं चक्रमल जो पहेका मैल सो घने कालविना नष्ट न होइ तैसैं घने काल विना नष्ट न होइ ऐसा जो अनुत्कृष्ट शक्तिलीएं लोभ सो जीवकौं तिर्यंच गतिविषै उपजावै है । बहुरि जैसैं तनुमल जो शरीरका मैल सो थोरा कालविना नष्ट न होइ तैसैं थोरा काल विना नष्ट न होइ ऐसा जो अजघन्य शक्तिलीएं लोभ सो जीवकौं मनुष्यगतिविषै उपजावै है बहुरि जैसैं हरिद्राराग कहिए हलदका रंग सो बहुत थोरा काल विना नष्ट न होइ तैसैं बहुत थोरे काल विना नष्ट न होइ ऐसा जो जघन्य शक्तिलीएं लोभ सो जीवकौं देवगतिविषै उपजावै है । ऐसैं जिन जिन कषायनितैं जो जो गतिका उपजना कह्या तिन तिन कषायनितैं तिस ही तिस गति संबंधी आयु वा आनुपूर्वी इत्यादिकका बंध जानना ॥ २८७ ॥

## णारयतिरिक्खणरसुरगईसु उप्पण्णपढमकालम्हि ।
## कोहो माया माणो लोहुदओ अणियमो वापि ॥२८८॥

नारकतिर्यग्नरसुरगतिपूत्पन्नप्रथमकाले ।
क्रोधो माया मानः लोभोदयः अनियमो वापि ॥ २८८ ॥

जी० प्र०—नारकतिर्यग्नरसुरगत्युत्पन्नजीवस्य तत्प्रथमकाले-प्रथमसमये यथासंख्यं क्रोधमायामानलोभकषायाणामुदयः स्यादिति नियमवचनं कषायप्राभृतद्वितीयसिद्धांतव्याख्यातुर्यतिवृषभाचार्यस्य अभिप्रायमाश्रित्योक्तं । वा-अथवा महाकर्मप्रकृतिप्राभृतप्रथमसिद्धांतकर्तुः भूतबल्याचार्यस्य अभिप्रायेणाऽनियमो ज्ञातव्यः । प्रागुक्तनियमं विना यथासंभवं कषायोदयोऽस्तीत्यर्थः । अपिशब्दः समुच्चयार्थः , ततः कारणादुभयसंप्रदायोऽपि अस्माकं संशयाधिरूढ एवास्ति एकतरावधारणे शक्तिरहितत्वात् अस्ति न् भरतक्षेत्रे केवलिद्वयाभावात् । आरातीयाचार्याणां सिद्धांतद्वयकर्तृभ्यो ज्ञानातिशयवत्त्वाभावात् । यद्यपि विदेहे गत्वा तीर्थकरादिसन्निधौ कस्यचिदाचार्यस्य सकलश्रुतार्थेषु संशयविपर्यासानध्यवसायव्यवच्छेदेन वस्तुनिर्णयो भवेत् तदा सिद्धांतद्वयकर्तृविप्रतिपत्तिस्तथैवास्तीति तत्प्रेक्षावान् कः श्रद्धीते ॥ २८८ ॥

मं० प्र० -- नारकतिर्यग्नरसुरगतिपूत्पन्नस्य जीवस्य तद्भवप्रथमसमये यथासंख्यं क्रो मानमायालोभानां कषायाणामुदयो भवति । इदं नियमवचनं कषायप्राभृतस्य द्वितीयसिद्धांतस्य व्याख्यातणां यतिवृषभाचार्याणामाभिप्रायमाश्रित्योक्तं । वा-अथवा महाकर्मप्रकृतिप्राभृतस्य प्रथमसिद्धातस्य कर्तृणा भूतबल्याचार्याणामभिप्रायेण अनियमः--प्रागुक्तनियम विना यथासंभवं कषायोदयो भवतीत्यर्थः । अपिशब्दः समुच्चयार्थः । तेनोभयसंप्रदायोऽप्यस्माकं सशयाधिरूढो नैकतरावधारणे शक्तिरस्ति । अस्मिन् भरते तीर्थकरश्रुतकेवल्यभावात् । आरातीयाचार्याणां सिद्धांतद्वयकर्तृभ्यो ज्ञानातिशयवत्त्वाभावाच्च । यद्यपि विदेहे गत्वा तीर्थकरादिसन्निधौ कस्यचिदाचार्यस्य सकलश्रुतार्थेषु संशयविपर्यासानध्यवसायव्यवच्छेदेन वस्तुनिर्णयो भवेत् तदा सिद्धांतद्वयकर्तृविप्रतिपत्तिस्तथैवास्तीति कः प्रेक्षावान् श्रद्दधीत ॥ २८८ ॥

स० चं०---नरक तिर्यंच मनुष्य देवविषैं उत्पन्न भया जीवकैं पहिला समयविषैं क्रमतैं क्रोध मान माया लोभका उदय हो है। नारकी उपजै तहां उपजते ही पहले समय क्रोध कषायका उदय होइ । ऐसैं तिर्यंचकैं मायाका, मनुष्यकैं मानका, देवकैं लोभका उदय जानना । सो ऐसा नियम कषायप्राभृत दूसरा सिद्धांतका कर्ता यतिवृषभ नामा आचार्य ताके अभिप्रायकरि जानना । बहुरि महाकर्म प्रकृति प्राभृत प्रथमसिद्धांतका कर्ता

भूतवलि नामा आचार्य ताके अभिप्रायकरि पूर्वोक्त नियम नाही। जिस तिस कोई एक कषायका उदय हो है। ऐसें दोऊ आचार्यनिका अभिप्रायविषैं हमारैं संदेह है सो इस भरतक्षेत्रविषैं केवली श्रुतकेवली नाही वा समीपवर्ती आचार्यनिकैं उन आचार्यनितैं अधिक ज्ञान नाहीं तातैं जो विदेहविषैं गये तीर्थंकरादिकके निकटि शास्त्रार्थविषैं संशय विपर्यय अनध्यवसायका दूर होनेकरि निर्णय होइ तब एक अर्थका निश्चय होइ तातैं हमोने दोऊ कथन कीए हैं ॥ २८८ ॥

## अप्परोभयबाधणबंधासंजमणिमित्तकोहादी।
## जेसिं णत्थि कसाया अमला अकसाइणो जीवा ॥२८९॥

आत्मपरोभयबाधनबंधासंयमनिमित्तक्रोधादयः।
येषां न संति कषाया अमला अकषायिणो जीवाः ॥ २८९ ॥

जी० प्र०—स्वस्मिन् परस्मिन् उभयस्मिन् इति स्थानत्रयेऽपि प्रत्येकं बंधनबाधनासंयमानां त्रयाणामपि निमित्तभूताः क्रोधादयः कषायाः, पुंवेदादयो नोकषायाश्च येषां जीवाना न संति ते अकषायाः, अमलाः द्रव्यभावनोकर्ममलरहिताः सिद्धपरमेष्ठिनः संतीति ज्ञातव्यं। यद्यपि उपशांतकषायादिचतुर्गुणस्थानवर्तिनोऽपि अकषाया अमलाश्च यथासंभवं द्रव्यभावमलरहिताः संति तथापि तेषां गुणस्थानप्ररूपणयैव अकषायत्वसिद्धिरस्तीति ज्ञातव्य। तद्यथा—कस्यचिज्जीवस्य क्रोधादिकषायः स्वस्यैव बंधनहेतुः स्वशिरोऽभिघातादिबाधाहेतुः हिंसाद्यसंयमहेतुश्च भवति। कस्यचिज्जीवस्य क्रोधादिकषायः परस्य स्वशत्र्वादेर्बाधनबंधनासंयमहेतुर्भवति। कस्यचित्कामुकादिजीवस्य क्रोधादिकषायः स्वपरयोरपि यथासंभवं बाधनबंधनासंयमहेतुर्भवति इति विभागः लोकानुसारेण आगमानुसारेण च द्रष्टव्यः ॥ २८९ ॥

मं० प्र०—आत्मपरोभयबंधनबाधासंयमनिमित्तानि क्रोधादयः कषायाः येषा जीवानां न संति ते अकषायाः, अमलाः—द्रव्यभावनोकर्मरूपमलरहिताः सिद्धपरमेष्ठिनः संतीति ज्ञातव्यं। यद्यप्युपशांतकषायादिचतुर्गुणस्थानवर्तिनोऽप्यकषायाः अमलाश्च यथासंभवद्रव्यभावमलरहिताः, तथापि तेषां गुणस्थानप्ररूपणयैवाकषायत्वसिद्धेः। तद्यथा—कस्यचिज्जीवस्य क्रोधादिकषायः आत्मन एव स्वस्यैव, बंधनहेतुः—शिरोऽभिघातादिबाधाहेतुः हिंसाद्यसंयमहेतुश्च भवति

कस्यचित् क्रोधादिः परस्य शव्वादेर्बंधनादिहेतुः, कस्यचित्तु कामुकादेः क्रोधादिः--उभवस्य-स्वपरद्वयस्य यथासंभवं बंधनादिहेतुर्भवतीति विभागो लोकानुसारेण आगमानुसारेण च द्रष्टव्यः ॥ २८९ ॥

स० चं०—आपकौं वा परकौं वा दोऊकौं बंधनके वा बाधाके वा असंयमके कारणभूत ऐसे क्रोधादिक कषाय वा पुरुष वेदादिरूप नोकषाय ते जिनके न पाइये ते द्रव्यकर्म भावकर्म नोकर्ममलकरि रहित सिद्ध भगवान अकषाय जानने। उपशांत कषायसे लेकर च्यारि गुणस्थानवर्ती जीव भी अकषाय निर्मल हैं तिनकैं गुणस्थान प्ररूपणा ही करि अकषायपनाकी सिद्धि जाननी। तहां कोऊ जीवकैं तौ क्रोधादि कषाय ऐसैं हो हैं जिनतैं आपतैं आपको बांधै आप ही आपके मस्तकादिकका घात करै आपही आपकैं हिंसादि रूप असंयम परिणाम करै। बहुरि कोई जीवकैं क्रोधादि कषाय ऐसैं हो हैं जिनतैं और जीवनिकौं बांधै मारै उनके असंयम परिणाम करावै। बहुरि कोई जीवकैं क्रोधादि कषाय ऐसे हो हैं जिनतैं आपका वा और जीवनिका बांधना घात करना असंयम होना होइ सो ऐसे ए कषाय अनर्थके मूल हैं ॥ २८९ ॥

**कोहादिकसायाणं चउचउदसवीस होंति पदसंखा।**
**सत्तीलेस्साआउगबंधाबंधगदभेदेहिं ॥ २९० ॥**

क्रोधादिकषायाणां चत्वारः चतुर्दश विंशतिः भवंति पदसंख्याः।
शक्तिलेश्यायुष्कबंधाबंधगतभेदैः ॥ २९० ॥

जी० प्र०—क्रोधादिकषायाणां शक्तिलेश्यायुर्बंधाबंधगतभेदैर्यथाक्रमं चतुश्चतुर्दशविंशतिप्रमितपदानां स्थानानां संख्या भवति। तद्यथा शक्तिस्थानानि चत्वारि ४ लेश्यास्थानानि चतुर्दश १४ आयुर्बंधस्थानानि विंशतिः २० इत्यर्थः ॥ २९० ॥ तानि स्थानान्याह—

म० प्र०—क्रोधादीनां-क्रोधमानमायालोभाना कषायाणा शक्तिलेश्यायुर्बंधाबंधगतभेदैः, यथाक्रम चतुश्चतुर्दशविंशतिप्रमिताः पदाना स्थानानां संख्या-भवति। तद्यथा--शक्तिस्थानानि चत्वारि, लेश्यास्थानानि चतुर्दश, आयुर्बंधाबंधस्थानानि विंशतिरित्यर्थः ॥ २९० ॥

सं० च०—क्रोध मान माया लोभ कषाय तिनकी शक्तिस्थानके भेदकरि च्यारि संख्या हैं। लेश्या स्थानके भेदकरि चौदह है। आयुर्बलके बंधनेके अबंधनेके स्थान भेदकरि बीस संख्या हैं ॥२९०॥ ते स्थान आगैं कहिए है

**सिलसेलवेणुमूलक्किमिरायादी कमेण चत्तारि।**
**कोहादिकसायाणं सत्तिं पडि होंति णियमेण ॥ २९१ ॥**

शिलाशैलवेणुमूलक्रिमिरागादीनि क्रमेण चत्वारि।
क्रोधादिकषायाणां शक्तिं प्रति भवंति नियमेन ॥ २९१ ॥

जी० प्र०—क्रोधादिचतुःकषायाणां शक्तिं प्रति स्वफलदानसामर्थ्यमुद्दिश्य तीव्रतरतीव्रमंदमंदतरानुभागरूपाणि उत्कृष्टानुत्कृष्टाजघन्यजघन्यानुभागरूपाणि वा स्थानानि चत्वारि नियमेन, शिलाभेदशैलवेणुमूलक्रिमिरागा तीव्रतरानुभागोदाहरणानि आदयो येषां पृथ्वीभेदादीनां तीव्राद्यनुभागाद्युदाहरणानां तानि शिलाशैलवेणुमूलक्रिमिरागादीनि भवंति इति शिलाभेदादिदृष्टांता स्फुटं व्यवहारावधारणेन भवंति। परमागमव्यवहारिभिराचार्यैः अव्युत्पन्नमंदप्रज्ञशिष्यप्रतिबोधनार्थं व्यवहर्तव्यानि भवंति। दृष्टांतप्रदर्शनबलेनैव हि अव्युत्पन्नमंदप्रज्ञाः शिष्याः प्रतिबोधयितुं शक्यते। अतो दृष्टांतनामान्येव शिलाभेदादिशक्तीनां नामानीति रूढानि ॥ २९१ ॥

म० प्र०—क्रोधादीना चतुर्णां कषायाणा शक्तिं प्रति स्वफलदानसामर्थ्यमुद्दिश्य तीव्रतरतीव्रमंदमंदतरानुभागरूपाणि उत्कृष्टानुत्कृष्टाजघन्यजघन्यानुभागरूपाणि वा स्थानानि चत्वारि नियमेन, शिलाभेदशैलवेणुमूलक्रिमिरागाः तीव्रतरानुभागोदाहरणानि आदयो येषां पृथ्वीभेदादीना तीव्रानुभागाद्युदाहरणाना तानि तथोक्तानि इति शिलाभेदादिदृष्टाता नामव्यवहारावधारणेन भवंति—परमागमव्यवहारिभिराचार्यैरव्युत्पन्नमंदप्रज्ञस्वशिष्यप्रतिबोधनार्थं व्यवहर्तव्यानि भवंति। दृष्टातप्रदर्शनबलेनैव हि अव्युत्पन्नमंदप्रज्ञाः शिष्याः प्रतिपादयितुं शक्यंते अतो दृष्टांतनामान्येव शिलाभेदादीनि शक्तीनां नामानीति वा रूढानि ॥ २९१ ॥

सं० च०—क्रोधादिक जे कषाय तिनिकैं शक्ति कहिए अपना फल देनेकी सामर्थ्य ताकी अपेक्षातैं निश्चय करि च्यारि स्थान हैं। ते अनुक्रमतैं तीव्रतर, तीव्र, मंद, मंदतर, अनुभागरूप वा उत्कृष्ट अनुत्कृष्ट अजघन्य जघन्य अनुभाग रूप जानने। तहां शिलाभेद, शैल, वेणुमूल, क्रिमिराग ए तौ उत्कृष्ट शक्तिके उदाहरण जानने।

आदि शब्दतें पूर्वोक्त अनुत्कृष्टादि शक्तिके उदाहरण जो दृष्टांतमात्र कहे हैं ते सर्व जानने । ए दृष्टांत प्रगट व्यवहारका अवधारण करि हैं अर परमागमका व्यवहारी आचार्यनिकरि मंदबुद्धी शिष्य समझावनेके अर्थि व्यवहार रूप कीएं हैं जातें दृष्टांतके बलकरि ही मंदबुद्धी समझै हैं तातें दृष्टांतकी मुख्यताकरि जे दृष्टांतके नाम तेई शक्तिनिके नाम प्रसिद्ध कीएं हैं ॥ २११ ॥

**किण्हं सिलासमाणे किण्हादी छक्कमेण भूमिम्हि ।**
**छक्कादी सुक्कोत्ति य धूलिम्मि जलम्मि सुक्केक्का ॥२९२॥**

कृष्णा शिलासमाने कृष्णादयः षट् क्रमेण भूमौ ।
षट्कादिः शुक्लेति च धूलौ जले शुक्लैका ॥ २९२ ॥

जी० प्र०—शिलाभेदसमाने क्रोधोत्कृष्टशक्तिस्थाने एकैव कृष्णलेश्या भवति । यद्यपि तत्र असंख्यातलोकमात्राणि षट्स्थानपतितसंक्लेशहानिविशिष्टानि कषायोदयस्थानानि संति तथापि तानि सर्वाण्यपि कृष्णलेश्याया एव संक्लेशहानिस्थानानि नान्यलेश्याया इत्यभिप्रायेण शिलाभेदसमानोत्कृष्टस्थाने कृष्णलेश्यैव इत्याचार्येण कथितं । नियमेन इत्यनुवर्तमानेन नियमशब्देन अत्राप्यवधारणार्थः सूच्यते । स कः ? तच्चरमस्थाने उत्कृष्टशक्तिर्व्युच्छिद्यते इति भूमिभेदसमाने क्रोधानुत्कृष्टशक्तिस्थाने क्रमेण कृष्णादयः षडपि लेश्या भवंति । तद्यथा—तत्र सर्वोत्कृष्टमध्यमकृष्णलेश्यास्थानं भूमेदसमानक्रोधानुत्कृष्टशक्तिप्रथमोदयस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्येयलोकमात्रेष्वपि कृष्णैव लेश्या भवति नीलाद्यन्यलेश्यालक्षणस्य तत्रासंभवात् । ततः षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्येयलोकमात्रेषु उदयस्थानेषु मध्यमकृष्णलेश्या उत्कृष्टनीललेश्या च वर्तते तत्र तल्लेश्याद्वयलक्षणस्यैव संभवात् । तत उपरि षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णलेश्या मध्यमनीललेश्या उत्कृष्टकपोतलेश्याश्च वर्तंते । तत्र तल्लेश्यात्रयलक्षणसंभवात् । ततः उपरि षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णलेश्या मध्यमनीललेश्या मध्यमकपोतलेश्या जघन्यतेजोलेश्या च वर्तंते । तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात् । तत उपरि षट्स्थानपतितसंक्लेशहानियुक्तस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णनीलकपोततेजोलेश्याः जघन्यपद्मलेश्या च वर्तंते । तत्र तल्लेश्यापंचकलक्षणसद्भावात् । तत उपरि षट्स्थानपतित-

संक्लेशहानिस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णनीलकपोततेजःपद्मलेश्या जघन्यशुक्ललेश्या च वर्तते। तत्र तल्लेश्याषट्कलक्षणसद्भावात्। तत्रैव तच्चरमस्थाने अनुत्कृष्टशक्तिर्व्युच्छिद्यते। ततः उपरि धूलीरेखासमानक्रोधाजघन्यशक्तिस्थाने यथाक्रमं लेश्याषट्कादयः शुक्ललेश्यापर्यंताः एकैकहीना भूत्वा गच्छंति। तद्यथा—धूलीरेखासमानक्रोधाजघन्यशक्तियुक्तप्रथमस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु जघन्यकृष्णलेश्या मध्यमनीलकपोततेज पद्मशुक्ललेश्याश्च वर्तते। तत्र तल्लेश्याषट्कलक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने कृष्णलेश्या व्युच्छिद्यते तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु जघन्यनीललेश्या मध्यमाः कपोततेजःपद्मशुक्ललेश्याश्च वर्तते। तत्र तल्लेश्यापञ्चकलक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने नीललेश्या व्युच्छिद्यते। तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थाने जघन्यकपोतलेश्या मध्यमाः तेजःपद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात्। तत्रैव चरमस्थाने कपोतलेश्या व्युच्छिद्यते। तदनन्तरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितविशुद्धिवृद्धियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु उत्कृष्टा तेजोलेश्या मध्यमे पद्मशुक्ललेश्ये च वर्तते। तत्र तल्लेश्यात्रयलक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने उत्कृष्टतेजोलेश्या व्युच्छिद्यते। तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितविशुद्धिवृद्धियुक्तेषु संख्यातलोकमात्रेष्वपि कषायोदयस्थानेषूत्कृष्टपद्मलेश्या जघन्यशुक्ललेश्या च वर्तते। तत्र तद्द्वयलेश्यालक्षणसद्भावात्। तत्रैव चरमोदयस्थान एव उत्कृष्टपद्मलेश्या व्युच्छिद्यते तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितविशुद्धिवृद्धियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमा शुक्ललेश्यैव वर्तते तत्र तल्लेश्यालक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने अजघन्यशक्तिर्व्युच्छिद्यते। तत उपरि जलरेखासमानक्रोधजघन्यशक्तियुक्तेषु षट्स्थानपतितविशुद्धवृद्धिविशिष्टेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमा शुक्ललेश्यैव वर्तते तत्रैव तच्चरमोदयस्थाने उत्कृष्टा शुक्ललेश्यैव स्यात्। एवं चतुःशक्तियुक्तानि क्रोधस्य लेश्याश्रयेण चतुर्दशस्थानान्युक्तानि। अनेनैव क्रमेण मानादीनामपि चतुर्दशलेश्याश्रितस्थानानि नेतव्यानि ॥ २९२ ॥

मं० प्र०—शिलाभेदसमाने क्रोधोत्कृष्टशक्तिस्थाने एकैव कृष्णलेश्या। यद्यपि तत्र असंख्येयलोकमात्राणि षट्स्थानपतितसंक्लेशहानिविशिष्टानि कषायोदयस्थानानि संति तथापि तानि सर्वाण्यपि कृष्णलेश्याया एव संक्लेशहानिस्थानानि नान्यलेश्याया इत्यभिप्रायेण शिलाभेदसमाने उत्कृष्टस्थाने कृष्णेत्याचार्येणोक्तं। नियमेनेत्यनुवर्तमानेन नियमशब्देनात्रावधारणार्थः सूच्यते। तत्र तच्चरमस्थाने उत्कृष्टशक्तिर्व्युच्छिद्यते। भूमिभेदसमाने क्रोधानुत्कृष्टशक्तिस्थाने क्रमेण कृष्णलेश्यादयः षडपि लेश्या भवंति। तद्यथा—तत्र स्वयोग्यमध्यमकृष्णलेश्यास्थानं भूमेदसमानक्रोधानुत्कृष्टशक्तिप्रथमोदयस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानिस्थानेष्वसंख्येयलोकमात्रेषु अपि कृष्णैव लेश्या, नीलाद्यन्यतमलेश्यालक्षणस्य तत्रासंभवात्। ततः षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्येयलोकमात्रेषु उदयस्थानेषु मध्यमकृष्णलेश्या च उत्कृष्टनीललेश्या च वर्तते। तत्स्थानानां लेश्याद्वयलक्षणसंभवात्। ततः षट्स्थानपतितसंक्लेशहानि-

स्थानेष्वसंख्येयलोकमात्रेषु उदयस्थानेष्वपि मध्यमकृष्णलेश्या मध्यमनीललेश्या उत्कृष्टकपोतलेश्या च वर्तते तत्र तल्लेश्यात्रयलक्षणसद्भावात्, ततः षट्स्थानपतितसंक्लेशहानिस्थानेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमकृष्णलेश्या मध्यमनीललेश्या मध्यमकपोतलेश्या जघन्यतेजोलेश्या च वर्तते । तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात् । ततः षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमाः कृष्णनीलकपोततेजोलेश्याः जघन्यपद्मलेश्या च वर्तते तत्र तल्लेश्यापंचकलक्षणसद्भावात् । ततः षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमाः कृष्णनीलकपोततेज.पद्मलेश्याः जघन्यशुक्ललेश्या च वर्तते तत्र तल्लेश्याषट्कलक्षणसद्भावात् । तत्रैव चरमस्थाने अनुत्कृष्टशक्तिर्व्युच्छिद्यते ततः धूलीरेखासमानक्रोधाजघन्यशक्तिस्थाने क्रमेण लेश्याषट्कादयः शुक्ललेश्यापर्यंता एकैकहीना भवति । तद्यथा—धूलीरेखासमानक्रोधाजघन्यशक्तियुक्तप्रथमस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि जघन्यकृष्णलेश्या मध्यमा नीलकपोततेजःपद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्याषट्कलक्षणसद्भावात् । तत्रैव चरमोदयस्थाने कृष्णलेश्या व्युच्छिद्यते तदनंतरस्थानेषु तल्लेश्यालक्षणाभावात् । ततः षट्स्थानपतितसंक्लेशहानियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि जघन्यनीललेश्या, मध्यमा कपोततेज.पद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्यापंचकलक्षणसद्भावात् । तत्रैव चरमस्थाने नीललेश्या व्युच्छिद्यते तदनंतरस्थाने तल्लक्षणाभावात्, ततः षट्स्थानपतितसंक्लेशहानियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि जघन्यकपोतलेश्या मध्यमाः तेज.पद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात् । तत्रैव चरमस्थाने कपोतलेश्या व्युच्छिद्यते । तदनंतरस्थाने तल्लेश्यालक्षणाभावात् । ततः षट्स्थानपतितविशुद्धिवृद्धियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि उत्कृष्टा तेजोलेश्या, मध्यमे पद्मशुक्ललेश्ये च वर्तते तत्र तल्लेश्यात्रयलक्षणसद्भावात् । तत्रैव चरमस्थाने तेजोलेश्या व्युच्छिद्यते तदनंतरस्थाने तल्लक्षणाभावात् । ततः षट्स्थानपतितविशुद्धिवृद्धियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि उत्कृष्टा पद्मलेश्या, मध्यमा शुक्ललेश्या च वर्तते तत्र तल्लेश्याद्वयलक्षणसद्भावात्, तत्रैव चरमस्थाने पद्मलेश्या व्युच्छिद्यते तदनंतरस्थाने तल्लक्षणाभावात् । ततः षट्स्थानपतितविशुद्धिवृद्धियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमा शुक्ललेश्या वर्तते तत्र तल्लक्षणसद्भावात् । तत्रैव चरमस्थाने अजघन्यशक्तिर्व्युच्छिद्यते ततः जलरेखासमानजघन्यशक्तियुक्तेषु षट्स्थानपतितविशुद्धिविशिष्टेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमा शुक्ललेश्या एकैव वर्तते तत्रैव चरमस्थाने उत्कृष्टा शुक्ललेश्या भवति एवं लेश्याश्रयेण क्रोधस्य चतुःशक्तियुक्तानि चतुर्दशस्थानानि भवति । अनेनैव क्रमेण मानादीनामपि चतुर्दशलेश्याश्रितस्थानानि आनेतव्यानि ॥ २९२ ॥

स० चं०—शिला भेद समान जो क्रोधका उत्कृष्टशक्ति स्थान तीहिविषैं एक कृष्णलेश्या ही है। यद्यपि इस उत्कृष्टशक्तिस्थानविषैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण कषायनिके उदयस्थान हैं बहुरि तथापि ते सर्वस्थान कृष्णलेश्याहीके हैं कृष्णलेश्याहीके उत्कृष्ट मध्यम भेदरूप जानने। षट्स्थानपतित संक्लेशहानिका स्वरूप ऐसा जानना। जेते कषायनिके अविभाग प्रतिच्छेद पहिलें थे तिनसौं घाटि होनेलगे ते अनंतभागहानि असंख्यातभागहानि संख्यातभागहानि संख्यातगुणहानि असंख्यातगुणहानि अनंतगुणहानिरूप

घटे ऐसैं तीव्र कषाय घटनेका नाम षट्स्थानपतितसंक्लेशहानि कहिए। कषायनिके अविभाग प्रतिच्छेद अनंत हैं तिनकी अपेक्षा षट्स्थानपतित हानि संभवै है अर स्थानभेद असंख्यातलोक प्रमाण ही हैं। नियम शब्दकरि ताका अंतस्थानविषैं उत्कृष्ट शक्तिकी व्युच्छित्ति हो है। बहुरि भूमिभेद समान क्रोधका अनुत्कृष्टशक्तिस्थान तीहिंविषैं अनुक्रमतैं छहो लेश्या पाइए है। सो कहिए है--भूमिभेद समान क्रोधका अनुत्कृष्ट शक्तिस्थानका पहिला उदयस्थानतैं लगाइ षट्स्थानपतित संक्लेशहानि लीएं असंख्यात लोक प्रमाण उदयस्थानकनिविषैं तौ केवल कृष्णलेश्या ही है, कृष्णलेश्याहीका मध्यभेद पाइए है जातैं अन्य लेश्याका लक्षण तहां नाहीं। बहुरि इहांतैं आगैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं मध्यम कृष्णलेश्या उत्कृष्ट नील लेश्या पाइए है जातैं इहां तिनि दोऊ लेश्यानिका लक्षण संभवै है। बहुरि इनितैं आगैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यात लोक प्रमाण उदयस्थानकनिविषैं मध्यम कृष्णलेश्या मध्यम नील लेश्या उत्कृष्ट कपोत लेश्या पाइए है जातैं इहां तिनि तीनों लेश्यानिके लक्षण संभवै हैं। बहुरि इनितैं षट्स्थानपतित संक्लेश हानि लीएं असंख्यात लोक प्रमाण उदयस्थानकनिविषैं मध्यम कृष्णलेश्या मध्यम नील लेश्या मध्यम कपोत लेश्या जघन्य पीतलेश्या पाइए है तातैं इहां तिनि च्यारयो लेश्यानिके लक्षण संभवै है। इनितैं बहुरि षट्स्थानपतित संक्लेश हानि लीएं असंख्यातलोक प्रमाण उदयस्थानकनिविषैं मध्यम कृष्ण नील कपोत पीत लेश्या अर जघन्य पद्मलेश्या पाइए है जातैं इहां तिनि पंच लेश्यानिका लक्षण संभवै है। बहुरि इनितैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यात लोक प्रमाण स्थानकनिविषैं मध्य कृष्ण नील कपोत पीत पद्म लेश्या अर जघन्य शुक्ललेश्या पाइए है जातैं इहां तिनि छहौ लेश्यानिका लक्षण संभवै है। ऐसैं क्रोधका अनुत्कृष्ट शक्तिस्थानका जे स्थान भेद तिनिविषैं क्रमतैं छहौ लेश्याके स्थानक जानने। इहां अंतस्थानविषैं अनुत्कृष्टशक्तिकी व्युच्छित्ति हुई। बहुरि धूलीरेखा समान क्रोधका अजघन्यशक्तिस्थान ताके स्थानकनिविषैं छह लेश्यातैं एक एक घाटि शुक्ल लेश्या पर्यंत लेश्या पाइए है। सोई कहिए है-धूली रेखा समान क्रोधका प्रथम स्थानतैं लगाइ षट्स्थानपतित संक्लेशहानि लीएं असंख्यात-

लोक प्रमाण स्थानकनिविषैं जघन्य कृष्ण लेश्या मध्यम नील कपोत पीत पद्म शुक्ल लेश्या पाइए हैं जातैं इहां छहो लेश्यानिके लक्षण संभवै है। इहां अंतस्थानविषैं कृष्णलेश्याका विच्छेद हुवा। बहुरि इहांतैं आगैं इसही शक्तिका षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं जघन्य नील लेश्या मध्यम कपोत पीत पद्म शुक्ललेश्या पाइए है जातैं इहां तिनि पंच लेश्यानिका लक्षण संभवै है। इहां अंतस्थानकनिविषैं नील लेश्याका विच्छेद हुवा। बहुरि इहांतैं आगैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं जघन्य कपोत लेश्या मध्यम पीत पद्म शुक्ल लेश्या पाइए है जातैं इहां तिनि च्यारि लेश्यानिके लक्षण संभवै है इहां अंतस्थानविषैं कपोत लेश्याका विच्छेद हुवा ऐसैं संक्लेश परिणामनिकी हानि होते संते जो मंदकषायरूप परिणाम भया ताकौं विशुद्ध परिणाम कहिए ताके अनंते अविभाग प्रतिच्छेद हैं सो तिनकी अनंत भागवृद्धि असंख्यात भागवृद्धि संख्यात भागवृद्धि संख्यात गुणवृद्धि असंख्यात गुणवृद्धि अनंतगुण वृद्धिरूप जो वृद्धि सो षट्स्थानपतित विशुद्धवृद्धि कहिए सो उन च्यारि लेश्याका स्थानतैं आगैं षट्स्थानपतित विशुद्धवृद्धिलीयें असंख्यातलोक प्रमाण स्थानकनिविषैं उत्कृष्ट पीत लेश्या मध्यम पद्म शुक्ललेश्या पाइए है जातैं इहां तीन तिनि लेश्यानिहीका लक्षण संभवै है। इहां अंतस्थानकनिविषैं पीतलेश्याका विच्छेद हुवा। बहुरि इहांतैं षट्स्थानपतित विशुद्ध वृद्धि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं उत्कृष्ट पद्मलेश्या मध्यम शुक्ललेश्या ही पाइए हैं। जातैं इहां तिनि दोय ही लेश्यानिके लक्षण संभवै हैं। इहां अंतस्थानविषैं पद्मलेश्याका विच्छेद हुवा। बहुरि इहांतैं षट्स्थानपतित विशुद्धि वृद्धि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं मध्यम शुक्ललेश्या ही पाइए है जातैं इहां तिस ही लेश्याके लक्षण पाइए है। ऐसैं धूली रेखा समान क्रोधका अजघन्यशक्तिस्थानके जे उदयरूप स्थानक तिनिविषैं लेश्या कही, इहां अंतस्थानविषैं अजघन्यशक्तिकी व्युच्छित्ति भई। बहुरि इहांतैं आगैं जल रेखा समान क्रोधका जघन्य शक्तिस्थान ताके षट्स्थानपतित विशुद्धि वृद्धिलीएं असंख्यातलोक प्रमाण स्थानकनिविषैं मध्यम शुक्ललेश्या पाइए है। बहुरि याहीके अंतस्थानविषैं उत्कृष्ट शुक्ल

**संजमविसेससहिए मणपज्जवणाणमुद्दिट्ठं ॥ ३०२ ॥**

**मिश्रोदये संमिश्रं अज्ञानत्रयेण ज्ञानत्रयमेव ।**
**संयमविशेषसहिते मनःपर्ययज्ञानमुद्दिष्टं ॥ ३०२ ॥**

जी० प्र०—मिश्रोदये-सम्यक्मिथ्यात्वकर्मोदये सति अज्ञानत्रयेण सह सम्यग्ज्ञानत्रयमेव सम्मिश्रं भवति अशक्यविवेचनत्वेन सम्यग्मिथ्यामतिज्ञानं सम्यग्मिथ्याश्रुतज्ञानं सम्यग्मिथ्यावधिज्ञानमिति व्यपदेशभाग्भवति । सम्यग्मिथ्यादृष्टौ वर्तमानं ज्ञानत्रयं न केवलं सम्यग्ज्ञानं, न केवलं मिथ्याज्ञानं अपि किंतु उभयात्मकश्रद्धानवत् उभयात्मकत्वेन मिथ्याज्ञानसंमिश्रं सम्यग्ज्ञानं भवति इत्याचार्यैः कथितं ज्ञातव्यं । मनःपर्ययज्ञानं तु संयमविशेषसहितेष्वेव प्रमत्तसंयतादिक्षीणकषायपर्यंतेषु सप्तगुणस्थानेषु तपोविशेषोपबृंहितविशुद्धिपरिणामविशिष्टेषु संभवति नेतरदेशसंयतादिषु गुणस्थानेषु तथाविधतपोविशेषाभावात् ॥ ३०२ ॥ अथ मिथ्याज्ञानविशेषलक्षणं गाथात्रयेणाह—

म० प्र०—मिश्रस्य-सम्यग्मिथ्यात्वकर्मणः, उदये सति अज्ञानत्रयेण संमिश्रमेव सज्ज्ञानत्रयं सम्यग्मिथ्यामतिज्ञानं सम्यग्मिथ्याश्रुतज्ञानं सम्यग्मिथ्यावधिज्ञानमिति व्यपदेशार्हं भवति । सम्यग्मिथ्यादृष्टौ वर्तमान ज्ञानत्रयं न केवलं सम्यग्ज्ञानमेव नापि केवलं मिथ्याज्ञानमेव किंतु उभयात्मकश्रद्धानवत् उभयात्मकत्वेन ज्ञानमपि संमिश्रमिति युक्तमुक्तमाचार्यैः । मनःपर्ययज्ञानं पुनः संयमविशेषसहिते प्रमत्तसंयतादिक्षीणकषायपर्यंततपोविशेषोपबृंहितविशुद्धिपरिणामे सभवति नेतरस्मिन् देशसंयतादौ तत्र तादृशतपोविशेषाभावादिति पूर्वाचार्यैरुद्दिष्टं ॥ ३०२ ॥ अथ मिथ्याज्ञानविशेषलक्षणं गाथात्रयेण प्ररूपयति—

स० चं०—मिश्र कहिए सम्यग्मिथ्यात्व नामा मोहनीय कर्मकी प्रकृति ताके उदय होतैं तीनौं अज्ञानकरि मिल्या तीनौं सम्यग्ज्ञान इहां हो हैं जातैं जुदा कीया जाता नाहीं तातैं सम्यग्मिथ्यामति १ सम्यग्मिथ्याश्रुत २ सम्यग्मिथ्या अवधि ३ ऐसैं इहां नाम हो है। जैसैं इहां एक कालविषैं सम्यग्रूप वा मिथ्यारूप मिल्या हूवा श्रद्धान पाइए है तैसैं ही ज्ञानरूप वा अज्ञानरूप मिल्या हूवा ज्ञान पाइए है । इहां न तौ केवल सम्यग्ज्ञान ही है न केवल मिथ्याज्ञान है, मिथ्याज्ञान करि मिल्या सम्यग्ज्ञानरूप मिश्र जानने । बहुरि मनःपर्यय ज्ञान विशेष संयमका धारक छठा गुणस्थानतैं बारह्वां गुणस्थान पर्यंत सात गुणस्थानवर्ती तप विशेष करि वृद्धिरूप विशुद्धताके धारी महामुनि तिनहीकैं पाइए है जातैं अन्य देश संयतादिविषैं तैसा तपका विशेष न संभवै है ॥३०२॥ आगैं मिथ्याज्ञानका विशेष लक्षण तीनि गाथानिकरि कहैं हैं—

विसजंतकूडपंजरबंधादिसु विणुवएसकरणेण ।
जा खलु पवट्टए मइ मइ अण्णाणंतिणं वेंति ॥ ३०३ ॥

विषयंत्रकूटपंजरबंधादिषु विनोपदेशकरणेन ।
या खलु प्रवर्तते मतिः मत्यज्ञानमितीदं ब्रुवंति ॥ ३०३ ॥

जी० प्र०—विषयंत्रकूटपंजरबंधादिषु जीवमारणबंधनहेतुषु या मतिः परोपदेशकरणेन विना प्रवर्तते तदिद मत्यज्ञानमित्यर्हदादयो ब्रुवंति । तत्र परस्परसंयोगजनितमारणशक्तिविशिष्टं तैलकर्पूरादिद्रव्यं विषं, सिंहव्याघ्रादिक्रूरमृगधारणार्थमभ्यंतरीकृतछागादिजीवं काष्ठादिरचितं तत्पादनिक्षेपमात्रकवाटसंपुटीकरणदक्षं सूत्रकीलितं यंत्रं, मत्स्यकच्छपमूषकादिग्रहणार्थमवष्टब्धं काष्ठादिमयं कूटं, तित्तिरलावकहरिणादिधारणार्थविरचित ग्रंथिविशेषकलितरज्जुमय जालं पंजरः, गजोष्ट्रादिधारणार्थमवष्टब्धो गर्तमुखकीलितग्रंथिविशिष्टवारी रज्जुरचनाविशेषो बंधः । आदिशब्देन पक्षिपक्षलगनार्थं दीर्घदंडाग्रप्रक्षिप्तपिप्पलनिर्यासादिचिक्कणबंधग्रहहरिणादिशृंगाग्रलग्नसूत्रग्रंथिविशेषादिश्च गृह्यते । उपदेशपूर्वकत्वे श्रुतज्ञानत्वप्रसंगात् । उपदेशक्रियां विना यदीदृशमूहापोहविकल्पात्मक हिंसानृतस्तेयाब्रह्मपरिग्रहकारण आर्तरौद्रध्यानकारण शल्यदंडगारवसंज्ञाद्यप्रशस्तपरिणामकरणं च इंद्रियमनोजनितविशेषग्रहणरूपं मिथ्याज्ञानं तन्मत्यज्ञानमिति निश्चेतव्यं ॥ ३०३ ॥

मं० प्र०—विषयंत्रकूटपंजरबंधादिषु जीवमारणबंधनहेतुषु या मतिः परोपदेशकरणेन विना प्रवर्तते तदिद मत्यज्ञानमित्यर्हदादयो ब्रुवंति । तत्र परस्परसंयोगजनितमारणशक्तिविशिष्टतैलकर्पूरादि द्रव्य विष । सिंहव्याघ्रादिधरणार्थमभ्यतरीकृतछागादिजीवं काष्ठादिरचितं, तत्पादनिक्षेपमात्रकवाटसंपुटीकरण दक्षसूत्रकीलितं यत्र । मत्स्यकच्छपमूषकादिग्रहणार्थमवष्टब्ध काष्ठादिमयं कूटं । तित्तिरलावकहरिणादिधरणार्थं विरचित ग्रंथिविशेषकलितरज्जुमय जाल पंजरः । उष्ट्रगजादिधरणार्थमवष्टब्धगर्तमुखकीलितग्रंथिविशिष्टवारी रज्जुरचनाविशेषो बंधः । आदिशब्देन पक्षिपक्षलगनार्थं दीर्घदंडाग्रप्राक्षितपिप्पलनिर्यासादिबंधग्रहहरिणादिशृंगलग्नसूत्रग्रंथिविशेषादिश्च गृह्यते । उपदेशपूर्वकत्वे श्रुताज्ञानत्वप्रसगात् । उपदेशक्रिया विना यदीदृशं ऊहापोहविकल्पात्मक हिंसानृतस्तेयाब्रह्मपरिग्रहकारणमार्तरौद्रध्यानकारण, शल्यदंडगारवसंज्ञाद्यप्रशस्तपरिणामकारणं च इंद्रियमनोजनितविशेषग्रहणरूप मिथ्याज्ञान तन्मत्यज्ञान निश्चेतव्य ॥ ३०३ ॥

स० चं०—परस्पर वस्तुका संयोगकरि मारनेकी शक्ति जिस विषैं होइ ऐसा तैल कर्पूरादिक वस्तु सो विष कहिए । बहुरि सिंह व्याघ्रादि क्रूर जीवनिके धारनके अर्थि जाकैं अभ्यंतर छेला आदि रखिए अर तिसविषैं तिस क्रूर जीवकौं पाव धरत ही किवाड़ जुडि जाय ऐसा सूत्रकी कलकरि संयुक्त होइ काष्ठादिक करि रच्या

हूवा हो है सो यंत्र कहिए। बहुरि माछला काछिवा मूसा कोल इत्यादिक जीवनिकै पकड़नेके निमित्त काष्ठादिकमय बने सो कूट कहिए। बहुरि तीतर लवा हिरण इत्यादि जीवनिके पकड़नेके निमित्त फंदकौं लीएं जो जेरिका जाल बनै सो पींजर कहिए। बहुरि हाथी ऊंट आदिके पकड़ने निमित्त खाडाके ऊपरि गांठिका विशेष लीएं जेवराकी रचनारूप विशेष सो बंध कहिए। आदि शब्दकरि पंखीनिका पांख लगने निमित्त ऊंचे दंडके ऊपरि चिगटास लगावना सो बंध वा हरिणादिकका सींगकै अग्रभाग सूत्रकी गांठि देना इत्यादि विशेष जानने ऐसें जीवनिके मारणे बांधनके कारणरूप कार्यनिविषैं अन्यके उपदेश विना ही स्वयमेव बुद्धि प्रवर्तै सो कुमतिज्ञान कहिए। उपदेशतैं प्रवर्तै तो कुश्रुतज्ञान हो जाइ। तातैं विना ही उपदेश ऐसा विचाररूप विकल्प लीएं हिंसा अनृत स्तेय अब्रह्म परिग्रहका कारण आर्त रौद्रध्यानकौं कारण शल्य दंड गारव आदि अशुभोपयोगोंका कारण जो मन इंद्रियकरि विशेष ग्रहणरूप मिथ्याज्ञान प्रवर्तै सो मति अज्ञान सर्वज्ञदेव कहैं हैं ॥ ३०३ ॥

**आभीयमासुरक्खं भारहरामायणादिउवएसा ।**
**तुच्छा असाहणीया सुयअण्णाणंतिणं बेंति ॥ ३०४ ॥**

आभीतमासुरक्षं भारतरामायणाद्युपदेशाः ।
तुच्छाः असाधनीयाः श्रुताज्ञानमिति इदं ब्रुवंति ॥ ३०४ ॥

जी० प्र०—तुच्छाः परमार्थशून्याः, असाधनीयाः अत एव सत्पुरुषाणामनादरणीयाः परमार्थशून्यत्वात् आभीतासुरक्षभारतरामायणाद्युपदेशाः तत्प्रबंधाः तेषां श्रवणादुत्पन्नं यज्ज्ञानं तदिदं श्रुताज्ञानमिति ब्रुवंत्याचार्याः। आसमंताद्भीताः आभीता चोराः तच्छास्त्रमप्याभीतं। असवः प्राणाः तेषां रक्षा येभ्यः ते असुरक्षाः तलवराः तेषां शास्त्रमासुरक्षं। कौरवपांडवीयपंचभर्तृकैकभार्यावृत्तांतयुद्धव्यतिकरादिचर्चाव्याकुलं भारतं, सीताहरणरामरावणीयजातिवानरराक्षसयुद्धव्यतिकरादिस्वेच्छाकल्पनारचितं रामायणं। आदिशब्दाद्यन्मिथ्यादर्शनदूषितसर्वथैकांतवादिस्वेच्छाकल्पितकथाप्रबंधभुवनकोशहिंसायागादिगृहस्थकर्मत्रिदंडजटाधारादितपःकर्मषोडशपदार्थषट्पदार्थभावनाविधिनियोगभूतचतुष्ट-

यपंचविंशतितत्त्वब्रह्माद्वैतचतुरार्यसत्यविज्ञानाद्वैतसर्वशून्यत्वादिप्रतिपादकागमाभासजनितं श्रुतज्ञानाभासं तत्तत्सर्वं श्रुताज्ञानमिति निश्चेतव्यं, दृष्टेष्टविरुद्धार्थविषयत्वात् ॥ ३०४ ॥

मं० प्र०—तुच्छाः–परमार्थशून्याः, असाधनीयाः–अत एव सतामनादरणीयाः आभीतासुरक्षभारतरामायणाद्युपदेशास्तत्प्रबंधाः तेषां श्रवणादुत्पन्नं यज्ज्ञानं तदिदं श्रुताज्ञानमिति ब्रुवंत्याचार्याः । आ- समंताद् भीता आभीता --चोराः, तच्छास्त्रमप्याभीतं, असुरक्षाः–चोराद्यपायेभ्यो जीवरक्षाः–तलवरा तेषां शास्त्रमासुरक्षं, कौरवपाडवीयपंचभर्तृकैकभार्यावृत्तयुद्धव्यतिकरादिचर्चान्याकुलं भारतं, सीताहरणरामरावणीयजातिवानरराक्षसयुद्धव्यतिकरादिस्वेच्छाकल्पनारचितं रामायणं । आदिशब्देन यदन्मिथ्यादर्शनदूषितसर्वथैकांतवादिस्वेच्छाकल्पितकथाप्रबंधेषु नकोशहिंसायागादिगृहस्थकर्मत्रिदंडजटाधारणादितपस्कर्मषोडशपदार्थषट्पदार्थभावनाविधिनियोगभूतचतुष्टयपंचविंशतितत्त्वब्रह्माद्वैतचतुरार्यसत्याविज्ञानाद्वैतसर्वशून्यत्वादिप्रतिपादकागमाभासजनितं श्रुतज्ञानाभासं तत्तत्सर्वं श्रुताज्ञानमिति निश्चेतव्यं दृष्टेष्टविरुद्धार्थविषयत्वात् ॥ ३०४ ॥

स० चं०—आभीताः कहिए समस्तपनैं भयवान जे चौरादिक तिनिका शास्त्र सो आभीत हैं । बहुरि असु जे प्राण तिनिकी चौरादिकतैं रक्षा जिनितैं होइ ऐसे कोटपाल राजादिक तिनिका जो शास्त्र सो असुरक्ष है । बहुरि कौरव पांडवोंका युद्धादिक वा एक भार्याके पंचभर्ता इत्यादिक विपरीत कथन जिसविषैं पाइए ऐसा शास्त्र सो भारत है । बहुरि रामचंद्रकैं वानरोंकी सेना रावण राक्षस है तिनिका परस्पर युद्ध होना इत्यादिक अपनी इच्छाकरि रच्या हूवा शास्त्र सो रामायण है आदि शब्दतैं जो एकांत वादकरि दूषित अपनी इच्छाके अनुसारि रच्या हूवा शास्त्र जिनिविषैं हिंसारूप यज्ञादिक गृहस्थका कर्म है जटा धारण त्रिदंडधारणादिरूप तपस्वीका कर्म है सोलह पदार्थ हैं वा छह पदार्थ हैं वा भावनाविधि नियोग भूत ए च्यारि हैं वा पचीस तत्त्व है वा अद्वैत ब्रह्मका स्वरूप है वा सर्व शून्य है इत्यादि वर्णन पाइए है ते शास्त्र 'तुच्छाः' कहिए परमार्थतैं रहित हैं बहुरि 'असाधनीयाः' कहिए प्रमाण करने योग्य नाहीं याहीतैं संत पुरुषनिकौं आदरने योग्य नाहीं ऐसैं शास्त्राभ्यासजनित भया जो श्रुतज्ञानकीसी आभासा लीएं कुज्ञान सो श्रुत अज्ञान कहिए । जातैं प्रमाणीक इष्ट अर्थतैं विपरीत अर्थ याका विषय हो है । इहां मति श्रुत अज्ञानका वर्णन उपदेश लीएं किया है अर सामान्यपनैं तौ स्वपर भेद विज्ञानरहित इंद्रिय मन जनित जानना सो सर्व कुमति कुश्रुत है ॥ ३०४ ॥

**विवरीयमोहिणाणं खओवसमियं च कम्मबीजं च ।**
**वेभंगोत्ति पउच्चइ समत्तणाणीण समयम्हि ॥ ३०५ ॥**

विपरीतमवधिज्ञानं क्षायोपशामिक च कर्मबीजं च ।
विभंग इति प्रोच्यते समाप्तज्ञानिनां समये ॥ ३०५ ॥

जी० प्र०—मिथ्यादर्शनकलंकितस्य जीवस्य अवधिज्ञानावरणीयवीर्यांतरायक्षयोपशमजनितं द्रव्यक्षेत्रकालभावसीमाश्रितं रूपिद्रव्यविषयं विपरीतं आप्तागमपदार्थेषु विपरीतग्राहकं तिर्यग्मनुष्यगत्योः तीव्रकायक्लेशद्रव्यसंयमरूपगुणप्रत्यय, चशब्दाद्देवनारकगत्योर्भवप्रत्ययं च मिथ्यात्वादिकर्मबंधबीजं, चशब्दात् कदाचिन्नारकादिगतौ पूर्वभवदुराचारसंचितदुष्कर्मफलतीव्रदुःखवेदनाभिभवजनितसम्यग्दर्शनज्ञानरूपधर्मबीजं वा अवधिज्ञानं विभंग इति समाप्तज्ञानिनां केवलज्ञानिना समये स्याद्वादशास्त्रे प्रोच्यते कथ्यते। नारकाणां विभंगज्ञानेन वेदनाभिभवतत्कारणदर्शनस्मरणानुसंधानप्रत्ययबलात् सम्यग्दर्शनोत्पत्तिप्रतीते.। विशिष्टस्य अवधिज्ञानस्य भंगः—विपर्ययः विभंग इति निरुक्तिसिद्धार्थस्यैव अनेन प्ररूपितत्वात् ॥ ३०५ ॥ अथ नवभिर्गाथाभि. स्वरूपोत्पत्तिकारणभेदविषयान् आश्रित्य मतिज्ञान प्ररूपयति[१]—

मं० प्र०—मिथ्यादर्शनकलकितस्य जीवस्य अवधिज्ञानावरणवीर्यांतरायक्षयोपशमादुत्पन्नं द्रव्यक्षेत्रकालभावसीमाश्रित रूपिद्रव्यविषयं विपरीतं आप्तागमपदार्थेषु विपरीतग्राहकं तिर्यग्मनुष्यगत्योः तीव्रकायक्लेशद्रव्यसंयमरूपगुणप्रत्ययं, चशब्दाद्देवनारकगत्योर्भवप्रत्ययं च मिथ्यात्वादिकर्मबंधबीज, चशब्दात् कचित् नारकादौ पूर्वभवदुराचारसंचितदुष्कर्मफलतीव्रदुःखवेदनाभिभवजनितसम्यग्दर्शनज्ञानरूपधर्मबीजं चावधिज्ञानं विभंगं इति समाप्तज्ञानिनां—केवलज्ञानिनां समये प्रोच्यते नारकाणा विभंगज्ञानेन वेदनाभिभवतत्कारणदर्शनस्मरणानुसधानप्रत्ययबलात्सम्यग्दर्शनोत्पत्तिप्रतीतेः। विशिष्टस्य अवधिज्ञानस्य भगः—विपर्ययः, विभग इति निरुक्तिसिद्धार्थस्यैव अनेन प्ररूपितत्वात् ॥ ३०५ ॥ अथ नवभिर्गाथाभिः स्वरूपोत्पत्तिकारणभेदविषयानाश्रित्य मतिज्ञानं प्ररूपयति—

स० चं०—मिथ्यादृष्टी जीवनिकैं अवधिज्ञानावरण वीर्यांतरायके क्षयोपशमतैं उत्पन्न भया ऐसा द्रव्यक्षेत्र काल भावकी मर्यादा लीएं रूपी पदार्थ है विषय जाका ऐसा आप्त आगम पदार्थनिविषैं विपरीतका ग्राहक सो विभंग नाम पावै है। वि कहिए विशिष्ट जो अवधिज्ञान ताका भंग कहिए विपरीत भाव सो वि-

[१] 'अथ स्वरूपोत्पत्तिकारणभेदविषयान् आश्रित्य गाथानवकेन मतिज्ञानमाह।' इति ब पुस्तके पाठ।

भंग कहिए सो तिर्यंच मनुष्य गतिविषैं तौ तीव्र काय क्लेशरूप द्रव्य संयमादिककरि उपजे है सो गुण प्रत्यय हो है। बहुरि देव नरकगतिविषैं भव प्रत्यय हो है सो सब ही विभंगज्ञान मिथ्यात्वादि कर्मबंधका बीज कहिए कारण है चकारतैं कदाचित् नारकादिक गतिविषैं पूर्वभवसंबंधी दुराचारके दुःख फलकौं जानि कहीं सम्यग्दर्शन ज्ञानरूप धर्मका भी बीज हो है ऐसा विभंगज्ञान समासज्ञानी जो संपूर्ण ज्ञानी केवली तिनिके मतविषैं कह्या है ॥ ३०५ ॥ आगैं स्वरूप वा उपजनेका कारण वा भेद वा विषय इनिका आश्रयकरि मतिज्ञानका निरूपण नव गाथानिकरि कहैं हैं—

**अहिमुहणियमियबोहणमाभिणिबोहियमणिंदिइंदियजं ।**
**अवगहईहावायाधारणगा होंति पत्तेयं ॥ ३०६ ॥**

अभिमुखनियमितबोधनमाभिनिबोधिकमनिंद्रियेंद्रियजं ।
अवग्रहेहावायधारणका भवंति प्रत्येकं ॥ ३०६ ॥

जी० प्र०—स्थूलवर्तमानयोग्यदेशावस्थितोऽर्थः अभिमुखः, अस्येंद्रियस्य अयमेवार्थः इत्यवधारितो नियमितः। अभिमुखश्चासौ नियमितश्चासौ अभिमुखनियमितः। तस्यार्थस्य बोधनं ज्ञानं आभिनिबोधिकं मतिज्ञानमित्यर्थः। अभिनिबोध एव आभिनिबोधिकमिति स्वार्थिकेन ठण्प्रत्ययेन सिद्धं भवति। स्पर्शनादींद्रियाणां स्थूलादिष्वेव स्पर्शादिषु स्वार्थेषु ज्ञानजननशक्तिसंभवात्। सूक्ष्मांतरितदूरार्थेषु परमाणुशंखचक्रवर्तिमेर्वादिषु तेषां ज्ञानजननशक्तिर्न संभवतीत्यर्थः। अनेन मतिज्ञानस्य स्वरूपमुक्तं। कथंभूतं तत्? अनिंद्रियेंद्रियजं—अनिंद्रियं मनः, इंद्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि। तेभ्यः जातमुत्पन्नं अनिंद्रियेंद्रियजं, अनेन इंद्रियमनसोर्मतिज्ञानोत्पत्तिकारणत्वं दर्शितं। एवं च कारणभेदात्कार्यभेद इति मतिज्ञानं षट्प्रकारमुक्तं। पुनः प्रत्येकमेकैकस्य मतिज्ञानस्य अवग्रहः ईहा अवायः धारणा चेति चत्वारो भेदा भवंति। तद्यथा—मानसोऽवग्रहः मानसीहा मानसोवायः मानसी धारणा इति चत्वारः। स्पर्शनजोऽवग्रहः, स्पर्शनजा ईहा स्पर्शनजोवायः स्पर्शनजा धारणा। रसनजोऽवग्रहः रसनजा ईहा रसनजोऽवायः रसनजा धारणा। घ्राणजोऽवग्रहः घ्राणजा ईहा घ्राणजोवायः घ्राणजा धारणा ४। चाक्षुषोऽवग्रहः चाक्षुषीहा चाक्षुषोवायः चाक्षुषी धारणा ४। श्रोत्रजोऽवग्रहः श्रोत्रजा ईहा श्रोत्रजोऽवायः श्रोत्रजा धारणा। एवं मतिज्ञानं चतुर्विंशतिविकल्पं भवति अवग्रहादीनां लक्षणं उत्तरत्र ग्रंथकारः स्वयमेव वक्ष्यति॥ ३०६ ॥

मं० प्र०—स्थूलवर्तमानयोग्यदेशावस्थितोऽर्थः अभिमुखः । अस्येंद्रियस्यायमर्थ इत्यवधारितो नियमितः । अभिमुखश्चासौ नियमितश्चासौ अभिमुखनियमितः । तस्यार्थस्य बोधनं—ज्ञानं, आभिनिबोधिकं मतिज्ञानमित्यर्थः । अभिनिबोध एव आभिनिबोधिकमिति स्वार्थिकेन ठणप्रत्ययेन सिद्धं । स्पर्शनादींद्रियाणां स्थूलादिष्वेव स्पर्शादिषु स्वार्थेषु ज्ञानजननशक्तिसंभवात् । सूक्ष्मांतरितदूरार्थेषु परमाणुशंखचक्रवर्तिमेर्वादिषु तेषां ज्ञानजननशक्त्यसंभवात् । अनेन मतिज्ञानस्य स्वरूपमुक्तं । कथंभूतं तत् ? अनिंद्रियेंद्रियजं—अनिंद्रियं—मनः, इंद्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि तेभ्यो जातं—उत्पन्नं । अनेन इंद्रियमनसोर्मतिज्ञानोत्पत्तिकारणत्वं दर्शितं । एवं च कारणभेदात्कार्यभेद इति मतिज्ञानं षट्प्रकारमुक्तं । पुनः प्रत्येकमेकैकस्य मतिज्ञानस्य अवग्रहः, ईहा अवायः धारणा चेति चत्वारो भेदा भवंति । तद्यथा—मानसोऽवग्रहः मानसीहा मानसोऽवायः मानसी धारणा । ४ । स्पर्शनजोवग्रहः स्पर्शनजा ईहा स्पर्शनजोऽवायः स्पर्शनजा धारणा । ४ । रसनजोऽवग्रहः रसनजा ईहा रसनजोऽवायः रसनजा धारणा । ४ । घ्राणजोऽवग्रहः घ्राणजा ईहा घ्राणजोऽवायः घ्राणजा धारणा । ४ । चाक्षुषोऽवग्रहः चाक्षुषी ईहा चाक्षुषोऽवायः चाक्षुषी धारणा । ४ । श्रोत्रजोऽवग्रहः श्रोत्रजा ईहा श्रोत्रजोऽवायः श्रोत्रजा धारणा ।४। एवं मतिज्ञानं चतुर्विंशतिविकल्पं भवति अवग्रहादीनां लक्षणमुत्तरत्र ग्रंथकारः स्वयमेव वक्ष्यति ॥ ३०६ ॥

स० चं०—स्थूलवर्तमान जिस क्षेत्रविषैं इंद्रियमनकी प्रवृत्ति होइ तहां तिष्ठता ऐसा जो इंद्रिय मनके ग्रहण योग्य पदार्थ सो अभिमुख कहिए बहुरि इस इंद्रियका यहु ही विषय है ऐसा नियमरूप जो पदार्थ सो नियमित कहिए ऐसैं पदार्थका जो जानना सो अभिनिबोध कहिए। अभि कहिए अभिमुख अर 'नि' कहिए नियमित जो अर्थ ताका निबोध कहिए जानना ऐसा आभिनिबोध सोई आभिनिबोधिक है इहां स्वार्थविषैं ठण् प्रत्यय आया है सो यह आभिनिबोधिक मतिज्ञानका नाम जानना। इंद्रियनिकैं स्थूल रूप स्पर्शादिक अपने विषयके ज्ञान उपजावनेकी शक्ति है बहुरि सूक्ष्म अंतरित दूर पदार्थके ज्ञान उपजावनेकी शक्ति नाहीं है। तहां सूक्ष्म पदार्थ तौ परमाणु आदिक, अंतरित पदार्थ अतीत अनागत काल संबंधी, दूर पदार्थ मेरु गिरि स्वर्ग नरक पटल आदि दूर क्षेत्रवर्ती जानने ऐसैं मतिज्ञानका स्वरूप कह्या है। सो मतिज्ञान कैसा है ? अनिंद्रिय जो मन अर इंद्रिय स्पर्शन रसन घ्राण चक्षु श्रोत्र इनिकरि उपजै है। मतिज्ञान उपजनेके कारण इंद्रिय अरु मन हैं। कारणके भेदतैं कार्यविषैं भी भेद कहिए तातैं मतिज्ञान छह प्रकार है तहां एक एकके च्यारि च्यारि भेद हैं अवग्रह ईहा अवाय धारणा। सो मनतैं वा स्पर्शनतैं वा रसनातैं वा घ्राणतैं वा चक्षुतैं वा श्रोत्रतैं ए अवग्रहादि च्यारि

च्यारि उत्पन्न होंइ तातैं चौबीस भेद भए। अवग्रह ईहा अवाय धारणाका लक्षण शास्त्र कर्ता आगैं स्वयमेव कहैगा।

**वेंजणअत्थअवग्गहभेदा हु हवंति पत्तपत्तत्थे।**
**कमसो ते वावरिदा पढमं ण हि चक्खुमणसाणं ॥३०७॥**

व्यंजनार्थावग्रहभेदौ हि भवतः प्राप्ताप्राप्तार्थे।
क्रमशस्तौ व्यापृतौ प्रथमो नहि चक्षुर्मनसोः ॥ ३०७ ॥

जी० प्र०—मतिज्ञानविषयो द्विविधः व्यंजनं अर्थश्चेति। तत्र इद्रियैः प्राप्तो विषयः व्यजनं तैरप्राप्तः अर्थः। तयोः प्राप्ताप्राप्तयोरर्थयोः क्रमशः यथासख्य व्यंजनार्थावग्रहभेदौ तौ व्यापृतौ प्रवृत्तौ भवतः। इंद्रियैः प्राप्तार्थविशेषग्रहणं व्यंजनावग्रहः। तैरप्राप्तार्थविशेषग्रहणं अर्थावग्रह इत्यर्थः। व्यंजनं—अव्यक्तं शब्दादिजातं इति तत्त्वार्थविवरणेषु प्रोक्तं कथमनेन व्याख्यानेन सह संगतमिति चेदुच्यते विगतं—अंजनं—अभिव्यक्तिर्यस्य तद्व्यजनं। व्यज्यते म्रक्ष्यते प्राप्यते इति व्यंजनं अंजु गतिव्यक्तिम्रक्षणेष्विति व्यक्तिम्रक्षणार्थयोर्ग्रहणात्। शब्दाद्यर्थः श्रोत्रादींद्रियेण प्राप्तोऽपि यावन्नाभिव्यक्तस्तावद् व्यंजनमित्युच्यते एकवारजलकणसिक्तनूतनशरावबत्। पुनरभिव्यक्तौ सत्यां स एवार्थो भवति। यथा पुनः पुनर्जलकणसिच्यमाननूतनशरावः अभिव्यक्तसेको भवति। अतः कारणात् चक्षुर्मनसोऽप्राप्ते विषये प्रथमो व्यंजनावग्रहो नास्ति। चक्षुर्मनसी स्वविषयमर्थं प्राप्यैव तत्र ज्ञान जनयतः, इति नैयायिकादीनां मतं स्याद्वादतर्कग्रंथेषु बहुधा निराकृतमित्यत्राहेतुवादे आगमांशे नोपक्रम्यते। व्यजनरूपे विषये स्पर्शनरसनघ्राणश्रोत्रैः चतुर्भिरिंद्रियैः अवग्रह एक एवोत्पद्यते नेहादयः। ईहादीनां ज्ञान नां देशसर्वाभिव्यक्तौ सत्यामेव उत्पत्तिसंभवात्। तदा तद्विषयस्य अव्यक्तरूपव्यंजनत्वाभावात्। इति व्यजनावग्रहाश्चत्वार एव ॥ ३०७ ॥

मं० प्र०—मतिज्ञानविषयो द्विविध—व्यंजनमर्थश्चेति। तत्र इंद्रियैः प्राप्तो विषयो व्यजनं। तैरप्राप्तोऽर्थः। तयोः प्राप्ताप्राप्तयोरर्थयोः क्रमशः—यथासंख्यं व्यंजनार्थावग्रहभेदौ तौ व्यापृतौ प्रवृत्तौ भवतः। इंद्रियैः प्राप्तार्थविशेषग्रहणं व्यंजनावग्रहः। तैरप्राप्तार्थविशेषग्रहणमर्थावग्रहः इत्यर्थः। व्यंजनमव्यक्त शब्दादिजात इति तत्त्वार्थविवरणेषु प्रोक्तं कथमनेन व्याख्यानेन सह सगतमिति चेदुच्यते—विगतमंजनं—अभिव्यक्तिर्यस्य तद् व्यंजनं। व्यज्यते—म्रक्ष्यते प्राप्यते इति व्यंजनं इति च व्यक्तिम्रक्षणयोर्ग्रहणात्। शब्दादिकं श्रोत्रादिना इंद्रियेण प्राप्तमपि यावत् नाभिव्यक्तं तावदेव व्यजनमित्युच्यते एकवारजलकणसिक्तनूतनशरावबत्। पुनरभिव्यक्तौ सत्या तदेवार्थो भवति यथा पुनः पुनर्जलकणसिच्यमाननूतनशरावोऽभिव्यक्तसेको भवति अत कारणात् चक्षुर्मनसोरप्राप्ते विषये प्रथमो

व्यजनावग्रहो नास्ति । चक्षुर्मनश्च स्वविषयमर्थं प्राप्यैव तत्र ज्ञानं जनयत इति नैयायिकादीनां मतं स्याद्वादतर्कशास्त्रेषु बहुधा निराकृतमित्यत्राहेतुवादे आगमाश्रे न प्रक्रम्यते । व्यंजने विषये स्पर्शनरसनघ्राणचक्षुःश्रोत्रैश्चतुर्भिरिंद्रियैरवग्रह एक एवोत्पद्यते नेहादयः, ईहादीनां ज्ञानानां देशसर्वाभिव्यक्तौ सत्यामेवोत्पत्तिसंभवात् तत्काले तद्विषयस्य अव्यक्तरूपव्यंजनत्वाभावात् इति व्यजनावग्रहाश्चत्वार एव ॥ २०७ ॥

स० चं०—मतिज्ञानका विषय दोय प्रकार एक व्यंजन एक अर्थ। तहां जो विषय इंद्रियनिकरि प्राप्त होइ स्पर्शित होइ सो व्यंजन कहिए । जो प्राप्त न होइ सो अर्थ कहिए। तिनिका विशेष ग्रहणरूप व्यंजनावग्रह अर अर्थावग्रह भेद प्रवर्तै है। इहां प्रश्न–जो तत्त्वार्थ सूत्रकी टीकाविषैं तौ अर्थ ऐसा कीया है जो व्यंजन नाम अव्यक्त शब्दादिकका है इहां प्राप्त अर्थकौं व्यंजन कह्या सो कैसैं है? ताका समाधान–व्यंजन शब्दके दोऊ अर्थ हो हैं 'विगतं अंजनं व्यंजनं' दूरि भया है अंजन कहिए व्यक्तभाव जाकैं सो व्यंजन कहिए। सो तत्त्वार्थ सूत्रकी टीकाविषैं तौ इस अर्थका मुख्य ग्रहण कीया है 'अर व्यज्यते म्रक्ष्यते प्राप्यते इति व्यंजनं' जो प्राप्त होइ ताकौं व्यंजन कहिए सो इहां यहु अर्थ मुख्य ग्रहण कीया है जातैं अंजु धातु गति व्यक्ति म्रक्षण अर्थविषैं प्रवर्तै है तातैं व्यक्ति अर्थका अर म्रक्षण अर्थका ग्रहण करनेतैं कर्णादिक इंद्रियनिकरि शब्दादिक अर्थ प्राप्त हूवे भी यावत् व्यक्त न होइ तावत् व्यंजनावग्रह है व्यक्त भए अर्थावग्रह हो है जैसैं नवा माटीका शरावा जलकी बूंदनिकरि सींचिए तहां एक दोय बार आदि जलकी बूंद परैं व्यक्त न होइ शोषित होइ जाय बहुतवार जलकी बूंद परैं व्यक्त होइ तैसैं कर्णादिककरि प्राप्त हूवा जो शब्दादिक तिनिका यावत् व्यक्तरूप ज्ञान न होइ जो मैंने शब्द सुन्या ऐसा व्यक्त ज्ञान न होइ तावत् व्यंजनावग्रह कहिए। बहुरि बहुत समय पर्यंत इंद्रिय अर विषयका संयोग रहैं व्यक्तरूपज्ञान भएं अर्थावग्रह कहिए बहुरि नेत्र इंद्रिय अर मन ए दूरहीतैं पदार्थकौं जानैं हैं तातैं इनि दोऊनिकैं व्यंजनावग्रह नाहीं अर्थावग्रह ही है। इहां प्रश्न -जैसैं कर्णादिककरि दूरितैं शब्दादिक जानिए है तैसैं ही नेत्रकरि वर्ण जानिए है, वाकौं प्राप्त कह्या अर याकौं अप्राप्त कह्या सो कैसैं हैं? ताका समाधान-दूरि जो शब्द हो है ताकौं यहु नाहीं जानैं है जो दूरि भया शब्द ताके निमित्ततैं आकाशविषैं जे अनेक स्कंध तिष्ठै हैं ते शब्दरूप परिणए है तहां कर्ण

इंद्रियके समीपवर्ती भी स्कंध शब्दरूप परिणए हैं सो तिनिका कर्ण इंद्रियकरि स्पर्श भया है तब शब्दका ज्ञान हो है। ऐसैं ही दूरि तिष्ठता सुगंध दुर्गंध वस्तुके निमित्ततैं पुद्गल स्कंध तत्काल तद्रूप परिणवे हैं तहां जो नासिका इंद्रियके समीपवर्ती स्कंध परिणए हैं तिनिके स्पर्शतैं गंधका ज्ञान हो है ऐसैं ही अग्न्यादिकके निमित्ततैं पुद्गल स्कंध उष्णादिरूप परिणवे हैं तहां जो स्पर्शन इंद्रियके समीपवर्ती स्कंध परिणए हैं तिनिके स्पर्शतैं स्पर्श ज्ञान हो है ऐसैं ही आम्लादि वस्तुके निमित्ततैं स्कंध तद्रूप परिणवे है तहां रसना इंद्रियके समीपवर्ती जो स्कंध परिणए तिनिके संयोगतैं रसका ज्ञान हो है। बहुरि यहु श्रुतज्ञानके बलकरि जाके निमित्ततैं शब्द आदि भए ताकौं जानि ऐसा मानैं है कि मैं दूर वर्ती वस्तुकौं जान्या ऐसैं दूरवर्ती वस्तुके जाननेविषैं भी प्राप्त होना सिद्ध भया अर समीपवर्तीकौं तो प्राप्त होकर जानैं ही है। इहां शब्दादिक परमाणु अर कर्णादिक इंद्रिय परस्पर प्राप्त होंइ अर यावत् जीवकैं व्यक्त ज्ञान न होइ तावत् व्यंजनावग्रह है व्यक्तज्ञान भएं अर्थावग्रह हो है। बहुरि मन अर नेत्र दूरिहीतैं जाने हैं ऐसा नाहीं जो शब्दादिककी ज्यों जानैं तातैं पदार्थ तो दूरि तिष्ठे है ही जब इननैं ग्रहे तब व्यक्त ही ग्रहे तातैं व्यंजनावग्रह इनि दोऊनिकैं नाहीं अर्थावग्रह ही है। उक्तं च–

पुट्ठं सुणेदि सद्दं अपुट्ठं पुण पस्सदे रूवं।
गंधं रसं च फासं बद्धं पुट्ठं वियाणादि ॥ १ ॥

बहुरि नैयायिकमतवाले ऐसा कहैं हैं--मन अर नेत्र भी प्राप्त होइकरि ही वस्तुकौं जाने हैं ताका निराकरण जैन न्यायके शास्त्रनिविषैं अनेक प्रकार कीया है। बहुरि व्यंजन जो अव्यक्त शब्दादिक तिनिविषैं स्पर्शन रसन घ्राण श्रोत्र इंद्रियनिकरि केवल अवग्रह हो है ईहादिक न हो हैं जातैं ईहादिक तो एकदेश वा सर्वदेश व्यक्त भएं ही हो हैं। व्यंजन नाम अव्यक्तका है तातैं च्यारि इंद्रियनिकरि व्यंजनावग्रहके च्यारि भेद हैं ॥ ३०७ ॥

**विसयाणं विसईणं संजोगाणंतरं हवे णियमा।**

# अवगहणाणं गहिदे विसेसकंखा हवे ईहा ॥ ३०८ ॥

विषयाणां विषयिणां संयोगानंतरं भवेन्नियमात्।
अवग्रहज्ञानं गृहीते विशेषाकांक्षा भवेदीहा ॥ ३०८ ॥

जी० प्र०—विषयाणां–अर्थानां, विषयिणां इंद्रियाणां च संयोगः–योग्यदेशावस्थानरूपसंबंध तस्मिन् जाते सति अनंतरं-तदनंतरमेव वस्तुसत्तामात्रलक्षणसामान्यस्य निर्विकल्पग्रहणमिदमिति प्रकाशरूपं दर्शनं नियमादुत्पद्यते-नियमाज्जायते। अनंतरं तदनंतरं दृष्टस्यार्थस्य वर्णसंस्थानादिविशेषग्रहणरूपं अवग्रहाख्यं आद्य ज्ञानं भवेत् उत्पद्यते। 'अक्षार्थयोगे सत्तालोकोर्थाकारविकल्पधी. अवग्रह' इति श्रीमद्भट्टाकलंकपादैः, 'दर्शनपूर्वकं ज्ञानं छद्मस्थानां' इति श्रीनेमिचंद्रसैद्धांतचक्रवर्तिभिरपि प्रोक्तत्वात्, इंद्रियार्थसंबंधानंतरं दर्शनमुत्पद्यते इत्येतस्मिन् गाथासूत्रे अनुक्तमपि पूर्वाचार्यवचनानुसारेण व्याख्यानं ग्राह्यं। गृहीते–अवग्रहेण इदं श्वेतमिति ज्ञाते अर्थविशेषस्य बलाकारूपस्य पताकारूपस्य वा यथावस्थितस्य आकांक्षा बलाकया भवितव्यमिति भवितव्यताप्रत्ययरूपा बलाकायामेव संजायमाना ईहाख्यं द्वितीयं ज्ञानं भवेत्। अथवा पताकारूपं विषयमालंब्य उत्पद्यमाना अनया पताकया भवितव्यमिति भवितव्यताप्रत्ययरूपा पताकायामेव संजायमाना आकांक्षा ईहेति द्वितीयं ज्ञानं भवेत्। एवं इंद्रियांतरविषयेषु मनोविषये च अवग्रहगृहीते यथावस्थितस्य विशेषस्य आकांक्षारूपा ईहेति निश्चेतव्यं। मतिज्ञानावरणक्षयोपशमस्य तारतम्यभेदेन अवग्रहेहाज्ञानयोर्भेदसंभवात्। अस्मिन् सम्यग्ज्ञानप्रकरणे बलाका वा पताका इति संशयस्य, बलाकायां पताकया भवितव्यमिति विपर्ययस्य च मिथ्याज्ञानस्यानवतारात् ॥ ३०८ ॥

मं० प्र०—विषयाणा,अर्थाना, विषयिणां इंद्रियाणां च संयोगः-योग्यदेशावस्थानरूपः संबंधः। तस्मिन् सति तदनंतरमेव वस्तुसत्तामात्रलक्षणसामान्यस्य निर्विकल्पग्रहणमिदमिति प्रकाशरूप दर्शनं नियमादुत्पद्यते, तदनंतरं दृष्टस्यार्थस्य वर्णसंस्थानादिविशेषग्रहणरूपमवग्रहाख्यमाद्यं ज्ञानं भवेत्–उत्पद्यते। अक्षार्थयोगे सत्तालोकोऽर्थाकारविकल्पधीः अवग्रह इति श्रीमद्भट्टाकलंकपादैः 'दर्शनपूर्वकं ज्ञानं छद्मस्थानामिति' श्रीनेमिचंद्रसैद्धांतचक्रवर्तिभिरपि प्रोक्तत्वात् इंद्रियार्थसंबंधानंतर दर्शनमुत्पद्यते इत्येतस्मिन् गाथासूत्रे अनुक्तमपि पूर्वाचार्यवचनानुसारेण व्याख्यातं ग्राह्यं। गृहीते अवग्रहेण इदं श्वेतमिति ज्ञाते अर्थे विशेषस्य बलाकारूपस्य पताकारूपस्य वा यथावस्थितस्य आकांक्षा बलाकया भवितव्यमिति भवितव्यताप्रत्ययरूपा बलाकायामेव संजायमाना ईहाख्यं द्वितीयं ज्ञानं भवेत्। अथवा पताकारूपविषयमालंब्य उत्पद्यमाना अनया पताकया भवितव्यमिति भवितव्यताप्रत्ययरूपा आकांक्षा ईहानाम द्वितीयं ज्ञानं भवेत्। एवमिंद्रियांतरविषयेषु मनोविषये च अवग्रहगृहीते यथावस्थितस्य विशेषस्य आकांक्षारूपा ईहेति निश्चेतव्यं। मतिज्ञानावरणक्षयोपशमस्य तारतम्यभेदेन अवग्रहेहाज्ञानयोर्भेदसंभवात्, अस्मिन् सम्यग्ज्ञानप्रकरणे बलाका वा पताका वा इति संशयस्य बलाकायां पताकया भवितव्यमिति विपर्ययस्य च मिथ्याज्ञानस्यानवतारात् ॥३०८॥

स० चं०----विषय जो शब्दादिक पदार्थ अर विषयी जे कर्णादिक इंद्रियां इनिका जो संयोग कहिये योग्य क्षेत्रविषैं तिष्ठनेरूप संबंध ताकौं होतैं संतैं ताके अनंतर ही वस्तुका सत्तामात्र निर्विकल्प ग्रहण जो यहु है इतना प्रकाशरूप सो दर्शन नियमकरि हो है। ताके अनंतर पीछै ही देख्या जो पदार्थ ताके वर्ण संस्थानादि विशेष ग्रहणरूप अवग्रह नामा ज्ञान हो है। इहां प्रश्न--जो गाथाविषैं तौ पहिलैं दर्शन न कह्या तुम कैसैं कहो हो? ताका समाधान--जो अन्य ग्रंथनिमें कह्या है--'अक्षार्थयोगे सत्तालोकोर्थाकारविकल्पधीरवग्रहः' इंद्रिय अर विषयके संयोग होतैं प्रथम सत्तावलोकनमात्र दर्शन हो है पीछैं पदार्थका आकार विशेष जाननेरूप अवग्रह हो है ऐसा अकलंकाचार्यकरि कह्या है बहुरि "दंसणपुव्वं णाणं छद्मत्थाणं हवेदि णियमेण' छद्मस्थ जीवनिकै नियमतैं दर्शन पूर्वक ही ज्ञान हो है ऐसा नेमिचंद्राचार्यने द्रव्यसहनामा ग्रंथमें कह्या है। बहुरि तत्त्वार्थ सूत्रकी टीकावालेनैं ऐसा कह्या है तातैं इहां ज्ञानाधिकारविषैं दर्शनका कथन न कीया तौ भी अन्यग्रंथनितैं ऐसैं ही जानना। सो अवग्रहकरि तौ इतना ग्रहण भया जो यहु श्वेत वस्तु है बहुरि श्वेत तौ बुगलनिकी पंक्ति भी हो है अर ध्वजा भी हो है परि बुगलेनिकी पंकतिरूप विषयकौं अवलंबि यहु बुगलेनिकी पंकति ही होसी वा ध्वजारूप विषयकौं अवलंबि यहु ध्वजा होसी ऐसा विशेष वांछारूप जो ज्ञान ताकौं ईहा कहिए। बहुरि बुगलनिकी यहु पंकति होसी कि ध्वजा होसी ऐसा संशयरूप ज्ञानका नाम ईहा नाहीं है। वा बुगलनिकी पंकतिविषैं यहु ध्वजा होसी ऐसा विपर्यय ज्ञानका नाम ईहा नाहीं है जातैं इहां सम्यग्ज्ञानका अधिकार है सम्यग्ज्ञान प्रमाण है अर संशय विपर्यय है सो मिथ्याज्ञान है तातैं संशय विपर्ययका नाम ईहा नाहीं। जो वस्तु है ताका यथार्थरूप ऐसा ज्ञान करना कि यहु अमुक ही वस्तु होसी ऐसैं होसीरूप जो प्रतीति ताका नाम ईहा है। अवग्रहतैं ईहाविषैं विशेष ग्रहण भया तातैं याके वाकेविषैं मतिज्ञानवरणके क्षयोपशमका तारतम्यकरि भेद जानना ॥ ३०८ ॥

**ईहणकरणेण जदा सुणिण्णओ होदि सो अवाओ दु।**

**कालंतरेवि णिण्णिदवत्थुसमरणस्स कारणं तुरियं ॥ ३०९**

ईहनकरणेन यदा सुनिर्णयो भवति स अवायस्तु ।
कालांतरेऽपि निर्णीतवस्तुस्मरणस्य कारणं तुर्यं ॥ ३०९ ॥

जी० प्र०—ईहनकारणेन-विशेषाकांक्षाक्रियायाः पश्चात् यदा ईहितविशेषार्थस्य सुनिर्णयः उत्पतनपतनपक्षविक्षेपादिभिश्चिन्हैः इयं बलाकैवेति बलाकात्वस्य यः सुनिश्चयो भवेत् तदा स अवाय इति व्यपदिश्यते । तुशब्दः प्रागाकांक्षितविशेषस्यैव सुनिर्णयोऽवाय इत्यवधारणार्थः । अनेन विपर्यासेन निर्णयो मिथ्याज्ञानतया अवायो न भवतीति ग्राह्यं ततः स एवावायः पुनः पुनः प्रवृत्तिरूपाभ्यासजनितसंस्कारात्मको भूत्वा कालांतरेऽपि निर्णीतवस्तुस्मरणकारणत्वेन तुर्यं चतुर्थं धारणाख्यं ज्ञान भवति ॥ ३०९ ॥

मं० प्र०—ईहनकरणात्–विशेषकाक्षाक्रियायाः, पश्चात् यदा ईहितविशेषस्य सुनिर्णयः उत्पतनपतनपक्षविक्षेपादिभिरिचह्नैरियं बलाकैवेति बलाकात्वस्य यः सुनिश्चयो भवेत् तदा स अवाय इति व्यपदिश्यते । तुशब्दः प्रागाकाक्षिताविशेषस्यैव सुनिर्णयोऽवाय इत्यवधारणार्थः । अनेन विपर्यासेन निर्णयो मिथ्याज्ञानतया अवायो न भवतीति ग्राह्यं । ततः स एव अवायः पुनः पुनः प्रवृत्तिरूपाभ्यासजानितसंस्कारात्मकः सन् कालांतरेऽपि निर्णीतवस्तुस्मरणकारणत्वेन तुर्यं धारणाख्यं चतुर्थज्ञानं भवति ॥ ३०९ ॥

स० चं०—ईहाके करनेकरि ताके पीछैं जिस वस्तुकी ईहा भई थी ताका भलेप्रकार निर्णय रूप जो ज्ञान ताकौं अवाय कहिए । जैसैं पांखनिका हलावना आदि चिह्नकरि यहु निश्चय कीया जो बुगलनिकी पंकतिही है निश्चयकरि और किछू नाहीं ऐसा निर्णयका नाम अवाय है । तुशब्दकरि पूर्वें जो ईहाविषैं वांछित वस्तु था ताहीका भले प्रकार निर्णय सो अवाय है । बहुरि जो वस्तु किछू और है अर और ही वस्तुका निश्चयकरि लीया है तो वाका नाम अवाय नाहीं वह मिथ्याज्ञान है । बहुरि वहां पीछैं बार बार निश्चयरूप अभ्यासतैं उपज्या जो संस्कार तींहि स्वरूप होइ केते इक कालकौं व्यतीत भएं भी यादि आवनेकौं कारणभूत जो ज्ञान सो धारणा नाम चौथा ज्ञानका भेद हो है ऐसैं ही सर्व इंद्रिय वा मन संबंधी अवग्रह ईहा अवाय धारणा भेद जानने ॥३०९॥

**बहु बहुविहं च खिप्पाणिस्सिदणुत्तं धुवं च इदरं च ।**

## तत्थेक्के जादे छत्तीसं तिसयभेदं तु ॥ ३१० ॥

बहु बहुविधं च क्षिप्रानिःसृदनुक्तं ध्रुवं च इतरच्च ।
तत्रैकैकस्मिन् जाते षट्त्रिंशत्त्रिशतभेदं तु ॥ ३१० ॥

जी० प्र०—अर्थो व्यंजनं वा मतिज्ञानविषयः बहु. बहुविधः क्षिप्र. अनिसृतः अनुक्त ध्रुवश्चेति षोढा । तथा इतरोऽपि एकः एकविधः अक्षिप्रः निसृत उक्त अध्रुवश्चेति षोढा एवं द्वादशधा भवति। तत्र द्वादशस्वपि एकैकस्मिन् विषये प्रागुक्ताष्टाविंशतिप्रकारे मतिज्ञाने जाते-उत्पन्ने सति मतिज्ञान तु पुनः षट्त्रिंशदुत्तरत्रिशतभेदं भवति ३३६ । तद्यथा–बहुविषये अर्थात्मके अनिन्द्रियेंद्रियभेदेन मतिज्ञानस्य भेदाः षट्, त एव पुनः अवग्रहेहावायधारणाभेदेन प्रत्येकं चत्वारश्चत्वारो भूत्वा चतुर्विंशतिः । तथा व्यंजनात्मके तु स्पर्शनरसनघ्राण-चक्षुःश्रोत्रैश्चत्वारोऽवग्रहा एव । एवमर्थव्यंजनात्मके बहुविषये मिलित्वा मतिज्ञानभेदा अष्टाविंशतिर्भवंति । अनेन प्रकारेण अर्थव्यंजनात्मक-बहुविधादिष्वपि प्रत्येकमष्टाविंशत्यष्टाविंशतिज्ञानभेदेषु जातेषु द्वादशविषयेषु मतिज्ञानभेदाः षट्त्रिंशदुत्तरत्रिशतीप्रमिता भवंति । यद्येकस्मिन्विषये अष्टाविंशतिर्मतिज्ञानभेदा भवंति तदा द्वादशसु विषयेषु कियंतो मतिज्ञानभेदा भवंतीति प्र १ । फ १८ । इ १२ त्रैराशिकं कृत्वा इच्छां फलेन संगुण्य प्रमाणेन भक्त्वा लब्धस्य तत्प्रमाणत्वात् ॥ ३१० ॥

म० प्र०—अर्थस्य व्यंजनस्य च मतिज्ञानविषयस्य द्वादश भेदा भवति—बहुर्बहुविधः क्षिप्रः अनिसृतः अनुक्तः ध्रुवश्चेति षट् । तदितरे च एकः एकविध. अक्षिप्र· निसृतः उक्तः अध्रुवश्चेति षट् । तत्र—तेषु बह्वादिषु विषयेषु एकैकस्मिन् विषये प्रागुक्ताष्टाविंशतिप्रकारे मतिज्ञाने जाते—उत्पन्ने सति मतिज्ञानं तु—पुनः षट्त्रिंशदुत्तरात्रिशतभेदं भवति । तद्यथा—बहौ विषये अर्थात्मके पंचभ्य इंद्रियेभ्यः मनसश्च प्रत्येकमवग्रहेहावायधारणाख्या मतिज्ञानभेदा-श्चत्वारः, इतींद्रियानिंद्रियेभ्यः सपिंडिताश्चतुर्विंशतिरुत्पद्यंते । तथा व्यंजनात्मके बहौ विषये स्पर्शनरसनघ्राणश्रोत्राख्येंद्रियचतुष्कात् चत्वारोऽवग्रहा एव जायते इति बहौ विषये मिलित्वा मतिज्ञानभेदाः अष्टाविंशतिर्भवति । एवं बहुविधादिषु पंचसु तदितरेषु च षट्सु विषयेषु प्रत्येकमष्टाविंशतिमतिज्ञानभेदा जायते इत्यष्टाविंशत्या द्वादशसु विषयभेदेषु गुणितेषु सर्वे मतिज्ञानभेदाः षट्त्रिंशदुत्तरात्रिशतीप्रमिता भवति । ३३६ । यद्येकस्मिन् विषये प्र १, अष्टाविंशतिमतिज्ञानभेदा भवति फ २८ । तदा द्वादसु विषयेषु इ १२ कियंतो भवंतीति त्रैराशिकेन लब्धा मतिज्ञानभेदाः ॥ ३१० ॥

स० चं०—अर्थरूप वा व्यंजनरूप जो मतिज्ञानका विषय ताके बारह भेद हैं--बहु १ बहुविध १ क्षिप्र १ अनिसृत १ अनुक्त १ ध्रुव १ ए छह बहुरि इतर जे छहौं इनके प्रतिपक्षी एक एकविध अक्षिप्र निसृत उक्त अध्रुव ए छह ऐसैं बारह भेद जानने सो व्यंजनावग्रहके च्यारि इंद्रियनि करि च्यारि भेद भए अर अर्थके अवग्रह ईहा

अवाय धारणातैं पंच इंद्रिय छठा मन करि चौबीस भेद भए मिलाएं ते अठाईस भेद भए सो व्यंजन रूप बहु विषयका च्यारि इंद्रियनिकरि अवग्रह हो है सो च्यारि भेद तौ ए भए अर अर्थ रूप बहुविषयका पंच इंद्रिय छठा मनकरि गुणैं अवग्रह ईहा अवाय धारणा हो हैं तातैं चौबीस भए। ऐसैं एक बहुविषय संबंधी अठाईस भेद भए। ऐसैं ही बहुविध आदि भेदनिविषैं अठाईस अठाईस भेद हो हैं। सबकौं मिलाएं बारह विषयनिविषैं मतिज्ञान के तीनसै छत्तीस भेद हो हैं जो एक विषयविषैं अठाईस भेद होइ तौ बारह विषयनिविषैं केते होंहि ऐसैं त्रैराशिक कीएं लब्धराशिमात्र तीनसै छत्तीस मतिज्ञानके भेद हो हैं ॥ ३१० ॥

## बहुवत्तिजादिगहणे बहुबहुविहमियरमियरगहणम्हि।
## सगणामादो सिद्धा खिप्पादी सेदरा य तहा ॥ ३११ ॥

बहुव्यक्तिजातिग्रहणे बहुबहुविधमितरदितरग्रहणे।
स्वकनामतः सिद्धाः क्षिप्रादयः सेतराश्च तथा ॥ ३११ ॥

जी० प्र०—बहुव्यक्तीनां ग्रहणे मतिज्ञाने तद्विषयो बहुरित्युच्यते यथा खंडमुंडशवलादिबहुगोव्यक्तयः। बहुजातीनां ग्रहणे मतिज्ञाने तद्विषयो बहुविध इत्युच्यते यथा गोमहिषाश्वादिबहुजातयः इति। इतरग्रहणे एकव्यक्तिग्रहणे मतिज्ञाने तद्विषय एकः यथा खंडोऽयमिति। एकजातिग्रहणे मतिज्ञाने तद्विषय एकविधः यथा खंडो वा मुडो वा गौरिति। क्षिप्रादयः क्षिप्रानिसृतानुक्तध्रुवाः स्वेतरे च अक्षिप्रनिसृतोक्त ध्रुवाश्च स्वस्वनामत एव सिद्धाः। तथाहि क्षिप्रः शीघ्रपतज्जलधाराप्रवाहादिः। अनिसृतः गूढः जलमग्नहस्त्यादिः। अनुक्तः-अकथितः अभिप्रायगतः। ध्रुवः स्थिरः चिरकालावस्थायी पर्वतादिः। अक्षिप्रः मंदं गच्छन्नश्वादिः। निसृतः व्यक्तनिष्क्रांतः जलनिर्गतहस्त्यादिः। उक्तः अयं घटः इति कथितो दृश्यमानः। अध्रुवः क्षणस्थायी विद्युदादिः। तथाचेतिशब्दौ समुच्चयार्थौ ॥ ३११ ॥

मं० प्र०—बहुव्यक्तीनां ग्रहणे मतिज्ञाने तद्विषयो बहुरित्युच्यते यथा खंडमुडशवलादिबहुगोव्यक्तयः। बहुजातीना ग्रहणे मतिज्ञाने तद्विषयो बहुविध इत्युच्यते यथा गोमहिषाश्वादयो बहुजातयः इति। इतरग्रहणे एकव्यक्तिग्रहणे मतिज्ञाने तद्विषय एकः यथा खंडोऽयमिति। एकजातिग्रहणे मतिज्ञाने तद्विषय एकविधः खंडो वा मुंडो गौरिति। क्षिप्रादयः क्षिप्रानिसृतानुक्तध्रुवाः स्वेतरे च अक्षिप्रानिसृतोक्तध्रुवाः स्वस्वनामत एव सिद्धाः। तथाहि–क्षिप्र.–

शीघ्रपतज्जलधाराप्रवाहादिः । अनिसृतः--गूढः--जलमग्नहस्त्यादिः । अनुक्तः--अकथितः अभिप्रायगतः, ध्रुवः--स्थिरः चिरकालावस्थायी पर्वतादिः । आक्षिप्रः मंदं गच्छन्नश्वादिः । निसृतः--व्यक्तनिष्क्रातः जलनिर्गतहस्त्यादिः । उक्तः--अयं घट इति कथितो दृश्यमानः, अध्रुवः क्षणस्थायी विद्युदादिः तथाचेति समुच्चयार्थौ ॥ ३११ ॥

स० चं०--जहां बहुत व्यक्तिका ग्रहणरूप मतिज्ञान होइ ताके विषयकौं बहु कहिए । बहुरि जहां बहुजातिका ग्रहणरूप मतिज्ञान होइ ताके विषयकौं बहुविध कहिए । बहुरि ऐसैं ही इतरका ग्रहणविषैं जहां एक व्यक्तिका ग्रहण रूप मतिज्ञान होइ ताके विषयकौं एक कहिए । बहुरि जहां एक जातिका ग्रहणरूप मतिज्ञान होइ ताके विषयकौं एकविध कहिए । इहां उदाहरण दिखाइए हैं जैसैं खाड़ी गऊ सावली गऊ मूड़ी गऊ इत्यादिक अनेक गऊनिकी व्यक्तिकौं बहु कहिए । बहुरि गऊ भैंस घोड़े इत्यादि अनेक जातिकौं बहुविध कहिए । बहुरि एक खाडी गऊ ऐसी गऊकी एक व्यक्तिकौं एक कहिए । बहुरि खाड़ी मूडी सावली गऊ है ऐसी एक जातिकौं एकविध कहिए । एक जातिविषैं अनेक व्यक्ति पाइए हैं । ऐसैं बारह भेदनिविषैं च्यारि तौ कहे । बहुरि अवशेष क्षिप्रादिक च्यारि अर इनिके प्रतिपक्षी च्यारि ते अपने नामहीतैं प्रसिद्ध हैं । सोही कहिए है--क्षिप्र शीघ्रकौं कहिए जैसैं शीघ्र पडती जल धारा वा जल प्रवाह । बहुरि अनिसृत गूढकौं कहिए जैसें जलविषैं मगन हूवा हाथी । बहुरि अनुक्त विना कहेकौं कहिए जैसैं विनाही कहे किछू अभिप्रायहीतैं जाननेमें आवै । बहुरि ध्रुव अचलकौं वा बहुत काल स्थायीकौं कहिए जैसैं पर्वतादिक । बहुरि अक्षिप्र ढीलेकौं कहिए जैसैं मंद चालता घोटकादिक । बहुरि निसृत प्रगटकौं कहिए जैसैं जलतैं निकस्या हूवा हाथी । बहुरि उक्त कहेको कहिए जैसैं काहूनैं कह्या यहु घट है । बहुरि अध्रुव चंचल वा विनाशीककौं कहिए जैसैं क्षणस्थायी विजुरी आदि । ऐसैं बारह प्रकार मतिज्ञानके विषय हैं । भावार्थ--जाकौं जानिए यहु शीघ्र प्रवर्तै है सो क्षिप्र कहिए । बहुरि जाकौं जानिए यह गूढ है सो अनिसृत कहिए । बहुरि जाकौं विना कहैं जानिए सो अनुक्त कहिए । बहुरि जाकौं जानिए यहु ध्रुव है सो ध्रुव कहिए इत्यादिक मतिज्ञानके विषय हैं । इनिकौं मतिज्ञानकरि जानिए है ॥ ३११ ॥

# वत्थुस्स पदेसादो वत्थुग्गहणं तु वत्थुदेसं वा ।
# सयलं वा अवलंबिय अणिस्सिदं अण्णवत्थुगई ॥ ३१२ ॥

वस्तुनः प्रदेशात् वस्तुग्रहणं तु वस्तुदेशं वा ।
सकलं वा अवलंब्य अनिसृतमन्यवस्तुगातिः ॥ ३१२ ॥

जी० प्र०—कस्यचिद्वस्तुनः, प्रदेशाद्-एकदेशाद् व्यक्तात् तदविनाभाविनोऽव्यक्तस्य वस्तुनो ग्रहणं अनिसृतज्ञानं। अथवा एकस्य वस्तुनः एकदेशं वा सकलं वस्तु वा अवलंब्य गृहीत्वा पुनरन्यस्य वस्तुनः गतिः–ज्ञानं यत्, तदप्यनिसृतज्ञानं भवति ॥ ३१२ ॥ तदुदाहरति–

मं० प्र०—कस्यचिद्वस्तुनः, प्रदेशात्–एकदेशात् व्यक्तात् तदविनाभाविनोऽव्यक्तस्य वस्तुनो ग्रहणमनिसृतज्ञानं। अथवा एकस्य वस्तुनः एकदेशं वा सकलवस्तु वा अवलंब्य–गृहीत्वा पुनरन्यस्य वस्तुनो गतिः–ज्ञानं यत्, तदप्यनिसृतज्ञानं भवति ॥ ३१२ ॥

स० चं०–किसी वस्तुका प्रदेश कहिए एकोदेश अंश प्रगट है तातैं जो वह एकोदेश अंश जिस वस्तु बिना न होइ ऐसे अप्रगट वस्तुका ग्रहण कीजिए सो अनिःसृतज्ञान है अथवा एक किसी वस्तुका एकोदेश अंशकौं वा सर्वांग वस्तुहीकौं अवलंबिकरि ग्रहण करि अन्य कोई अप्रकट वस्तुका ग्रहण करना सो भी अनिःसृत ज्ञान है इनिके उदाहरण आगैं कहैं हैं ॥ ३१२ ॥

# पुक्खरगहणे काले हत्थिस्स य वदणगवयगहणे वा ।
# वत्थंतरचंदस्स य धेणुस्स य बोहणं च हवे ॥ ३१३ ॥

पुष्करग्रहणे काले हस्तिनश्च वदनगवयग्रहणे वा ।
वस्त्वंतरचंद्रस्य च धेनोश्च बोधनं च भवेत् ॥ ३१३ ॥

जी० प्र०—पुष्करस्य जलाद्बहिर्दृश्यमानस्य जलमग्नहस्तिकराग्रस्य ग्रहणकाले दर्शनकाले एव तदविनाभाविजलमग्नहस्तिग्रहणं जले ह-

स्ती मग्नोऽस्तीति प्रतीतिः । वा इव यथा अनेन अस्मात् साध्याविनाभावनियमनिश्चयात् साधनात् साध्यस्य ज्ञानमनुमानमिति अनुमानप्रमाणं संगृहीतं भवति। अथवा कस्याश्चित् युवतेर्वदनग्रहणकाले वस्त्वंतरस्य चंद्रस्य ग्रहणं। मुखसादृश्याचंद्रस्य स्मरणं चंद्रसदृशं मुखमिति प्रत्यभिज्ञानं वा। अरण्ये गवयग्रहणकाले गवयदर्शनकाल एव धेनोर्बोधनं स्मरणं गोसदृशो गवय इति प्रत्यभिज्ञानं वा भवेत् । वा इव यथा अत्र इवार्थद्योतको वाशब्दः उदाहरणप्रदर्शने प्रयुक्तः अनंतरगाथोक्तानिसृतार्थज्ञानस्य एतावंत्युदाहरणानि। पक्षांतरसूचको वा । यथा महानसे अग्नौ सत्येव धूम उपपन्नो दृष्टः। हृदे अग्न्यभावे धूमोऽनुपपन्नो निश्चितः। तथा सर्वदेशकालसंबंधितया अग्निधूमयोरन्यथानुपपत्तिरूपस्य अविनाभावसंबंधस्य ज्ञानं तर्कः सोपि च मतिज्ञानं भवति । एवमनुमानस्मृतिप्रत्यभिज्ञानतर्काख्यानि चत्वारि मतिज्ञानानि अनिसृतार्थविषयाणि केवलपरोक्षाणि एकदेशतोऽपि वैशद्याभावात् । शेषाणि स्पर्शनादींद्रियानिंद्रियव्यापारप्रभवानि बह्वाद्यर्थविषयाणि मतिज्ञानानि सांव्यवहारिकप्रत्यक्षाणि एकदेशतो वैशद्यसंभवात् । प्रत्यक्षं विशदं ज्ञानमिति पूर्वाचार्यैः प्रत्यक्षलक्षणस्योक्तत्वात् । तानि सर्वाणि मतिज्ञानानि प्रमाणानि सम्यग्ज्ञानत्वात् । सम्यग्ज्ञानं प्रमाणं, इति प्रवचने (प्रोक्तत्वात्) प्रतिपादनात् ॥ ३१३ ॥

म० प्र०—पुष्करस्य जलाद्बहिर्दृश्यमानस्य जलमग्नहस्तिकराग्रस्य ग्रहणकाले--दर्शनकाल एव तदविनाभाविजलमग्नहस्तिग्रहणं–जले हस्ती मग्नोऽस्तीति प्रतीतिः वा इव यथा अनेन साध्याविनाभावनियमानिश्चयतः साधनात्साध्यस्य विज्ञानमनुमानमित्यनुमानप्रमाणं संगृहीतं । अथवा कस्याश्चिद् युवतेः, वदनग्रहणे–काले एव वस्त्वंतरस्य चंद्रस्य ग्रहणं मुखसादृश्याच्चंद्रस्य स्मरणं चद्रसदृश मुखमिति प्रत्यभिज्ञानं, वा अरण्ये गवयग्रहणकाले एव धेनोर्बोधनं स्मरणं गोसदृशो गवय इति प्रत्यभिज्ञानं वा भवेत् वा-इव यथा । अत्र इवार्थद्योतको वाशब्दः उदाहरणप्रदर्शने प्रयुक्त, अनंतरगाथोक्तानिसृतार्थज्ञानस्य एतान्युदाहरणानि । पक्षांतरसूचको वा । यथा महानसे अग्नौ सत्येव धूम उपपन्नो दृष्टः, हृदे अग्न्यभावे धूमोऽनुपपन्नो निश्चितः, तथा सर्वदेशकालसंबंधितया अग्निधूमयोरन्यथानुपपत्तिरूपस्याविनाभावसंबंधस्य ज्ञानं तर्काख्यं च मतिज्ञानं भवति । एवमनुमानस्मृतिप्रत्यभिज्ञानतर्काख्यानि चत्वारि मतिज्ञानानि अनिसृतविषयाणि केवलपरोक्षाणि एकदेशतोऽपि वैशद्याभावात् । शेषाणि स्पर्शनादींद्रियानिंद्रियव्यापारप्रभवानि मतिज्ञानानि बह्वादिविषयाणि साव्यवहारिकप्रत्यक्षाणि एकदेशतो वैशद्यसंभवात्, प्रत्यक्ष विशद ज्ञानमिति पूर्वाचार्यैः प्रत्यक्षलक्षणस्योक्तत्वात्। तानि सर्वाणि मतिज्ञानानि प्रमाणानि सम्यग्ज्ञानत्वात् । सम्यग्ज्ञान प्रमाणमिति प्रवचने प्रोक्तत्वात् ॥ ३१३ ॥

स० चं०—पुष्कर कहिए जलतैं वाहिर प्रगट दीसती ऐसी जलविषैं डूब्या हूवा हस्तीकी सूंडि ताकौं जाननेतैं ऐसी प्रतीति हो है कि इस जलविषैं हस्ती मगन है जातैं हस्ती बिना सूंडि न हो है। जिस बिना जो न होइ ताकौं तिसका साधन कहिए जैसैं अग्नि बिना धूम नाहीं तातैं अग्नि साध्य है धूम साधन है। सो साधनतैं साध्यका जानना सो अनुमान प्रमाण है। इहां सूंडि साधन, हस्ती साध्य है। सूंडितैं हस्तीका ज्ञान भया तातैं इहां

अनुमान प्रमाण आया। बहुरि किसी स्त्रीका मुख देखा सो मुखका ग्रहण समयविषैं चंद्रमाका स्मरण भया आगैं चंद्रमा देख्या था स्त्रीके मुखकी अर चंद्रमाकी सदृशता है सो स्त्रीका मुख देखितैंही चंद्रमा यादि आया सो चंद्रमा तिस काल विषैं प्रकट न था ताका ज्ञान भया सो यहु स्मृति प्रमाण है। अथवा चंद्रमासमान स्त्रीका मुख है सो स्त्रीका मुख देखतैं चंद्रमाका ज्ञान भया तातैं याकौं प्रत्यभिज्ञान प्रमाण भी कहिये। ऐसैं ही वनविषैं गवय नामा तिर्यंच-कौं देख्या तहां ऐसा यादि आया कि गऊके सदृश गवय हो है तातैं यहु स्मृति प्रमाण है अथवा गऊ समान गवय हो है सो गऊका ज्ञान गवयकौं देखते ही भया तातैं याकौं प्रत्यभिज्ञान भी कहिए। वा कहिए जैसैं ए उ-दाहरण कहे तैसैं और भी जाननें। जैसैं रसोईविषैं अग्नि होते संतै धूवा हो है अर द्रहविषैं अग्नि नाही तातैं धूवां भी नाहीं तातैं सर्व देश कालविषैं अग्नि अर धूवांकैं अन्यथा अनुपपत्ति भाव है। अन्यथा कहिए अग्नि न होइ तौ अनुपपत्ति कहिए धूवां भी न होइ सो ऐसा अन्यथा अनुपपत्तिका ज्ञान सो तर्क नामा प्रमाण भी मतिज्ञान है। या प्रकार अनुमान स्मृति प्रत्यभिज्ञान तर्क ए च्यार्‍यो परोक्ष प्रमाण अनिःसृत है विषय जाका ऐसा मतिज्ञानके भेद जानने। पांचवां आगम नामा परोक्ष प्रमाण श्रुतज्ञानका भेद जानना। एकोदेशपनैं भी विशदता स्पष्टता इनिके जाननेविषैं नाहीं तातैं इनिकौं परोक्ष प्रमाण कहे और इनके बिना जो पांच इंद्रियनिकरि बहु बहुविध आदि जानिए है ते सांव्यवहारिक प्रत्यक्ष जानने जातैं इनिके जाननेमें एकोदेश विशदता निर्मलता स्पष्टता पाइए है व्यवहारविषैं भी ऐसैं कहिए है जो मैं नेंत्रनिस्यौं प्रत्यक्ष देख्या बहुरि इस मतिज्ञान विषैं पारमार्थिक प्रत्यक्षपना है नाहीं जातैं अपने विषयकौं तारतम्य रूप संपूर्ण स्पष्ट न जानैं। पूर्वै आचार्यनिकरि प्रत्यक्षका ल-क्षण विशद वा स्पष्ट ही कह्या है ऐसैं ए सर्व मतिज्ञानके भेद जानने ते भेद प्रमाण हैं जातैं ए सर्व सम्यग्ज्ञान हैं बहुरि "सम्यग्ज्ञानं प्रमाणं" ऐसा सिद्धांतविषैं कह्या है ॥ ३१२ ॥

**एक्कचउक्कं चउवीसट्ठावीसं च तिप्पडिं किच्चा।**

इगिछब्बारसगुणिदे मदिणाणे होंति ठाणाणि ॥ ३१४ ॥

एकचतुष्कं चतुर्विंशत्यष्टाविंशतिश्च त्रिःप्रतिं कृत्वा ।

एकषड्द्वादशगुणिते मतिज्ञाने भवंति स्थानानि ॥ ३१४ ॥

जी०प्र०—मतिज्ञानं सामान्येन एकं १ । अवग्रहेहावायधारणापेक्षया चत्वारि ४ । इंद्रियानिंद्रियजनितार्थावग्रहेहावायधारणापेक्षया चतुर्विंशतिः २४ । अर्थव्यंजनोभयावग्रहापेक्षया अष्टाविंशतिः २८ । एतानि चत्वारि स्थानानि त्रिःप्रतिकानि—

| | | |
|---|---|---|
| २८ । १ | २८ । ६ | २८ । १२ |
| २४ । १ | २४ । ६ | २४ । १२ |
| ४ । १ | ४ । ६ | ४ । १२ |
| १ । १ | १ । ६ | १ । १२ |

कृत्वा यथाक्रमं प्रथमं स्थानचतुष्टयं विषयसामान्येनैकेन गुणयेत्। द्वितीयं स्थानचतुष्टयं बह्वादिविषयषट्केन गुणयेत्। तृतीयं स्थानचतुष्टयं बह्वादिभिर्द्वादशविषयैर्गुणयेत् । एव गुणिते सति मतिज्ञाने सामान्यविषयार्धविषयसर्वविषयापेक्षया स्थानानि भवंति ॥ ३१४ ॥ अथ श्रुतज्ञानमरूपणां प्रारभमाणः प्रथमस्तावत्तत्सामान्यलक्षणमाह—

मं० प्र०—मतिज्ञानसामान्यापेक्षया एकोंकः । १ । अवग्रहेहावायधारणापेक्षया चतुरंकः । इंद्रियानिंद्रियजनितार्थावग्रहेहावायधारणापेक्षया चतुर्विंशत्यंकः । अर्थव्यंजनोभयावग्रहाद्यपेक्षया अष्टाविंशत्यंकः । २८ । एवं चत्वारि स्थानानि त्रिःप्रतिकं कृत्वा यथाक्रमं प्रथम स्थानचतुष्टयं विषयसामान्येनैकेन गुणयेत्, द्वितीयं स्थानचतुष्टयं बह्वादिविषयषट्केन गुणयेत् । तृतीयं स्थानचतुष्टयं बह्वादिभिर्विषयैः द्वादशभिर्गुणयेत् एवं गुणिते सति मतिज्ञाने विषयसामान्यार्धविषयसर्वविषयापेक्षाणि स्थानानि भवंति ॥ ३३४ ॥ अथ श्रुतज्ञानप्ररूपणा प्रारभमाणस्तावत्तत्सामान्यलक्षणमाह—

स० चं०—मतिज्ञान सामान्य अपेक्षा करि तौ एक है अर अवग्रह ईहा अवाय धारणाकी अपेक्षा च्यारि है बहुरि पांच इंद्रिय छठा मनकरि अर अवग्रह ईहा अवाय धारणाकी अपेक्षा चौवीस है। बहुरि व्यंजन अर अर्थका भेद कीएं अठाईस है सो एक च्यारि चौवीस अठाईस १ । ४ । २४ । २८ । ज्ञान च्यार्‍योंको जुदे जुदे तीन जायगा माडिए । तहां एक जायगा तौ सामान्यपनैं अपने अपने विषयकौं जानैं हैं ऐसा विषय संबंधी एक भेद

करि गुणिए तब तौ एक च्यारि चौबीस अठाईसभेद भए। बहुरि दूसरी जायगा बहु बहुविध क्षिप्र अनिःसृत अनुक्त ध्रुव ए छह प्रकार विषयके भेद करि गुणिए तब छह ६ चौबीस २४ के एकसौ चवालीस १४४ एकसौ अडसठि १६८ ऐसैं मतिज्ञानके विषय भेदनिकी अपेक्षा भेद भए। बहुरि तीसरी जायगा उनके प्रतिपक्षी सहित बारह विषय भेदनिकरि गुणिए तहां बारह १२ अडतालीस ४८ दोयसै अठ्यासी २८८ तीनसै छत्तीस ३३६ सर्व विषय भेदनिकी अपेक्षा मतिज्ञानके भेद भए। ऐसैं विवक्षा भेदकरि मतिज्ञानके स्थान दिखाए ॥३१४॥ आगैं श्रुतज्ञानकी प्ररूपणाका आरंभ करता संता प्रथमही श्रुतज्ञानका सामान्य लक्षण कहै हैं—

## अत्थादो अत्थंतरमुवलंभंतं भणंति सुदणाणं।
## आभिणिबोहियपुव्वं णियमेणिह सद्दजं पमुहं ॥ ३१५ ॥

अर्थादर्थांतरमुपलभमानं भणंति श्रुतज्ञानं।
आभिनिबोधिकपूर्वं नियमेनेह शब्दजं प्रमुखं ॥ ३१५ ॥

जी० प्र०—मतिज्ञानेन निश्चितमर्थमवलंब्य अर्थांतरं-तत्संबद्धमन्यार्थमुपलभ्यमानं-अवबुध्यमानं श्रुतज्ञानावरणवीर्यांतरायक्षयोपशमोत्पन्नं जीवस्य ज्ञानपर्यायं श्रुतज्ञानमिति मुनीश्वरा भणंति। तत्कथं भवेत्? आभिनिबोधिकपूर्वं—नियमेन आभिनिबोधिकं मतिज्ञानं पूर्वं कारणं यस्य तत् तथोक्तं आभिनिबोधिकपूर्वं, मतिज्ञानावरणक्षयोपशमेन मतिज्ञानमेव पूर्वं प्रथममुत्पद्यते पुनः—पश्चात् तद्गृहीतार्थमवलंब्य तद्बलादर्थांतरविषयं श्रुतज्ञानमुत्पद्यते नान्यप्रकारेणेति नियमशब्देन मतिज्ञानप्रवृत्त्यभावे श्रुतज्ञानाभाव इत्यवधार्यते। इह—अस्मिन् श्रुतज्ञानप्रकरणे अक्षरानक्षरात्मकयोः शब्दजलिंगजयोः श्रुतज्ञानभेदयोः मध्ये शब्दज-वर्णपदवाक्यात्मकशब्दजनितं श्रुतज्ञानं प्रमुखं प्रधानं दत्तग्रहणशास्त्राध्ययनादिसकलव्यवहाराणां तन्मूलत्वात्। अनक्षरात्मकं तु लिंगजं श्रुतज्ञानं एकेंद्रियादिपंचेंद्रियपर्यंतेषु जीवेषु विद्यमानमपि व्यवहारानुपयोगित्वादप्रधानं भवति। श्रूयते श्रोत्रेंद्रियेण गृह्यते इति श्रुतः शब्द, तस्मादुत्पन्नमर्थज्ञानं श्रुतज्ञानमिति व्युत्पत्तेरपि अक्षरात्मकप्राधान्याश्रयणात्। अथ वा श्रुतमिति रूढिशब्दोयं मतिज्ञानपूर्वकस्य अर्थांतरज्ञानस्य प्रतिपादकः परमागमे रूढः। यथाकथंचिन्निरुक्तिसंभवः रूढिशब्दे अजहत्स्वार्थवृत्तिके कुशं लातीति कुशल इति कुशलादिशब्देषु निपुणाद्यर्थेषु रूढेषु तन्निरुक्तिवत्। तत्र जीवोऽस्तीत्युक्ते जीवोऽस्तीति शब्दज्ञानं श्रोत्रेंद्रियप्रभवं मतिज्ञानं भवति। ज्ञानेन

जीवोऽस्तीति शब्दवाच्यरूपे आत्मास्तित्वे वाच्यवाचकसंबंधसंकेतसंकलनपूर्वकं यत् ज्ञानमुत्पद्यते तदक्षरात्मकं श्रुतज्ञानं भवति, अक्षरात्मकशब्दसमुत्पन्नत्वेन कार्ये कारणोपचारात्। वातशीतस्पर्शज्ञानेन वातप्रकृतिकस्य तत्स्पर्शे अमनोज्ञज्ञानमक्षरात्मक लिंगजं श्रुतज्ञानं भवति, शब्दपूर्वकत्वाभावात् ॥ ३१५ ॥ अथ श्रुतज्ञानस्य अक्षरानक्षरात्मकभेदौ प्ररूपयति—

मं० प्र० —मतिज्ञानेन निश्चितादर्थात् तमर्थमालंब्य, अर्थांतरं--तत्संबद्धमन्यमर्थमुपलभमानं—अवबुध्यमानं श्रुतज्ञानावरणवीर्यांतरायक्षयोपशमोत्पन्नं जीवस्य ज्ञानपर्यायं श्रुतज्ञानमिति मुनीश्वरा भणंति। तत्कीदृशं? आभिनिबोधिकपूर्वं नियमेन—आभिनिबोधिकं—मतिज्ञानं पूर्वं—कारणं, यस्य तत्तथोक्तं। मतिज्ञानावरणक्षयोपशमात् मतिज्ञानमेव प्रथममुत्पद्यते। पुनस्तद्गृहीतार्थमवलंब्य तद्बलादर्थांतरविषयं श्रुतज्ञानमुत्पद्यते नान्यथेति नियमशब्देन मतिज्ञानप्रवृत्त्यभावे श्रुतज्ञानाभाव इत्यवधार्यते। इह श्रुतज्ञानप्रकरणे, अक्षरानक्षरात्मकयोः श्रुतज्ञानभेदयोः, शब्दजं—वर्णपदवाक्यात्मकशब्दप्रभवं श्रुतज्ञानं प्रमुख--प्रधानं दत्तग्रहशास्त्राध्ययनादिसकलव्यवहाराणां तन्मूलत्वात्। अनक्षरात्मकं तु श्रुतज्ञानं एकेंद्रियादिपंचेंद्रियपर्यंतजीवेषु विद्यमानमपि व्यवहारानुपयोगात् अप्रधानं। श्रूयते—श्रोत्रेंद्रियेण गृह्यते इति श्रुतः शब्दः, तस्मादुत्पन्नमर्थज्ञानं श्रुतज्ञानमिति व्युत्पत्तेरप्यक्षरात्मकप्राधान्याश्रयात्। अथवा श्रुतमिति रूढिशब्दोयं मतिज्ञानपूर्वस्यार्थांतरज्ञानस्य प्रतिपादकः परमागमे रूढः। यथा कथंचिन्निरुक्तिसंभवः रूढिशब्दे अजहत्स्वार्थवृत्तिके कुशं लातीति कुशल इति कुशलादिशब्देषु निपुणाद्यर्थेषु रूढेषु तन्निरुक्तिवत्। तत्र जीवोऽस्तीत्युक्ते जीवोऽस्तीति शब्दज्ञानं श्रोत्रेंद्रियप्रभवं मतिज्ञानं। तस्माज्जीवोऽस्तीति शब्दवाच्ये आत्मास्तित्वे वाच्यवाचकसंबंधसंकेतसंकलनपूर्वकं यत् ज्ञानमुत्पद्यते तदक्षरात्मकश्रुतज्ञानं, अक्षरात्मकाच्छब्दादुत्पन्नत्वात्। कार्ये कारणोपचारात्। वातशीतस्पर्शज्ञानात् वातप्रकृतेस्तत्स्पर्शे अमनोज्ञज्ञानमनक्षरात्मकं श्रुतं शब्दपूर्वकत्वाभावात् ॥ ३१५ ॥ अथ श्रुतज्ञानस्य अक्षरानक्षरात्मकभेदौ प्ररूपयति—

स० चं०—मतिज्ञानकरि निश्चय कीया जो पदार्थ तिसकौं अवलंबि करि तिसही पदार्थके संबंधकौं लीएं अन्य कोई पदार्थ, ताकौं जो जानैं सो श्रुतज्ञान है सो श्रुतज्ञानावरण वीर्यांतराय कर्मके क्षयोपशमतैं उपजै है ऐसैं मुनीश्वर कहै हैं। कैसा है श्रुतज्ञान? आभिनिबोधिक जो मतिज्ञान सो है पहिलैं जाके, पहिलैं मतिज्ञानावरणके क्षयोपशमतैं मतिज्ञान होइ पीछैं मतिज्ञानकरि जो पदार्थ जान्या ताका अवलंबनकरि अन्य कोई पदार्थका जानना होइ सोई श्रुतज्ञान है। ऐसा नियम जानना—पहिलैं मतिज्ञान भएं बिना सर्वथा श्रुतज्ञान न होइ। तीहि श्रुतज्ञानके दोय भेद हैं एक अक्षरात्मक। एक अनक्षरात्मक, इनिविषैं शब्दजं कहिए अक्षर पद छंदादिरूप शब्दतैं उत्पन्न भया जो अक्षरात्मक श्रुतज्ञान सो प्रमुख कहिए मुख्य प्रधान है जातैं देना लेना शास्त्र पढना इत्यादिक सर्व व्यवहारनिका मूल अक्षरात्मक श्रुतज्ञान है। बहुरि लिंग जो चिह्न तातैं उत्पन्न भया ऐसा अनक्षरात्मक

श्रुतज्ञान सो एकेंद्रियतैं लगाइ पंचेंद्रिय पर्यंत सर्व जीवनिकैं है तथापि यातैं किछू व्यवहार प्रवृत्ति नाहीं तातैं प्रधान नाहीं। बहुरि 'श्रूयते इति श्रुतः शब्दः तदुत्पन्नमर्थज्ञानं श्रुतं' सुणिए ताकौं शब्द कहिए, शब्दतैं भया जो अर्थज्ञान ताकौं श्रुतज्ञान कहिए इस भी अर्थविषैं अक्षरात्मक श्रुतज्ञान ही प्रधान आया। अथवा श्रुत ऐसा रूढि शब्द है सो मतिज्ञानपूर्वक अर्थांतरका जानने रूप ज्ञानका विशेष, तींहिं अर्थविषैं प्रवर्तै है जैसैं कुशल शब्दका अर्थ तौ यहु जो कुश कहिए डाभ ताकौं लाति कहिये दे सो कुशल परंतु रूढितैं प्रवीण पुरुषका नाम कुशल है तैसैं यहु श्रुतशब्द जानना। तहां 'जीवः अस्ति' ऐसा शब्द कह्या तहां कर्णरूप इंद्रिय मतिज्ञानकरि जीवः अस्ति ऐसे शब्दकौं ग्रह्या। बहुरि तींहिं ज्ञानकरि 'जीवनामा पदार्थ है' ऐसा जो ज्ञान भया सो श्रुतज्ञान है शब्द अर अर्थके वाच्य वाचक संबंध है। अर्थ वाच्य है शब्द वाचक है। अर्थ है सो उस शब्दकरि कहने योग्य है, शब्द उस अर्थका कहन हारा है ऐसा जो ज्ञान भया सो श्रुतज्ञान है। सो इहां 'जीवः अस्ति' ऐसैं शब्दका जानना तौ मतिज्ञान है अर उसके निमित्ततैं जीव नामा पदार्थका अस्तित्व जानना सो श्रुतज्ञान है। ऐसैं ही सर्व अक्षरात्मक श्रुतज्ञानका स्वरूप जानना। अक्षरात्मक जो शब्द तातैं उत्पन्न भया जो ज्ञान ताकौं भी अक्षरात्मक कह्या। इहां कार्यविषैं कारणका उपचार कीया है परमार्थतैं ज्ञान कोई अक्षररूप है नाहीं। बहुरि जैसैं शीतल पवनका स्पर्श भया तहां शीतल पवनका जानना तौ मतिज्ञान है बहुरि तिसका ज्ञानकरि वायुकी प्रकृति वालेकौं यहु शीतल पवन अनिष्ट है ऐसा जानना सो श्रुतज्ञान है सो यहु अनक्षरात्मक श्रुतज्ञान है। अक्षरके निमित्ततैं भया नाहीं। ऐसैं ही सर्व अनक्षरात्मक श्रुतज्ञानका स्वरूप जानना ॥३१५॥ आगैं श्रुतज्ञानके अक्षरात्मक अनक्षरात्मक भेदनिकौं दिखावैं हैं—

**लोगाणमसंखमिदा अणक्खरप्पे हवंति छट्ठाणा।**
**वेरूवछट्ठवग्गपमाणं रूऊणमक्खरगं ॥ ३१६ ॥**

**लोकानामसंख्यमितानि अनक्षरात्मके भवंति पट्स्थानानि ।**
**द्विरूपषष्ठवर्गप्रमाणं रूपोनमक्षरगं ॥ ३१६ ॥**

जी० प्र०—श्रुतज्ञानस्य अनक्षरात्मकाक्षरात्मकौ द्वौ भेदौ, तत्र अनक्षरात्मके श्रुतज्ञाने पर्यायपर्यायसमासलक्षणे सर्वजघन्यज्ञानमादिं कृत्वा स्वोत्कृष्टपर्यंतं असंख्येयलोकमात्रा ज्ञानविकल्पा भवति । ते च असंख्येयलोकमात्रवारषट्स्थानवृद्ध्या संवर्धिता भवंति । अक्षरात्मकं श्रुतज्ञानं द्विरूपवर्गधारोत्पन्नषष्ठवर्गस्य एकट्ठनाम्नो यावंति रूपाणि एकरूपोनानि संति तावंति अक्षराणि अपुनरुक्ताक्षराण्याश्रित्य संख्यातविकल्पं भवति । विवक्षितार्थाभिव्यक्तिनिमित्तं पुनरुक्ताक्षरग्रहणे ततोधिकप्रमाणं भवतीत्यर्थः ॥ ३१६ ॥ अथ श्रुतज्ञानस्य प्रकारांतरेण भेदान् गाथाद्वयेनाह—

मं० प्र०—अनक्षरात्मके श्रुतभेदे—पर्यायपर्यायसमासलक्षणे सर्वजघन्यज्ञानादारभ्य स्वोत्कृष्टपर्यंतमसंख्यातलोकमात्रा ज्ञानविकल्पा भवति । ते च असंख्येयलोकमात्रवारषट्स्थानवृद्ध्या संवृद्धाः । अक्षरात्मक श्रुतज्ञानं द्विरूपवर्गधारोत्पन्नषष्ठवर्गस्य एकट्ठनाम्नो यावति रूपाणि एकरूपहीनानि सति तावदपुनरुक्ताक्षराण्याश्रित्य सख्यातविकल्पं भवति । विवक्षितार्थाभिव्यक्तिनिमित्तपुनरुक्ताक्षरग्रहणे ततोऽधिकप्रमाणमपि भवतीत्यर्थः ॥ ३१६ ॥ अथ श्रुतज्ञानस्य प्रकारांतरेण भेदप्ररूपणार्थं गाथाद्वयमाह—

स० चं०—अनक्षरात्मक श्रुतज्ञानके भेद पर्याय अर पर्यायसमास, तीहिं विषैं जघन्यसौं लगाइ उत्कृष्ट पर्यंत असंख्यातलोक प्रमाण ज्ञानके भेद हो हैं ते भेद असंख्यात लोक बार षट्स्थानपतित वृद्धिकौं लीए हैं। बहुरि अक्षरात्मक श्रुतज्ञान है सो द्विरूप वर्गधाराविषैं जो एकट्ठी नामा छठा स्थानक कह्या तामैं एक घटाएं जो प्रमाण रहै तितने अपुनरुक्त अक्षर हैं तिनकी अपेक्षा संख्यात भेद लीएं है। विवक्षित अर्थकौं प्रकट करने निमित्त बार बार जिन अक्षरनिकौं कहिए ऐसे पुनरुक्त अक्षरनिका प्रमाण अधिक संभवै है सो कथन आगैं होइगा ॥३१६॥ आगैं श्रुतज्ञानका अन्य प्रकार करि भेद कहनेके निमित्त दोय गाथा कहैं हैं—

**पज्जायक्खरपदसंघादं पडिवत्तियाणिजोगं च ।**
**दुगवारपाहुडं च य पाहुडयं वत्थुपुव्वं च ॥ ३१७ ॥**

जी०प्र०—अत्र अर्थपदं प्रमाणपदं मध्यमपदं चेति पदं त्रिविधं तत्र यावताक्षरसमूहेन विवक्षितार्थो ज्ञायते तदर्थपदं दंडेन शालिभ्यो गां निवारय, त्वमग्निमानय इत्यादयः। अष्टाक्षरादिसंख्यया निष्पन्नोऽक्षरसमूहः प्रमाणपदं 'नमः श्रीवर्धमानाय' इत्यादि। षोडशशतचतुस्त्रिंशत्कोट्यः त्र्यशीतिलक्षाणि सप्तसहस्राणि अष्टशतानि अष्टाशीतिश्च पदवर्णाः इत्येतद्गाथोक्तप्रमाणैकपदाऽपुनरुक्ताक्षरसमूहो मध्यमपदं १६३४८३०७८८८। हीनाधिकयोः प्रमाणपदार्थपदयोर्मध्ये एतदुक्तसंख्यापरिमिताक्षरसमूहे वर्तमानत्वात् मध्यमपदं इत्यन्वर्थतया परमागमे तदेव परिगृहीतं, प्रमाणपदार्थे तु लोकव्यवहारे परिगृहीते। अत एव लोकोत्तरे परमागमे मध्यमपदमेव पदमिति व्यवह्रियते ॥ ३३६ ॥ अथ संघातश्रुतज्ञानं प्ररूपयति—

मं० प्र०—त्रिविध पद—अर्थपद प्रमाणपद मध्यमपदमिति, तत्र यावता अक्षरसमूहेन विवक्षितार्थो ज्ञायते तदर्थपदं 'गामभ्याज शुक्लां दंडेन, अग्निमानय' इत्यादि। प्रमाणेन अष्टाक्षरादिसंख्यया निष्पन्नः अक्षरसमूहः प्रमाणपद नमः श्रीवर्धमानाय इत्यादि। षोडशशतचतुस्त्रिंशत्कोट्यः त्र्यशीतिर्लक्षाणि सप्तसहस्राणि अष्टशतानि अष्टाशीतिश्च एकस्य पदस्य वर्णाः अपुनरुक्ताक्षराणीति गाथोक्तप्रमाणाक्षरसमूहो मध्यमपदं। १६३४८३०७८८८। प्रमाणपदार्थपदयोर्हीनाधिकमानयोर्मध्ये उक्तसंख्याक्षरपरिमितसमूहे वर्तमानत्वात् मध्यमपदं इत्यन्वर्थतया परमागमे तदेव परिगृहीत। प्रमाणपदार्थपदे तु लोकव्यवहारे परिगृहीते, अत एव लोकोत्तरे परमागमे मध्यपदमेव 'पदं' इति व्यवह्रियते ॥ ३३६ ॥ अथ संघातश्रुतज्ञानं प्ररूपयति—

स० चं०—पद तीन प्रकार है अर्थपद १ प्रमाणपद २ मध्यमपद ३ तहां जिहिं अक्षर समूहकरि विवक्षित अर्थ जानिये सो तौ अर्थपद कहिये जैसें कह्या कि 'गामभ्याज शुक्लां दंडेन' इहां इस शब्दके च्यारि पद हैं—गां १ अभ्याज २ शुक्लां ३ दंडेन ४ ये च्यारि पद भए। अर्थ याका यहु जो—गायकौं घेरि सुफेदकौं दंड करि। ऐसें कह्या कि 'अग्निमानय' इहां दोय पद भए अग्निं १ आनय २। अर्थ यहु जो—अग्निको ल्याव। ऐसें विवक्षित अर्थके अर्थी एक दोय आदि अक्षरनिका समूह ताकौं अर्थपद कहिये। बहुरि प्रमाण जो संख्या तिहिंनैं लीएं जो पद कहिये अक्षर समूह ताकौं प्रमाण पद कहिये। जैसें अनुष्टुप छंदके च्यारि पद तहां एक पदके आठ अक्षर होंइ। 'नमः श्रीवर्द्धमानाय' यहु एक पद भया। याका अर्थ यहु जो श्रीवर्धमान स्वामीके अर्थि नमस्कार होहु ऐसैं प्रमाणपद जानना। बहुरि सोलासै चौतीस कोडि तियासी लाख सात हजार आठसै अठ्यासी। १६३४८३०७८८८। गाथाविषैं कहे अपुनरुक्त अक्षर तिनिका समूह सो मध्यमपद कहिये। इनिविषैं अर्थपद अर प्रमाण पद तौ हीन अधिक अक्षरनिका प्रमाणकौं लीएं लोकव्यवहारकरि ग्रहण

कीएं हैं तातैं लोकोत्तर परमागमविषैं गाथाविषैं कही जो संख्या तीहिंविषैं वर्तमान जो मध्यमपद ताहीका ग्रहण जानना ॥ ३३६ ॥ आगैं संघातनामा श्रुतज्ञानकौं प्ररूपैं हैं–

**एयपदादो उवरिं एगेगेणक्खरेण वड्ढंतो ।**
**संखेज्जसहस्सपदे उड्ढे संघादणाम सुदं ॥ ३३७ ॥**

एकपदादुपरि एकैकेनाक्षरेण वर्धमानाः ।
संख्यातसहस्रपदे वृद्धे संघातनाम श्रुतं ॥ ३३७ ॥

जी० प्र०—एकपदस्य उक्तप्रमाणाक्षरसमूहोपरि एकैकाक्षरवृद्ध्या एकपदाक्षरमात्रेषु पदसमासज्ञानविकल्पेषु गतेषु द्विगुणपदज्ञानं भवति । तस्योपरि पुनरपि एकपदाक्षरमात्रेषु पदसमासज्ञानविकल्पेषु गतेषु त्रिगुणपदज्ञान भवति एवं प्रत्येकमेकपदाक्षरमात्रविकल्पसहचरितेषु चतुर्गुणपदादिषु संख्यातसहस्रगुणितपदमात्रेषु रूपोनेषु पदसमासज्ञानविकल्पेषु गतेषु—

१ २    १   २    १   २    १
प। प प। ० ०। प २। प २। प २। ० ०। प ३। प ३। प ३ ० ० ० प १ ० ० ० ७ उ
१– १
१ ६=    १ ६=    १ ६= १ ० ० ० ७

चरमस्य पदसमासज्ञानोत्कृष्टविकल्पस्य उपरि एकस्मिन्नक्षरे वृद्धे सति संघातश्रुतज्ञानं भवति १६=१०००७ तच्चतसृणां गतीनां मध्ये एकतमगतिस्वरूपनिरूपकमध्यमपदसमुदायरूपसंघातश्रवणजनितार्थज्ञानं ॥ ३३७ ॥ अथ प्रतिपत्तिकश्रुतज्ञानस्वरूपं निरूपयति—

मं० प्र०—एकपदस्य—उक्तप्रमाणाक्षरसमूहस्य, उपरि एकैकाक्षरवृद्ध्या एकपदाक्षरमात्रेषु पदसमासज्ञानविकल्पेषु गतेषु द्विगुणपदज्ञान भवति । तस्योपरि पुनरपि एकपदाक्षरमात्रेषु पदसमासज्ञानविकल्पेषु गतेषु त्रिगुणपदज्ञान भवति एव प्रत्येकमेकपदाक्षरमात्रविकल्पसहचरितेषु चतुर्गुणपदादिषु संख्यातसहस्रगुणितपदमात्रेषु रूपोनेषु पदसमासज्ञानविकल्पेषु गतेषु—

१ २ १ २ १ २

प । प । प ० ० । प २ । प २ । प २ । ० ० प प ३ । प ३ । ० ० ० ० प १ । ० ० ० ७ । उ

१६= १६= १६=१०००७

चरमस्य पदसमासज्ञानोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति संघातश्रुतज्ञानं भवति । १६=१०००७ । तच्च चतसृणां गतीनां मध्ये एकतमगतिस्वरूपनिरूपकमध्यमपदसमुदायरूपसंघातश्रवणजनितार्थज्ञानं ॥ ३३७ ॥ अथ प्रतिपत्तिकश्रुतज्ञानस्वरूपं प्ररूपयति—

स० चं०—एक पदके ऊपरि एक एक अक्षर बंधतें बधतें एक पदका अक्षर प्रमाण पदसमासके भेद भएं पदज्ञान दूणा भया। बहुरि इसतें एक एक अक्षर बंधतें बधतें पदका अक्षर प्रमाण पदसमासके भेद भएं पदज्ञान तिगुणा भया। ऐसैं ही एक एक अक्षरकी बंधवारी लीएं पदका अक्षर प्रमाण पदसमासज्ञानके भेद होत संते चौगुणा पंचगुणा आदि संख्यात हजारकरि गुण्या हूवा पदका प्रमाणमें एक अक्षर घटाइये तहां पर्यंत पदसमासके भेद जानने। पदसमासज्ञानका उत्कृष्ट भेदविषै सोई एक अक्षर मिलायें संघात नामा श्रुतज्ञान हो है सो च्यारि गतिविषैं एक गतिके स्वरूपका निरूपण हारे जो मध्यमपद तिनिका समूहरूप संघात नामा श्रुतज्ञानके सुननेतैं जो अर्थज्ञान भया ताकौं संघात श्रुतज्ञान कहिये ॥ ३३७ ॥ आगैं प्रतिपत्तिक श्रुतज्ञानके स्वरूपकौं कहै हैं—

**एक्कदरगदिणिरूवयसंघादसुदादु उवरि पुव्वं वा ।**
**वण्णे संखेज्जे संघादे उड्ढम्हि पडिवत्ती ॥ ३३८ ॥**

एकतरगतिनिरूपकसंघातश्रुतादुपरि पूर्वं वा ।
वर्णे संख्येये संघाते वृद्धे प्रतिपत्तिः ॥ ३३८ ॥

जी० प्र०—पूर्वोक्तप्रमाणस्य एकतमगतिनिरूपकसंघातश्रुतस्य उपरि पूर्वोक्तप्रकारेण एकैकवर्णवृद्धिसहचरितैकैकपदवृद्धिक्रमेण संख्यातसहस्रपदमात्रसंघातेषु संख्यातसहस्रेषु रूपोनेषु संघातसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य संघातसमासोत्कृष्टविकल्पकस्य १६=१०००७ । १०००७-१

एतस्योपरि एकस्मिन्नक्षरे वृद्धे सति प्रतिपत्तिकं नाम श्रुतज्ञानं भवति १६=१०००७ । १०००७ । तच्च नारकादिचतुर्गतिस्वरूपसविस्तरप्ररूपक- प्रतिपत्तिकाख्यग्रंथश्रवणजनितार्थज्ञानमिति निश्चेतव्यं ॥ ३३८ ॥ अथानुयोगश्रुतज्ञानं प्ररूपयति—

म० प्र०—पूर्वोक्तप्रमाणस्य एकतमगतिनिरूपकसंघातश्रुतस्योपरि पूर्वोक्तप्रकारेण एकैकवर्णवृद्धिसहचरितैकैकपदवृद्धिक्रमेण संख्यातसहस्रपदमात्रसंघा- तेषु संख्यातसहस्रेषु रूपोनेषु संघातसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य संघातसमासोत्कृष्टविकल्पस्य । १६=१०००७ । १०००७-१ । एतस्योपरि ए- कस्मिन्नक्षरे वृद्धे सति प्रतिपत्तिकनाम श्रुतज्ञान भवति १६=१०००७ । १०००७ । तच्च नारकादिचतुर्गतिस्वरूपसविस्तरप्ररूपकप्रतिपत्तिकाख्यग्रंथश्र- वणजनितार्थज्ञानमिति निश्चेतव्यं ॥ ३३८ ॥ अथानुयोगश्रुतज्ञानं प्ररूपयति—

स० चं०—एक गतिका निरूपण करणहारा जो संघातनामा श्रुतज्ञान ताके ऊपरि पूर्वोक्त प्रकारकरि एक एक अक्षरकी वधवारी लीयें एक एक पदकी वृद्धिकरि संख्यात हजार पदका समूहरूप संघात श्रुत होइ । बहुरि इस ही अनुक्रमतैं संख्यात हजार संघात श्रुत होइ तिहिमैंस्यों एक अक्षर घटाइये तहां पर्यंत संघात समासके भेद जानना । बहुरि अंतका संघात समास श्रुतज्ञानका उत्कृष्ट भेदविषैं वह अक्षर मिलाइये तब प्रतिपत्तिक नामा श्रुतज्ञान हो है सो नारकादि च्यारि गतिका स्वरूप विस्तारपनैं निरूपण करनहारा जो प्रतिपत्तिक नामा ग्रंथ ताके सुननेतैं जो अर्थज्ञान भया ताकौं प्रतिपत्तिक श्रुतज्ञान कहिए॥३३८॥ आगैं अनुयोग श्रुतज्ञानकौं प्ररूपै हैं—

**चउगइसरूवरूवयपडिवत्तीदो दु उवरि पुव्वं वा ।**
**वण्णे संखेज्जे पडिवत्तीउड्ढम्हि अणियोगं ॥ ३३९ ॥**

चतुर्गतिस्वरूपप्ररूपकप्रतिपत्तितस्तु उपरि पूर्वं वा ।
वर्णे संख्याते प्रतिपत्तिवृद्धे अनुयोगं ॥ ३३९ ॥

जी० प्र०—चतुर्गतिस्वरूपनिरूपकप्रतिपत्तिकात् परं तस्योपरि प्रत्येकमेकैकवर्णवृद्धिक्रमेण संख्यातसहस्रेषु पदसंघातप्रतिपत्तिकेषु वृद्धेषु रू- पोनतावन्मात्रेषु प्रतिपत्तिकसमासज्ञानविकल्पेषु गतेषु तच्चरमप्रतिपत्तिकसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति अनुयोगाख्यं श्रुतज्ञानं भवति । तच्चतुर्दशमार्गणास्वरूपप्रतिपादकानुयोगसंज्ञशब्दसंदर्भश्रवणजनितार्थज्ञानमित्यर्थः ॥ ३३९ ॥ अथ प्राभृतकप्राभृतकस्य स्वरूपं गाथा- द्वयेन प्ररूपयति—

मं० प्र०—चतुर्गतिस्वरूपप्ररूपकप्रतिपत्तिकात्परं तस्योपरि प्रत्येकमेकैकवर्णवृद्धिक्रमेण संख्यातसहस्रेषु पदसंघातप्रतिपत्तिकेषु वृद्धेषु रूपोनतावन्मात्रेषु प्रतिपत्तिकसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य प्रतिपत्तिकसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति अनुयोगाख्यं श्रुतज्ञानं भवति तत्र चतुर्दशमार्गणास्वरूपप्रतिपादकानुयोगसंज्ञशब्दसंदर्भश्रवणजनितार्थज्ञानमित्यर्थः ॥ ३३९ ॥ अथ प्राभृतप्राभृतकस्य गाथाद्वयेन स्वरूपं प्ररूपयति—

स० चं०—च्यारि गतिके स्वरूपका निरूपण करणहारा प्रतिपत्तिक श्रुतज्ञानके ऊपरि प्रत्येक एक अक्षरकी वृद्धि लीयें संख्यात हजार पदनिका समुदायरूप संख्यात हजार संघात अर संख्यात हजार संघातनिका समूह प्रतिपत्तिक सो अैसें प्रतिपत्तिक संख्यात हजार होइ तिनिविषैं एक अक्षर घटाइये तहां पर्यंत प्रतिपत्तिक समास श्रुतज्ञानके भेद भए। बहुरि तिसका अंत भेदविषैं वह एक अक्षर मिलायें अनुयोग नामा श्रुतज्ञान भया सो चौदै मार्गणाके स्वरूपका प्रतिपादक अनुयोग नामा श्रुत ताके सुननेतैं जो अर्थज्ञान भया ताकौं अनुयोग नामा श्रुतज्ञान कहिए ॥ ३३९ ॥ आगै प्राभृतप्राभृतकौं दोय गाथानिकरि कहै हैं—

**चोद्दसमग्गणसंजुदअणियोगादुवरि वड्ढिदे वण्णे ।**
**चउरादीअणियोगे दुगवारं पाहुडं होदि ॥ ३४० ॥**

चतुर्दशमार्गणासंयुतानुयोगादुपरि वर्धिते वर्णे ।
चतुराद्यनुयोगे द्विकवारं प्राभृतं भवति ॥ ३४० ॥

जी० प्र०—चतुर्दशमार्गणासंयुतानुयोगात्परं तस्योपरि पूर्वोक्तक्रमेण प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिश्चतुराद्यनुयोगेषु संवृद्धेषु सत्सु रूपोनतावन्मात्रानुयोगसमासज्ञानविकल्पेषु गतेषु तच्चरमानुयोगसमासोत्कृष्टविकल्पस्योपरि एकाक्षरवृद्धौ सत्यां द्विकवारप्राभृतकं नाम श्रुतज्ञानं भवति ॥ ३४० ॥

मं० प्र०—चतुर्दशमार्गणासंयुतानुयोगात्पर तस्योपरि पूर्वोक्तक्रमेण प्रत्येकं—एकैकवर्णवृद्धिसहचरितपदादिवृद्ध्या चतुरादिषु अनुयोगेषु वृद्धेषु रूपोनतावन्मात्रेष्वनुयोगसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य अनुयोगसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति द्विकवारप्राभृतक—प्राभृतकप्राभृतकं भवति।३४०।

स० चं०—चौदह मार्गणाकरि संयुक्त जो अनुयोग ताके ऊपरि प्रत्येक एक एक अक्षरकी वृद्धिकरि संयुक्त

पद संघात प्रतिपत्तिक इनिकी पूर्वोक्त अनुक्रमतैं वृद्धि होतैं च्यारि आदि अनुयोगनिकी वृद्धिविषैं एक अक्षर घटाइये तहां पर्यंत अनुयोग समासके भेद भए। बहुरि तिनिका अंत भेदविषैं वह एक अक्षर मिलायें प्राभृत प्राभृतक नामा श्रुतज्ञान हो है ॥ ३४० ॥

**अहियारो पाहुडयं एयट्ठो पाहुडस्स अहियारो ।**
**पाहुडपाहुडणामं होदित्ति जिणेहिं णिद्दिट्ठं ॥ ३४१ ॥**

अधिकारः प्राभृतमेकार्थः प्राभृतस्याधिकारः ।
प्राभृतप्राभृतनामा भवति इति जिनैर्निर्दिष्टं ॥ ३४१ ॥

जी० प्र०—वस्तुनामश्रुतज्ञानस्य अधिकारः प्राभृतकं चेति द्वौ एकार्थौ। प्राभृतकस्य अधिकारोऽपि प्राभृतकप्राभृतकनामा भवति ततः कारणात् एकार्थः पर्यायशब्दः इति जिनैः—अर्हद्भट्टारकैः निर्दिष्टं न स्वरुचिविरचितमित्यर्थः ॥ ३४१ ॥ द्विकवारप्राभृतानंतरं प्राभृतकस्वरूपं प्ररूपयति—

म० प्र०—वस्तुनः अधिकारः प्राभृतक, प्राभृतकप्राभृतकस्याधिकारः प्राभृतकनामा भवतीति एकार्थः—पर्यायशब्दः इति जिनैर्निर्दिष्ट न स्वरुचिविरचितमित्यर्थः ॥ ३४१ ॥ अथ प्राभृतकस्वरूप प्ररूपयति—

स० चं०—आगें कहियेगा जो वस्तु नामा श्रुतज्ञान ताका जो एक अधिकार ताहीका नाम प्राभृत कहिये बहुरि जो उस प्राभृतकका एक अधिकार ताका नाम प्राभृतकप्राभृतक कहिये ऐसैं जिनदेवने कह्या है ॥३४१॥ आगैं प्राभृतकका स्वरूप कहैं हैं—

**दुगवारपाहुडादो उवरिं वण्णे कमेण चउवीसे ।**
**दुगवारपाहुडे संउड्ढे खलु होदि पाहुडयं ॥ ३४२ ॥**

द्विकवारप्राभृतादुपरि वर्णे क्रमेण चतुर्विंशतौ ।

द्विकवारप्राभृते संवृद्धे खलु भवति प्राभृतकं ॥ ३४२ ॥

जी० प्र०—द्विकवारप्राभृतकात्पर तस्योपरि पूर्वोक्तक्रमेण प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिः चतुर्विंशतिप्राभृतकप्राभृतकेषु वृद्धेषु रूपोनतावन्मात्रेषु प्राभृतकप्राभृतकज्ञानविकल्पेषु गतेषु तच्चरमसमासोत्कृष्टविकल्पकस्य उपरि एकाक्षरवृद्धौ सत्यां प्राभृतकं नाम श्रुतज्ञानं भवति॥३४२॥ अथ वस्तुनामश्रुतज्ञानस्वरूपमाह—

म० प्र०—द्विकवारप्राभृतकात्पर तस्योपरि पूर्वोक्तप्रकारेण प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धया चतुर्विंशतिप्राभृतकप्राभृतकेषु वृद्धेषु रूपोनतावन्मात्रेषु प्राभृतकप्राभृतकसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य उत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति प्राभृतकं नाम श्रुतज्ञानं भवति ॥ ३४२ ॥ अथ वस्तुस्वरूपं प्ररूपयति—

स० चं०—द्विकवार प्राभृतक जो प्राभृतक प्राभृतक ताकै ऊपरि पूर्वोक्त अनुक्रमतैं एक एक अक्षरकी वृद्धि लीयें चौवीस प्राभृतक प्राभृतकानिकी वृद्धिविषैं एक अक्षर घटाइये तहां पर्यंत प्राभृतक प्राभृतक समासके भेद जानने। बहुरि ताका अंत भेदविषैं वह एक अक्षर मिलायें प्राभृतक नामा श्रुतज्ञान हो है। भावार्थ—एक एक प्राभृतक नामा अधिकारविषैं चौबीस चौबीस प्राभृतक प्राभृतक नामा अधिकार हो है ॥ ३४२॥ आगैं वस्तु नामा श्रुतज्ञानकौं प्ररूपै हैं—

## वीसं वीसं पाहुडअहियारे एक्कवत्थुअहियारो ।
## एक्केक्कवण्णउड्ढी कमेण सव्वत्थ णायव्वा ॥ ३४३ ॥

विंशतौ विंशतौ प्राभृताधिकारे एको वस्त्वधिकारः ।
एकैकवर्णवृद्धिः क्रमेण सर्वत्र ज्ञातव्या ॥ ३४३ ॥

जी० प्र०—पूर्वोक्तप्राभृतकस्याग्रे तदुपरि पूर्वोक्तक्रमेण एकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिः विंशतिप्राभृतकनामाधिकारेषु संवृद्धेषु सत्सु रूपोनतावन्मात्रेषु प्राभृतकसमासज्ञानविकल्पेषु गतेषु तच्चरमप्राभृतकसमासोत्कृष्टविकल्पस्योपरि एकाक्षरे वृद्धौ सत्यां एकं वस्तुनामाधिकारश्रुतज्ञानं भवति। वीसं वीसमिति उत्पादादिपूर्वाश्रितवस्तुवस्तुसमूहवीप्सायां द्विर्वचनमुक्तं। सर्वत्राक्षरसमासप्रथमविकल्पात् प्रभृति पूर्वसमासोत्कृष्टविक-

ल्पपर्यंतेषु क्रमेण पर्यायाक्षरपदसंघातेत्यादिपरिपाट्या एकैकवर्णवृद्धिः इदमुपलक्षणं, तेन एकैकवर्णपदसंघातादिवृद्धयो ज्ञातव्याः । एतत्सूत्रानुसारेण वृत्तौ तथा लिखितं ॥३४३॥ अथ गाथात्रयेण पूर्वनामश्रुतज्ञानस्वरूपं प्ररूपयंस्तदवयवभूतोत्पादपूर्वादिचतुर्दशपूर्वाणामुत्पत्तिक्रमं दर्शयति—

मं० प्र०—तस्मात्प्राभृतकात्परं प्राभृतकस्योपरि पूर्वोक्तक्रमेण एकैकवर्णवृद्धिसहचारितपदादिवृद्ध्या विंशतौ प्राभृतकनामाधिकारेषु वृद्धेषु प्राभृतकसमासज्ञानविकल्पेषु रूपोनतावन्मात्रेषु गतेषु तच्चरमस्य प्राभृतकसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति एको वस्तुनामाधिकारो भवति । वीसं वीसामिति उत्पादादिपूर्वाश्रितवस्तुसमूहवीप्सायां द्विर्वचनमुक्तं । सर्वत्राक्षरसमासप्रथमविकल्पात्प्रभृति पूर्वसमासोत्कृष्टविकल्पपर्यंतेषु क्रमेण पर्यायाक्षरपदसंघातेत्यादिपरिपाट्या एकैकवर्णवृद्धिः। इदमुपलक्षण, तेन एकैकवर्णपदसंघातादिवृद्धिर्ज्ञातव्या । एतत्सूत्रानुसारेण वृत्तावपि तथैव लिखितं ॥३४३॥ अथ गाथात्रयेण पूर्वस्वरूपं प्ररूपयति—

स० चं०—तिहिं प्राभृतकके ऊपर पूर्वोक्त अनुक्रमतैं एक एक अक्षरकी वृद्धिनै लीएं पदादिककी वृद्धिकरि संयुक्त बीस प्राभृतककी वृद्धि होतैं संतै वामैं एक अक्षर घटाइये तहां पर्यंत प्राभृतक समासके भेद जानने । बहुरि ताका अंत भेदविषैं वह एक अक्षर मिलायें वस्तु नामा अधिकार हो है । भावार्थ—पूर्वसंबंधी एक एक वस्तु नामा अधिकारविषैं बीस बीस प्राभृतक पाइये है । बहुरि सर्वत्र अक्षर समासका प्रथम भेदतैं लगाइ पूर्वसमासका उत्कृष्ट भेदपर्यंत अनुक्रमतैं एक एक अक्षर वधावना । बहुरि पदका वधावना बहुरि समासका वधावना इत्यादिक परिपाटीकरि यथासंभव वृद्धि सर्वनिविषैं जानना सो सूत्रके अनुसारि व्याख्यान टीकाविषैं करते ही आये हैं ॥ ३४३ ॥ आगैं तीन गाथानिकरि पूर्वनामा श्रुतज्ञानकौं कहैं हैं—

**दसचोदसट्ठ अट्ठारसयं वारं च वार सोलं च ।**
**वीसं तीसं पण्णारसं च दस चदुसु वत्थूणं ॥ ३४४ ॥**

दश चतुर्दशाष्ट अष्टादशकं द्वादश च द्वादश षोडश च ।
विंशतिः त्रिंशत् पंचदश च दश चतुर्षु वस्तूनां ॥ ३४४ ॥

जी० प्र०—पूर्वोक्तवस्तुश्रुतज्ञानस्य उपरि प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिः वक्ष्यमाणोत्पादादिचतुर्दशपूर्वाधिकारेषु यथासंख्यं दशचतुर्दशाष्टाष्टादशद्वादशद्वादशषोडशविंशतित्रिंशत्पंचदशदशदशदशदशवस्तुषु वृद्धेषु सत्सु— ॥ ३४४ ॥

मं० प्र०—तस्माद्वस्तुनः परं वस्तुन उपरि प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्ध्या वक्ष्यमाणोत्पादादिचतुर्दशपूर्वाधिकारेषु यथासंख्यं दशचतुर्दशाष्टाष्टादशद्वादशद्वादशषोडशविंशतित्रिंशत्पंचदशदशदशदशदशवस्तुषु वृद्धेषु रूपोनतावन्मात्रवस्तुसमासज्ञानविकल्पेषु गतेषु तच्चरमाणां वस्तुसमासोत्कृष्टविकल्पाना चतुर्दशानामुपरि प्रत्येकमेकैकास्मिन्नक्षरे वृद्धे सति—॥३४४॥

स० च०—तिहि वस्तु श्रुतके ऊपरि एक एक अक्षरकी वृद्धि लीएं अनुक्रमतैं पदादिककी वृद्धिकरि संयुक्त क्रमतैं दश आदि वस्तुनिकी वृद्धि होतसंतै उनमैंसौं एक एक अक्षर घटावनै पर्यंत वस्तु समासके भेद जाननें। बहुरि तिनके अंत भेदनिविषैं अनुक्रमतैं एक एक अक्षर मिलाएं चौदह पूर्वनामा श्रुतज्ञान होइ तहां आगैं कहिए हैं उत्पाद नामा पूर्व आदि चौदह पूर्व तिनिविषैं अनुक्रमतैं दश १० चौदह १४ आठ ८ अठारह १८ बारह १२ बारह १२ सोलह १६ बीस २० तीस ३० पंद्रह १५ दश १० दश १० दश १० दश १० वस्तु नामा अधिकार पाइए है ॥ ३४४ ॥

**उप्पायपुव्वगाणियविरियपवादत्थिणत्थियपवादे ।**
**णाणासच्चपवादे आदाकम्मप्पवादे य ॥ ३४५ ॥**
**पच्चाक्खाणे विज्जाणुवादकल्लाणपाणवादे य ।**
**किरियाविसालपुव्वे कमसोथ तिलोयबिंदुसारे य ॥३४६॥**

उत्पादपूर्वाग्रायणीयवीर्यप्रवादास्तिनास्तिकप्रवादानि ।
ज्ञानसत्यप्रवादे आत्मकर्मप्रवादे च ॥ ३४५ ॥

प्रत्याख्यानं वीर्यानुवादकल्याणप्राणवादानि च ।
क्रियाविशालपूर्वं क्रमशः अथ त्रिलोकबिंदुसारं च ॥ ३४६ ॥

जी० प्र०—यथाक्रमं उत्पादपूर्वं आग्रायणीयपूर्वं वीर्यप्रवादपूर्वं अस्तिनास्तिप्रवादपूर्वं ज्ञानप्रवादपूर्वं सत्यप्रवादपूर्वं आत्मप्रवादपूर्वं कर्मप्रवादपूर्वं प्रत्याख्यानपूर्वं विद्यानुवादपूर्वं कल्याणवादपूर्वं प्राणावादपूर्वं क्रियाविशालपूर्वं त्रिलोकबिंदुसारपूर्वं चेति चतुर्दशपूर्वाणि भवंति । एतेषु पूर्वोक्तवस्तुश्रुतज्ञानस्य उपरि—अग्रे प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्ध्या दशवस्तुप्रमितवस्तुसमासज्ञानविकल्पेषु गतेषु रूपोनैतावन्मात्रवस्तुश्रुतसमासज्ञानविकल्पेषु चरमवस्तुसमासोत्कृष्टविकल्पस्योपरि एकाक्षरवृद्धौ सत्यां उत्पादपूर्वश्रुतज्ञानं भवति । ततः उत्पादपूर्वश्रुतज्ञानस्य उपरि प्रत्येकमेकैकाक्षरवृद्धिसहचरितपदादिवृद्ध्या चतुर्दशवस्तुषु वृद्धेषु रूपोनतावन्मात्रोत्पादपूर्वसमासज्ञानविकल्पेषु गतेषु तच्चरमोत्कृष्टोत्पादपूर्वसमासज्ञानविकल्पस्य उपरि एकाक्षरवृद्धौ सत्यां अग्रायणीयपूर्वश्रुतज्ञानं भवति । एवमग्रेऽग्रेऽष्टादशद्वादशद्वादशषोडशविंशतित्रिंशत्पंचदशदशदशदशदशवस्तुषु क्रमेण वृद्धेषु रूपोनतावन्मात्रतावन्मात्रतत्तत्पूर्वसमासज्ञानविकल्पेषु गतेषु तत्तत्पूर्वसमासोत्कृष्टज्ञानविकल्पस्योपरि एकैकाक्षरे वृद्धे सति तत्तद्वीर्यप्रवादपूर्वास्तिनास्तिप्रवादपूर्वज्ञानप्रवादपूर्वसत्यप्रवादपूर्वात्मप्रवादपूर्वकर्मप्रवादपूर्वप्रत्याख्यानपूर्वविद्यानुवादपूर्वकल्याणवादपूर्वप्राणवादपूर्वक्रियाविशालपूर्वत्रिलोकबिंदुसारपूर्वनामश्रुतज्ञानान्युत्पद्यंते । अत्र त्रिलोकबिंदुसारस्य तु समासो नास्ति उत्तरज्ञानविकल्पाभावात् ॥ ३४५ ॥ ३४६ ॥ अथ चतुर्दशपूर्वगतवस्तुप्राभृतकसंख्यां कथयति—

मं० प्र०—यथाक्रमं उत्पादाग्रायणीयवीर्यप्रवादास्तिनास्तिप्रवादज्ञानप्रवादसत्यप्रवादात्मप्रवादकर्मप्रवादप्रत्याख्यानविद्यानुवादकल्याणप्राणावायक्रियाविशालत्रिलोकबिंदुसारनामानि चतुर्दशपूर्वाणि भवंति । चशब्दाः समुच्चयार्थाः । तस्मात् पूर्वापर प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्ध्या चतुर्दशसु पूर्वेषु मिलितेषु तावन्मात्राः पूर्वसमासज्ञानविकल्पा भवति ॥ ३४५–३४६ ॥ अथ चतुर्दशपूर्वसर्ववस्तुप्राभृतकसंख्या प्ररूपयति—

स० चं०—चौदह पूर्वनिके नाम अनुक्रमतैं ऐसैं जानने । उत्पाद १ आग्रायणीय १ वीर्यप्रवाद १ अस्ति नास्ति प्रवाद १ ज्ञानप्रवाद १ सत्यप्रवाद १ आत्मप्रवाद १ कर्मप्रवाद १ प्रत्याख्यानप्रवाद १ विद्यानुवाद १ कल्याणवाद १ प्राणवाद १ क्रियाविशाल १ त्रिलोकबिंदुसार १ ये चौदह पूर्वनिके नाम जानने । इनिके लक्षण आगें कहेंगे—इहां ऐसैं जानना पूर्वोक्त वस्तुश्रुतज्ञानके ऊपरि क्रमतैं एक एक अक्षरकी वृद्धि लीएं पदादिककी वृद्धि होतैं दश वस्तु प्रमाणमेंस्यों एक अक्षर घटाइए तहां पर्यंत वस्तु समासज्ञानके भेद हैं । ताके अंत भेदविषैं वह एक अक्षर मिलाएं उत्पाद पूर्वनामा श्रुतज्ञान हो है । बहुरि उत्पादपूर्व श्रुतज्ञानके ऊपरि एक एक अक्षर-

अक्षरकी वृद्धि लीयें पदादिकी वृद्धिसंयुक्त चौदहवस्तु होंहि। तामैं एक अक्षर घटाइये तहां पर्यंत उत्पादपूर्व समासके भेद जानने ताके अंतभेदविषैं वह एक अक्षरबंधै अग्रायणीय पूर्वनामा श्रुतज्ञान होहै ऐसैंही क्रमतैं आगैं आगैं आठ आदि वस्तुकी वृद्धि होतैं तहां एक अक्षर घटावने पर्यंत तिस तिसपूर्व समासके भेद जानने। तिस तिसका अंत भेदविषै सो सो एक अक्षर मिलाएं वीर्यप्रवाद आदि पूर्वनामा श्रुतज्ञान हो है। अंतका त्रिलोक विंदुसार नामा पूर्व आगैं ताकौ समासके भेद नाहीं है जातैं याके आगैं श्रुतज्ञानके भेदका अभाव है।३४५। ३४६॥ आगैं चौदह पूर्वनिविषै वस्तुनाम अधिकारनिकी वा प्राभृतनामा अधिकारनिकी संख्या कहै हैं—

**पणणउदिसया वत्थू पाहुडया तियसहस्सणवयसया।**
**एदेसु चोद्दसेसु वि पुव्वेसु हवंति मिलिदाणि॥ ३४७॥**

पंचनवतिशतानि वस्तूनि प्राभृतकानि त्रिसहस्रनवशतानि।
एतेषु चतुर्दशस्वपि पूर्वेषु भवंति मिलितानि॥ ३४७॥

जी० प्र०—उत्पादपूर्वमादिं कृत्वा त्रिलोकविंदुसारावसानेषु चतुर्दशपूर्वेषु वस्तूनि सर्वाणि मिलित्वा पंचनवत्युत्तरशतप्रमितानि १९५ भवंति प्राभृतकानि तु सर्वाणि मिलित्वा नवशतोत्तरत्रिसहस्रप्रमितानि भवंति ३९०० । वस्तुसंख्यायां विंशत्या गुणितायां तत्संख्यासंभवात् ॥ ३४७॥ अथ पूर्वोक्तविंशतिविधश्रुतज्ञानविकल्पोपसंहारं गाथाद्वयेनाह—

मं० प्र०—एतेषु उत्पादपूर्वादिषु त्रिलोकविंदुसारपर्यंतेषु चतुर्दशसु पूर्वेषु वस्तूनि सर्वाणि मिलितानि पंचनवत्युत्तरशतसंख्यानि १९५। प्राभृतकानि तु सर्वाणि मिलितानि नवशतोत्तरत्रिसहस्रसंख्यानि भवति ३९०० वस्तुसंख्याया विंशत्या गुणिताया प्राभृतकसंख्यासंभवात् ॥ ३४७॥ अथ पूर्वोक्तविंशतिविधश्रुतज्ञानविकल्पोपसंहार गाथाद्वयेन प्ररूपयति—

स० चं०—जो उत्पाद आदि त्रिलोकविंदुसार पर्यंत चौदह पूर्व तिनिविषैं मिलाए हुवे दश आदि वस्तु नामा अधिकार सर्व एकसौ पिच्याणवै १९५ हो हैं। बहुरि एक एक वस्तुविषैं वीस वीस प्राभृत कहे ते सर्व प्राभृतक

उपसंहार दोय गाथानिकरि कहै हैं—

**अत्थक्खरं च पदसंघातं पडिवत्तियाणिजोगं च ।**
**दुगवारपाहुडं च य पाहुडयं वत्थु पुव्वं च ॥ ३४८ ॥**
**कमवण्णुत्तरवड्ढिय ताण समासा य अक्खरगदाणि ।**
**णाणवियप्पे वीसं गंथे बारस य चोद्दसयं ॥ ३४९ ॥**

अर्थाक्षरं च पदसंघातं प्रतिपत्तिकानुयोगं च ।
द्विकवारप्राभृतं च च प्राभृतकं वस्तु पूर्वं च ॥ ३४८ ॥
क्रमवर्णोत्तरवर्धिते तेषां समासाश्च अक्षरगताः ।
ज्ञानविकल्पे विंशतिः ग्रंथे द्वादश च चतुर्दशकं ॥ ३४९ ॥

जी० प्र०—अर्थाक्षरं रूपोनैकट्ठविभक्तश्रुतकेवलमात्रमेकाक्षरज्ञानं के $\frac{?}{१८=}$ तच्च तथा पदं च संघातं प्रतिपत्तिकं अनुयोगं द्विकवारप्राभृतकं प्राभृतकं वस्तु, पूर्वं चेति नव पुनः एषामेव नवानां क्रमवर्णोत्तरवर्धिताः समासाश्च नव एवमष्टादशभेदा अक्षरगतद्रव्यश्रुतविकल्पा भवंति। तद्द्रव्यश्रुतश्रवणसंजनितश्रुतज्ञानमेव पुनः अनक्षरात्मकपर्यायपर्यायसमासज्ञानद्वययुतं सत् विंशतिविधं श्रुतज्ञानं भवति। ग्रंथे शास्त्रसंदर्भे विवक्षिते सति आचारांगादिद्वादशांगविकल्प उत्पादपूर्वादिचतुर्दशपूर्वभेदं च द्रव्यश्रुतं तच्छ्रवणसंजनितज्ञानस्वरूपं भावश्रुतं। चशब्दात् अंगबाह्यसामायिकादिचतुर्दशप्रकीर्णकभेदद्रव्यभावात्मकश्रुतं पुद्गलद्रव्यरूपं वर्णपदवाक्यात्मकं द्रव्यश्रुतं, तच्छ्रवणसमुत्पन्नश्रुतज्ञानपर्यायरूपं भावश्रुतं च समुच्चीयते इति आचार्यस्य अभिप्रायः। पर्यायादिशब्दानां निरुक्तिः प्रदर्श्यते। तद्यथा—परीयंते व्याप्यंते सर्वे जीवा अनेनेति पर्यायः-सर्वजघन्यज्ञानं, ईदृशज्ञानरहितस्य जीवस्याभावात्। केवलज्ञानवत्स्वपि तत्संभवात् महासंख्यायां कोट्यादौ एकाद्यल्पसंख्यावत्। अक्षाय-श्रोत्रेंद्रियाय राति ददाति स्वमर्पयतीत्यक्षरं। पद्यते गच्छति जानात्यर्थमात्मा

अनेनेति पदं । सं—संक्षेपेण एकदेशेन हन्यते गम्यते ज्ञायते एका गतिः अनेनेति संघातः । प्रतिपद्यंते सामस्त्येन ज्ञायंते चतस्रो गतयः अनयेति प्रतिपत्तिः, संज्ञायां कप्रत्ययविधानात् प्रतिपत्तिकः, अनु गुणस्थानानुसारेण गत्यादिषु मार्गणासु युज्यंते संबध्यंते जीवा अस्मिन्ननेनेति चानुयोगः । प्रकर्षेण—नामस्थापनाद्रव्यभावनिर्देशस्वामित्वसाधनाधिकरणस्थितिविधान-सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वादिविशेषेण वस्त्वधिकारार्थैराभृतं परिपूर्णं प्राभृतं-वस्तुनोऽधिकारः, प्राभृतमिति संज्ञा अस्यास्तीति प्राभृतकं, प्राभृतकस्याधिकारः प्राभृतकप्राभृतकं वसंति पूर्वमहार्णवस्य अर्थाः एकदेशेन संत्यस्मिन्निति वस्तु । पूर्वाधिकारः पूरयति श्रुतार्थान् संविभर्त्तीति पूर्वं । सं—संगृह्य पर्यायादीनि पूर्वपर्यंतानि स्वीकृत्य अस्यंते क्षिप्यंते विकल्प्यंते इति समासाः । पर्यायज्ञानादुत्तरविकल्पाः पर्यायसमासाः । अक्षरज्ञानादुत्तरविकल्पा अक्षरसमासाः । एवमग्रेऽपि सर्वत्र पदसमासादयो योज्याः । अत्र पूर्वाणि १४, वस्तूनि १९५, प्राभृतकानि ३९००, द्विकवारप्रभृतकानि ९३६००, अनुयोगाः ३७४४००, प्रतिपत्तिकसंघातपदानि संख्यातसहस्रगुणितक्रमाणि एकपदाक्षराणि १६३४८३०७८८८, समस्ताक्षराणि रूपोनैकट्ठप्रमितानि १८४४६७४४०-७३७०९५५१६१५ । एतेष्वक्षरेषु एकपदाक्षरैः प्रमाणितेषु यल्लब्धं तद्द्वादशांगपदप्रमाणं शेषमंगबाह्याक्षराणि ॥ ३४८–३४९ ॥ तत्र प्रथमं तत्पदप्रमाणमाह—

मं० प्र०—अर्थाक्षरं रूपोनैकट्ठविभक्तश्रुतकेवलमात्रमेकमक्षरं अर्थाक्षरं । अर्थाक्षरं च पदं च संघातश्च प्रतिपत्तिकश्च अनुयोगश्च प्राभृतकप्राभृतकं च प्राभृतकं च वस्तु च पूर्वं च तेषामक्षरादीनां नवानां क्रमवर्णोत्तरवर्धितसमासाश्च नवेत्यष्टादशभेदा अक्षरगता द्रव्यश्रुतविकल्पा भवंति । ज्ञाने—तद्द्रव्यश्रुतश्रवणसंजनितश्रुतज्ञाने विवक्षिते अनक्षरात्मकपर्यायपर्यायसमासज्ञानद्वयेन सह विंशतिविकल्पं श्रुतज्ञानं भवति । ग्रंथे शास्त्रसंदर्भे विवक्षिते द्वादशविकल्पं आचारांगादिद्वादशागभेद, उत्पादपूर्वादिचतुर्दशपूर्वकं च द्रव्यश्रुतं तच्छ्रवणजनितज्ञानस्वरूपं भावश्रुतं च । चशब्देन अंगबाह्यं सामायिकादिचतुर्दशप्रकीर्णकभेदमपि द्रव्यभावश्रुत समुच्चीयते । पुद्गलद्रव्यरूप वर्णपदवाक्यात्मकं द्रव्यश्रुतं तच्छ्रवणसमुत्पन्नश्रुतज्ञानपर्यायरूपं भावश्रुतमित्याचार्यस्य तात्पर्यं । पर्यायादिशब्दानां निरुक्तिः प्रदर्श्यते । तद्यथा—परीयंते—व्याप्यते सर्वे जीवा अनेनेति पयायः-सर्वजघन्यं ज्ञानं । ईदृशज्ञानरहितस्य जीवस्यैवाभावात् । केवलज्ञानवत्स्वपि जीवेषु तत्संभवत्येव महासख्यायां कोट्यादौ एकाद्यल्पसंख्यावत् । अक्षाय-श्रोत्रेंद्रियाय, राति ददाति, स्वमर्पयतीत्यक्षरं, । पद्यते—गच्छति जानात्यर्थमात्मा अनेनेति पदं । सं—संक्षेपेण—एकदेशेन हन्यते- गम्यते ज्ञायते एका गतिरनेनेति सघातः । प्रतिपद्यंते सामस्त्येन ज्ञायंते चतस्रो गतयः अनयेति प्रतिपत्तिः । संज्ञाया कप्रत्ययविधानात्प्रतिपत्तिकः । अनु—गुणस्थानानुसारेण गत्यादिषु मार्गणासु, युज्यते सबंध्यंते जीवाः अस्मिन्ननेनेति वा अनुयोगः । प्रकर्षेण नामस्थापनाद्रव्यभावनिर्देशस्वामित्वसाधनाधिकरणस्थितिविधानसत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वादिविशेषेण वस्त्वधिकारार्थैराभृतं परिपूर्णं प्राभृतं वस्तुनोऽधिकारः । प्राभृतमिति संज्ञास्यातीति प्राभृतकं । प्राभृतकस्य अधिकारः प्राभृतकप्राभृतकं । वसंति पूर्वमहार्णवस्य अर्थाः एकदेशेन संत्यस्मिन्निति वस्तु । पूर्वाधिकारः—पूरयति श्रुतार्थान् संभिनत्तीति पूर्वं । सं सगृह्य पर्यायादीनि पूर्वपर्यंतानि स्वीकृत्य अस्यते क्षिप्यते विकल्प्यंते इति समासाः । पर्यायज्ञानादुत्तरविकल्पाः पर्यायसमासाः अक्षरज्ञानादुत्तरविकल्पा अक्षरसमासाः एवमुत्तरत्रापि पदसमासादयो योज्याः ॥३४८–३४९॥ अथ द्वादशांगपदसख्यां प्ररूपयति—

स० चं०---अर्थाक्षर १ पद २ संघात ३ प्रतिपत्तिक ४ अनुयोग ५ प्राभृतकप्राभृतक ६ प्राभृतक ७ वस्तु ८ पूर्व ९ ए नव भेद बहुरि एक एक अक्षरकी वृद्धि आदि यथा संभव वृद्धि लीएं इनही अक्षरादिकनिके समास तिनिकरि नवभेद ऐसें सर्व मिलिकरि अठारह भेद अक्षरात्मक द्रव्यश्रुतके हैं अर ज्ञानकी अपेक्षा इनही द्रव्यश्रुतानिके सुननेतैं जो ज्ञानभया सो उस ज्ञानके भी अठारह भेद कहिए। बहुरि अनक्षरात्मक श्रुतज्ञानके पर्याय १ अर पर्यायसमास २ ए दोय भेद मिलाएं सर्व श्रुतज्ञानके वीस भेद भए। बहुरि ग्रंथ जो शास्त्र ताकी विवक्षा करिए तौ आचारांग आदि द्वादश अंग अर उत्पाद पूर्व आदि चौदह पूर्व अर चकारतैं सामायिकादि चौदह प्रकीर्णक तिनिस्वरूप द्रव्यश्रुत ज्ञान जानना ताके सुननेतैं जो ज्ञान भया सो भावश्रुतज्ञान जानना। पुद्गल द्रव्यस्वरूप अक्षर पदादिकमय तौ द्रव्यश्रुत है ताके सुननेतैं जो श्रुतज्ञानका पर्यायरूप ज्ञान भया सो भावश्रुत है। अब जो पर्याय आदि भेद कहे तिनि शब्दनिकी निरुक्ति व्याकरण अनुसारि कहिए हैं परीयंते कहिए सर्व जीव जाकरि व्याप्त हैं सो पर्याय कहिए पर्यायज्ञान विना कोऊ जीव नाहीं। केवल ज्ञानीनिके भी पर्यायज्ञान संभवै है। जैसैं किसीकैं कोटि धन पाइए है तो वाकै एक धनतौ सहज ही वामें आया तैसैं महाज्ञानविषैं स्तोकज्ञान गर्भित भया जानना। बहुरि अक्ष कहिए कर्ण इंद्रिय ताकौं अपना स्वरूपकौं राति कहिए ज्ञान द्वारकरि दे है तातैं अक्षर कहिए। बहुरि पद्यते कहिए जाकरि आत्मा अर्थकौं प्राप्त होइ ताकौं पद कहिए। बहुरि सं कहिए संक्षेपतैं हन्यते गम्यते कहिए जानिए एक गतिका स्वरूप जिहिकरि सो संघात कहिएं। बहुरि प्रतिपद्यते कहिए विस्तारतैं जानिए हैं च्यारि गति जाकरि सो प्रतिपत्ति कहिए नामसंज्ञाविषैं कप्रत्ययतै प्रतिपात्तिक कहिए। बहुरि अनु कहिए गुणस्थाननिके अनुसारि युज्यंते कहिए संबंधरूप जीव जा विषैं कहिए है सो अनुयोग कहिए। बहुरि प्रकर्षेण कहिए नाम १ स्थापना १ द्रव्य १ भाव १ अथवा निर्देश १ स्वामित्व १ साधन १ अधिकरण १ स्थिति १ विधान १ अथवा सत् १ संख्या १ क्षेत्र १ स्पर्शन १ काल १ अंतर १ भाव१ अल्पबहुत्व इत्यादि विशेषकरि प्राभृत कहिए परिपूर्ण होइ ऐसा जो वस्तुका अधिकार सो प्राभृत कहिए। अर जाकी प्रा-

प्राभृत संज्ञा होइ सो प्राभृतक कहिए। बहुरि प्राभृतकका जो अधिकार सो प्राभृतकप्राभृतक कहिए बहुरि वसंति कहिए पूर्वरूपी समुद्रका अर्थ जिस विषैं एकोदेशपनै पाइए सो पूर्वका अधिकार वस्तु कहिए। बहुरि पूरयति कहिए शास्त्रके अर्थकौं पोषै सो पूर्व कहिए। ऐसैं दश भेदनिकी निरुक्ति कही। बहुरि सं कहिए संग्रह करि पर्याय आदि पूर्वपर्यंत भेदनिकौं अंगीकार करि अस्यंते कहिए प्राप्त करिए भेद करिए ते समास कहिए, पर्याय ज्ञानतैं जे पीछैं भेद तिनिकौं पर्यायसमास कहिए। अक्षर ज्ञानतैं जे पीछैं भेद तिनकौं अक्षरसमास कहिए ऐसैं ही दश भेद जानने। ऐसैं पूर्व चौदह अर वस्तु एकसौ पिच्याणवैं अर प्राभृतक तीन हजार नवसै अर प्राभृतक प्राभृतक तिराणवै हजार छसै अर अनुयोग तीन लाख चौहत्तरि हजार च्यारिसै अर प्रतिपत्तिक अर संघात अर पद क्रमतैं संख्यात हजार गुणे अर एक पदके अक्षर सोलहसौ चौंतीस कोडि तियासी लाख सात हजार आठसै अठ्यासी अर समस्त श्रुतके अक्षर एकघाटि एकट्ठी प्रमाण इनिकौं पदके अक्षरनिका भाग दीएं जो लब्धराशि होइ सो द्वादशांगके पदोंका प्रमाण जानना। अब शेष अक्षर हैं ते अंगवाह्य श्रुतके जानने। ३४८

३४९। तहां प्रथम द्वादशांगके पदनिकी संख्या कहैं हैं—

**बारुत्तरसयकोडी तेसीदी तहय होंति लक्खाणं।**
**अट्ठावण्णसहस्सा पंचेव पदाणि अंगाणं॥ ३५०॥**

द्वादशोत्तरशतकोट्यः त्र्यशीतिस्तथा च भवति लक्षाणां।
अष्टापंचाशत्सहस्राणि पंचैव पदानि अंगानां॥ ३५०॥

जी० प्र०—द्वादशोत्तरशतकोट्यः त्र्यशीतिलक्षाणि अष्टपंचाशत्सहस्राणि पंच च द्वादशांगानां मध्यमसर्वपदप्रमाणं भवति ११२,८३,५८,००५। अंग्यते मध्यमपदैर्लक्ष्यते इत्यंगं। अथवा आचारादिद्वादशशास्त्रसमूहरूपश्रुतस्कंधस्य अंगं अवयवः एकदेशः आचाराद्येकैकशास्त्रमित्यर्थः॥ ३५०॥ अथांगवाह्याक्षरसंख्यां कथयति—

मं० प्र०—द्वादशोत्तरशतं कोटयः त्र्यशीतिलक्षाणि अष्टापंचाशत्सहस्राणि पंच द्वादशानामंगानां पदानि यथा प्रत्येकं वक्ष्यंते तथैव मिलितानि सर्वाण्यपि भवंति । ११२८३५८००५ । अग्यते मध्यमपदैर्लक्ष्यते इत्यंग । अथवा आचारादिद्वादशशास्त्रसमूहस्य श्रुतस्कंधस्य अंग—अवयवः—एकदेशः, आचाराद्येकैकशास्त्रमित्यर्थः ॥ ३५० ॥ अथांगवाह्यस्य अक्षरसंख्यां प्ररूपयति—

स० च०—एकसौ बारह कोडि तियासी लाख अठावन हजार पांच पद ११२८३५८००५ सर्व द्वादशांगके जानने । अंग्यते कहिए मध्यम पदनिकरि जो लखिये सो अंग कहिए अथवा सर्व श्रुतका जो एक एक आचारांगादिक रूप अवयव सो अंग कहिए । ऐसैं अंग शब्दकी निरुक्ति है ॥ ३५० ॥ आगें जो अंगवाह्य प्रकीर्णक तिनिके अक्षरनिकी संख्या कहे हैं—

**अडकोडिएयलक्खा अट्ठसहस्सा य एयसदिगं च ।**
**पण्णत्तरि वण्णाओ पइण्णयाणं पमाणं तु ॥ ३५१ ॥**

अष्टकोट्येकलक्षाणि अष्टसहस्राणि च एकशतकं च ।
पंचसप्ततिः वर्णाः प्रकीर्णकानां प्रमाणं तु ॥ ३५१ ॥

जी० प्र०—अष्टकोट्येकलक्षाष्टसहस्रैकशतपंचसप्ततिप्रमाणाः प्रकीर्णकानां अंगवाह्यानां सामायिकादीनां च चतुर्दशानां वर्णा भवंति ८०१०८१७५ तुशब्दः पूर्वसूत्रे द्वादशांगपदसंख्योक्ता, अस्मिन् सूत्रे च अंगवाह्याक्षरसंख्योक्तेति विशेषं ज्ञापयति ॥ ३५१ ॥ अथामुमेवार्थं गाथाद्वयेनाह—

मं० प्र०—अष्टकोट्येकलक्षाष्टसहस्रपंचसप्तत्युत्तरैकशतप्रमाणाः प्रकीर्णकानामंगवाह्याना सामायिकादीना चतुर्दशाना वर्णा भवंति । ८०१०८१७५ । तुशब्दो विशेषार्थः । पूर्वसूत्रे द्वादशांगाना पदसंख्या उक्ता । अस्मिन् सूत्रे अंगवाह्यानामक्षरसंख्या उक्ता इत्यय विशेषः । द्विरूपवर्गधाराया रूपोने षष्ठवर्गे एकट्ठिमात्रे मध्यमपदवर्णैर्भक्ते सति लब्ध द्वादशांगपदप्रमाणं । अवशिष्टमंगवाह्याक्षरप्रमाण भवति॥३५१॥अथैतदर्थनिर्णयार्थं गाथाचतुष्टयेन प्रक्रिया प्ररूपयति—

स० चं०—बहुरि सामायिकादिक प्रकीर्णकनिके अक्षर आठ कोडि एक लाख आठ हजार एकसौ पिचहत्तरि ८०१०८१७५ जानने। ३५१। आगैं इस अर्थके निर्णय करनेके अर्थि च्यारि गाथानिकरि अक्षरनिकी प्रक्रिया कहे हैं

## तेत्तीस वेंजिणाइं सत्तावीसा सरा तहा भणिया।
## चत्तारि य जोगवहा चउसट्ठी मूलवण्णाओ ॥ ३५२ ॥

त्रयस्त्रिंशत् व्यंजनानि सप्तविंशतिः स्वरास्तथा भणिताः।
चत्वारश्च योगवहाः चतुष्षष्टिः मूलवर्णाः ॥ ३५२ ॥

ओ—अहो भव्य ! व्यंजनानि अर्धमात्राणि क् ख् ग् घ् ङ्। च् छ् ज् झ् ञ्। ट् ठ् ड् ढ् ण्। त् थ् द् ध् न्। प् फ् ब् भ् म्। य् र् ल् व् श् ष् स् ह्। इत्येतानि त्रयस्त्रिंशत् ३३। स्वराः एकद्वित्रिमात्राः। अ इ उ ऋ ऌ ए ऐ ओ औ इत्येते नव, प्रत्येकं ह्रस्वदीर्घप्लुतभेदैस्त्रिभिर्गुणिताः अ आ आ ३, इ ई ई ३, उ ऊ ऊ ३, ऋ ॠ ॠ ३, ऌ ॡ ॡ ३, ए १ ए २ ए ३, ऐ १ ऐ २ ऐ ३, ओ १ ओ २ ओ ३, औ १ औ २ औ ३ इत्येते सप्तविंशतिः २७। योगवाहाः अं अः ≍क ≍प इत्येते चत्वारः ४, एवं मिलित्वा मूलवर्णाश्चतुःषष्टिः ६४। यथानादिधने परमागमे प्रसिद्धास्तथैवात्र भणिताः संजानीहि। व्यज्यते स्फुटीक्रियते अर्थो यैस्तानि व्यंजनानि। स्वरंति—अर्थं कथयंतीति स्वराः। योगं—अन्याक्षरसंयोगं वहंतीति योगवाहाः। मूलानि संयुक्तोत्तरवर्णोत्पत्तिकारणानि वर्णाः, मूलवर्णाः इति समासार्थबलेन असंयुक्ता एव चतुःषष्टिरिति लभ्यंते। ऌवर्णः संस्कृते दीर्घो नास्ति तथापि अनुकरणे देशांतरभाषायां चास्ति। ए ऐ ओ औ इति चत्वारोऽपि संस्कृते ह्रस्वा न संति तथापि प्राकृते देशांतरभाषायां च संति ॥ ३५२ ॥

म० प्र०—व्यंजनानि अर्धमात्राणि क् ख् ग् घ् ङ्। च् छ् ज् झ् ञ्। ट् ठ् ड् ढ् ण्। त् थ् द् ध् न्। प् फ् ब् भ् म्। य् र् ल् व् श् ष् स् ह् इत्येतानि त्रयस्त्रिंशत् ३३। स्वराः एकद्वित्रिमात्राः अ इ उ ऋ ऌ ए ऐ ओ औ इत्येते नव प्रत्येकं ह्रस्वदीर्घप्लुतभेदैस्त्रिभिर्गुणिताः अ आ आ ३। इ ई ई ३। उ ऊ ऊ ३। ऋ ॠ ॠ ३। ऌ ॡ ॡ ३। ए १ ए २ ए ३। ऐ १ ऐ २ ऐ ३। ओ १ ओ २ ओ ३। औ १ औ २ औ ३। इत्येते सप्तविंशतिः २७। योगवाहाः अं अः ≍क ≍प इत्येते चत्वारः। ४। सर्वे मिलिताः, मूलवर्णाः असयुक्तवर्णाः चतुष्षष्टिः। ६४। यथा अनादिनिधने परमागमे प्रसिद्धाः तथात्र भणिताः कथिताः। चशब्दः समुच्चयार्थः। व्यज्यते स्फुटीक्रियते अर्थो यैस्तानि व्यंजनानि। स्वरंति-अर्थं कथयतीति स्वराः। योगमन्याक्षरसंयोग वहतीति योगवाहाः। मूलानि-संयुक्तोत्तरवर्णोत्पत्तिकारणानि भूताः वर्णा मूलवर्णाः इति समासार्थबलेन असंयुक्ता एव एते चतुःषष्टिवर्णा-म्नाताः। ऌकारस्य दीर्घस्य संस्कृते अभावेपि अनुकरणे देशभाषांतरेषु च सद्भावः। ए ऐ ओ औ इत्येतेषां चतुर्णां संस्कृते ह्रस्वस्याभावेऽपि प्राकृते देशभाषासु च सद्भावोस्ति ॥ ३५२ ॥

स.चं.–ओ कहिये हो भव्य ! तेतीस ३३ तौ व्यंजन अक्षर हैं आधी मात्रा जाके बोलनेके कालविषैं होइ ताकौं व्यंजन कहिये क् ख् ग् घ् ङ्। च् छ् ज् झ् ञ् । ट् ठ् ड् ढ् ण्। त् थ् द् ध् न् । प् फ् ब् भ् म्। य् र् ल् व्। श् ष् स् ह् ए तेतीस व्यंजन अक्षर हैं। बहुरि सत्ताईस स्वर अक्षर हैं अ १ इ १ उ १ ऋ १ ऌ १ ए १ ऐ १ ओ १ औ १ ए नव अक्षर, इनिके एक एकके ह्रस्व दीर्घ प्लुत तीन भेदनिकरि गुणैं सत्ताईस भेद हो हैं। अ आ आ ३। इ ई ई ३। उ ऊ ऊ ३। ऋ ॠ ॠ ३। ऌ ॡ ॡ ३। ए ए ए ३। ऐ ऐ ऐ ३। ओ ओ ओ ३। औ औ औ ३ ! ए सत्ताईस स्वर हैं। जाकी एक मात्रा होय ताकौं ह्रस्व कहिये। जाकी दोय मात्रा होंइ ताकौं दीर्घ कहिए। जाकी तीन मात्रा होंइ ताकौं प्लुत कहिए। बहुरि च्यारि योगवाह अक्षर हैं अनुस्वार १ विसर्ग १ जिह्वामूलीय १ उपध्मानीय १ तहां अं ऐसा अक्षर अनुस्वार है। अः ऐसा अक्षर विसर्ग है। कः ✕ ऐसा अक्षर जिह्वामूलीय है पः ✕ ऐसा अक्षर उपध्मानीय है। ए चौसठि मूल अक्षर अनादिनिधन परमागमविषे प्रसिद्ध हैं। 'सिद्धो वर्णः समाम्नायः' इति वचनात्। व्यज्यते कहिए अर्थ जिनिकरि प्रकट करिए ते व्यंजन कहिए। स्वरंति कहिए अर्थकौं कहैं ते स्वर कहिए। योग कहिए अक्षरके संयोगको वहंति कहिए प्राप्त होंइ ते योगवह कहिए। मूल कहिए और अक्षरके संयोगरहित चौसठि संयोगी अक्षर उपजनेकौं कारण ये चौसठि मूलवर्ण हैं। इस अर्थ करि द्वितीयादि अक्षरके संयोगरहित चौसठि अक्षर हैं इनिविषै दोय आदि अक्षर मिलैं संयोगी हो है। जैसे क्कार व्यंजन अकार स्वर मिलिकरि क ऐसा अक्षर हो है। आकारके मिलनेतैं का ऐसा अक्षर हो है इत्यादि संयोगी अक्षर उपजनेकौं कारण चौसठि मूल अक्षर जानने। इहां प्रश्न–जो व्याकरणविषै ए ऐ ओ औ इनिकौ ह्रस्व न कहे है इहां ए भी ह्रस्व कैसें कहे ताका समाधान–जो संस्कृत भाषाविषैं ह्रस्वरूप ए ऐ ओ औ नाहीं हो हैं तातैं न कहे। प्राकृत भाषा विषैं वा देशांतरकी भाषाविषैं ए ऐ ओ औ ए अक्षर भी ह्रस्व हो हैं तातैं इहां कहे हैं। बहुरि एक दीर्घ ऌकार संस्कृत भाषाविषैं नाहीं हैं तथापि अनुकरणविषैं देशांतरकी भाषाविषैं हो है तातैं इहां कह्या है ॥ ३५२ ॥

**चउसट्ठिपदं विरलिय दुगं च दाऊण संगुणं किच्चा ।**
**रूऊणं च कुए पुण सुदणाणस्सक्खरा होंति ॥ ३५३ ॥**

चतुःषष्टिपदं विरलयित्वा द्विकं च दत्त्वा संगुणं कृत्वा ।
रूपोने च कृते पुनः श्रुतज्ञानस्याक्षराणि भवंति ॥ ३५३ ॥

जी० प्र०——मूलवर्णप्रमाणं चःपष्टिपदं एकैकरूपेण विरलयित्वा रूपं रूपं प्रति द्विकं दत्त्वा परस्परं संगुण्य तल्लब्धे रूपोने कृते सति श्रुतज्ञानस्य द्वादशांगप्रकीर्णकरूपश्रुतस्कंधस्य द्रव्यश्रुतस्य अपुनरुक्ताक्षराणि भवंति । वाक्यार्थप्रतीत्यर्थं गृहीतानां पुनरुक्ताक्षराणां संख्यानियमाभावात् ॥३५३॥ तदपुनरुक्ताक्षरप्रमाणं कियदिति चेदाह——

म० प्र०——चतुःषष्टिपद मूलवर्णप्रमाणचतुःषष्ट्यंकस्थानरूपाणि विरलयित्वा पंक्तिरूपेण तिर्यक्संस्थाप्य रूपं प्रति द्विकं दत्त्वा संगुण--परस्परगुणनं कृत्वा लब्धे रूपोने कृते सति श्रुतज्ञानस्य—श्रुतकेवलस्य, द्वादशांगप्रकीर्णकश्रुतस्कंधरूपस्य द्रव्यश्रुतस्य अपुनरुक्ताक्षराणि तल्लब्धप्रमितानि भवंति वाक्यार्थप्रतीतिनिमित्तपुनरुक्ताक्षराणां संख्यानियमाभावात् । चशब्दौ क्रियासमुच्चयार्थौ । पुनःशब्दो रूपोनकरणे विशेषमाह । एकद्वित्र्यादिसंयोगाक्षराणां चतुःषष्टिसंयोगपर्यंतानां संकलने सति श्रुतस्कंधाक्षरप्रमाणोत्पत्तिर्भवति इत्ययं विशेषः ॥ ३५३ ॥

स० चं०—मूल अक्षर प्रमाण चौसठि स्थान तिनिका विरलन करिये बरोबरि पंक्तिरूप एक एक जुदा चौसठि जायगा माडिए तहां एक २ के स्थान दोय दोयका अंक २ माडिये पाछै उनकौं परस्पर गुणन करिये दोय दून्यों च्यारि ४ च्यारि दून्यो आठ ८ आठ दून्यो सोलह १६ ऐसैं चौसठि पर्यंत गुणन कीये जो एकट्ठी प्रमाण आवै तामै एक घटाइये इतने अक्षर सर्व द्रव्यश्रुतके जानने ते ये अक्षर अपुनरुक्त जानने जातैं जो वाक्यका अर्थकी प्रतीतिके निमित्त उनही कहै अक्षरनिकौं वारंवार कहे तौ उनका किछू संख्याका नियम है नाहीं ॥३५३॥ तिनि अपुनरुक्त अक्षरनिका प्रमाण कितना है सो कहै हैं—

**एकट्ठ च च य छस्सत्तयं च च य सुण्णसत्ततियसत्ता ।**

## सुण्ण णव पण पंच य एक्कं छक्केक्कगो य पणगं च ॥ ३५४ ॥

एकाष्ट च च च षट्सप्तकं च च च शून्यसप्तत्रिकसप्त ।

शून्यं नव पंच पंच च एकं षट्कैककश्च पंचकं च ॥ ३५४ ॥

जी० प्र०—एकाष्टचतुश्चतुःषट्सप्तकं चतुश्चतुःशून्यसप्तत्रिकसप्तशून्यं नवपंचपंचएकं षट्कैकश्च पंचकं च इत्येकांकादिपंचांकावसानविंशतिस्थानात्मकद्विरूपवर्गधारोत्पन्नरूपोनषष्ठवर्गप्रमाणाक्षराणि भवंति—१८४४६७४४०७३७०९५५१६१५। एतानि अक्षराणि एकद्वित्रिसंयोगादीनि चतुःषष्टिसंयोगपर्यंतानि संति तेषामुत्पत्तिक्रमो दर्श्यते तद्यथा—उक्तमूलवर्णचतुःषष्टिं तिर्यक्पंक्त्या लिखित्वा तत्र कवर्णे प्रत्येकभंगे एकः १। द्विसंयोगो नास्ति। खवर्णे प्रत्येकभंगः १ द्विसंयोगो भंगः १ एवं २। गवर्णे प्र १ द्वि २ त्रि १ एवं ४। घवर्णे प्र १ द्वि ३ त्रि ३ च १ एवं ८। ङ वर्णे प्र १ द्वि ४ त्रि ६ च ४ पं १ एवं १६। चवर्णे प्र १ द्वि ५ त्रि १० च १० पं ५ ष १ एवं ३२। छवर्णे प्र १ द्वि ६ त्रि १५ च २० पं १५ ष ६ सप्त १ एवं ६४। जवर्णे प्र १ द्वि ७ त्रि २१ च ३५ पं ३५ ष २१ सप्त ७ अष्ट १ एवं १२८। झवर्णे प्र १ द्वि ८ त्रि २८ च ५६ पं ७० ष ५६ सप्त २८ अष्ट ८ नव १ एवं २५६। ञवर्णे प्र १ द्वि ९ त्रि ३६ च ८४ पं १२६ ष १२६ सप्त ८४ अष्ट ३६ नव ९ दश १ एवं ५१२। अनेन क्रमेण चतुःषष्टिस्थानेषु गतेषु प्रत्येकादिभंगाः पूर्वपूर्वेभ्यः उत्तरोत्तरे द्विगुणा द्विगुणा भवंति। ३५४। तेषां संख्यासाधने करणसूत्रं श्रीमदभयचंद्रसूरिसैद्धांतचक्रवर्तिश्रीपादप्रसादेन केशववर्णिनः प्राहुः—

### पत्तेयभंगमेगं बेसंजोगं विरूवपदमेत्तं। तियसंजोगादिपमा रूवाहियवारहीणपदसंकलिदं ॥

प्रत्येकभंगमेकं द्विसंयोगं रूपोनपदमात्रं। त्रिसंयोगादिप्रमाणं रूपाधिकवारहीनपदसंकलितं ॥

विवक्षितस्थानेषु सर्वत्र प्रत्येकभंगः एकैकः। द्विसंयोगभंगो रूपोनपदमात्रः। त्रिसंयोगादीनां प्रमाणं तु यथाक्रमं रूपाधिकवारहीनपदसंकलितं। एकवारादिसंकलितं तद्वारसंख्यया एकरूपाधिकया हीनस्य विवक्षितपदस्य यावत्तावद्भवति। यथा दशमे ञवर्णे। त्रिसंयोगाः द्विरूपोनपदस्य एकवार संकलनमात्राः—१०—२ । १०—१ अपवर्तिताः ३६ चतुःसंयोगाः त्रिरूपोनपदस्य द्विकवारसंकलनमात्राः—
२ । १

७ । ८ । ९ अपवर्तिताः ८४। पंचसंयोगाः चतूरूपोनपदस्य त्रिकवारसंकलनमात्राः ६ । ७ । ८ । ९ अपवर्तिताः १२६। षट् संयोगाः पंच रूपो-
३ । २ । १ ॥ ४ । ३ । २ । १

नपदस्य चतुर्वारसंकलनमात्राः ५ । ६ । ७ । ८ । ९ अपवर्तिताः १२६। सप्तसंयोगाः षड्रूपोनपदस्य पंचवारसंकलनमात्राः ४ । ५ । ६ । ७ । ८ । ९
५ । ४ । ३ । २ । १ ॥ ६ । ५ । ४ । ३ । २ । १

द्वादशोत्तरपंचशतमेव द्विगुणा द्विगुणा भूत्वा चतुश्चरमत्रिचरमद्विचरमचरमेषु एकहस्य षोडशांशाष्टांशचतुर्थांशार्धप्रमिता भवंति । १ । २ । ४ । ८ । १६ । ३२ । ६४ । १२८ । २५६ । ५१२ । ००० । ०० । ००० । १८=/१६ । १८=/८ । १८=/४ । १८=/२ । एवं स्थिताक्षरसंख्या चउसट्ठिपदं विरलिय इत्यादिना वा 'अंतधणं गुणगुणियं' इत्यादिना वा संकलिता सती द्वादशांगप्रकीर्णकश्रुतस्कंधसमस्ताक्षरसंख्या रूपोनैकट्ठप्रमिता भवतीति तात्पर्यं ।३५४॥

मं० प्र०—एकाष्टचतुश्चतु:षट्सप्तचतुश्चतु शून्यसप्तत्रिकसप्तशून्यनवपंचपचैकषडेकपंचप्रमितं श्रुतस्कंधापुनरुक्ताक्षरप्रमाणं । चतुःशब्दस्य आद्यक्षरश्चकारो गृहीतः । सत्तयं चेति चकारः समुच्चयार्थोऽव्ययः । पच चेति अंत्यचकारोऽपि समुच्चयार्थोऽव्ययः । मध्ये मध्ये विभक्तिर्दृश्यते । तदनुसारेण एकाष्टचतुश्चतुःषट्सप्तकं च चतुश्चतुःशून्यसप्तत्रिकसप्तशून्यं नव पच पंच च एकं षट्क एकैकश्च पच च इति छाया द्रष्टव्या । १८४४६७४४०७३७०९५५१६१५ । इदानीं द्विसयोगाद्यक्षरभंगप्राक्रिया दर्श्यते । तद्यथा—अ आ आ ३ । इ ई ई ३ । इति षडक्षराणि लिखित्वा प्रत्येकाक्षराणि षट् । ६ । 'पढमक्खो अंतगदो' इत्यादिना अक्षसचारेणोत्पन्नानि द्विसंयोगाक्षराणि पंचदश १५ । त्रिसंयोगाक्षराणि विंशति । २० । चतुःसयोगाक्षराणि पंचदश १५ । पंचसंयोगाक्षराणि षट् ६ षट्सयोगाक्षरमेकं १ । एव सर्वाणि मिलितानि त्रिषष्टिः ६३ । एव सप्तसयोगादिचतुःषष्टिसंयोगपर्यंताक्षराणि अव्यामोहेनाक्षसचारपूर्वकमानेतव्यानि । एवमानीतानि सर्वाण्यक्षराणि द्विरूपषष्ठवर्गस्य रूपोनस्य यावंति रूपाणि तावंति भवंति ॥ ३५४ ॥

स० चं०—एक आठ च्यारि च्यारि छह सात च्यारि च्यारि विंदी सात तीन सात विंदी नव पांच पांच एक छह एक पंच इतने अंक क्रमतैं लिखैं जो प्रमाण होइ तितने अक्षर सर्व श्रुतके जानने १८४४६७४४०७३७०९५५१६१५ इतने अक्षर हैं। द्विरूप वर्गधाराका छठा वर्गस्थान एकट्ठी प्रमाण है तामैं एक घटायें ऐसैं एक आदि पंच पर्यंत वीस अंक रूप प्रमाण हो है बहुरि इहां विशेष कहिये है-एक अक्षर एक संयोगी द्विसंयोगी त्रिसंयोगी आदि चौसठि संयोगी पर्यंत जानने। तिनकी उत्पत्तिका अनुक्रम दिखाइये है यहां कहे मूलवर्ण चौसठि तिनकौं वरोवरि पंक्तिकरि लिखिये। बहुरि तहां केवल कवर्णविषैं तौ एक प्रत्येक भंग ही है। द्विसंयोगी आदि नाहीं है। बहुरि ख वर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी एक ऐसैं दोय भंग है। बहुरि गवर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी दोय त्रिसंयोगी एक ऐसैं च्यारि भंग है। बहुरि घवर्णसहित विषैं प्रत्येक भंग एक द्विसंयोगी तीन त्रिसंयोगी तीन चतुः संयोगी एक ऐसैं आठ भंग जानना। बहुरि ङ वर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी च्यारि त्रिसंयोगी छह चतुः संयोगी च्यारि पंच संयोगी एक ऐसैं सोलह भंग हैं। बहुरि चवर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी त्रिसंयोगी चतुः संयोगी पंच संयोगी षट् संयोगी क्रमतैं पांच दश दश पांच एक ऐसैं वत्तीस भंग हैं बहुरि छ वर्ण सहित विषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त संयोगी भंग क्रमतैं एक छह पंद्रह

वीस पंद्रह छह एक ऐसें चौसठि भंग हैं। बहुरि जवर्ण सहितविषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त अष्ट संयोगी भंग क्रमतें एक सात इकईस पैंतीस पैंतीस इकईस सात एक ऐसें एकसौ अठाइस भंग हैं। बहुरि झवर्ण सहित विषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त अष्ट नव संयोगी भंग क्रमतें एक आठ अठाईस छप्पन सत्तरि छप्पन अठाईस आठ एक ऐसें दोयसै छप्पन भंग हैं। बहुरि ञ वर्णसहितविषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त अष्ट नव दश संयोगी भंग क्रमतें एक नव छत्तीस चौरासी एकसौ छब्बीस एकसौ छब्बीस चौरासी छत्तीस नव एक ऐसें पांचसै बारह भंग हैं इसही अनुक्रमकरि चौसठि स्थाननिविषैं प्रत्येक आदि भंग पूर्व पूर्व स्थानतें उत्तर २ स्थानविषैं दूणे दूणे हो हैं ॥

| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ००० योगनिके ६४ [illegible] |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | प्रत्येक |
| १ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | द्विसंयोगी |
| जोड | २ | १ | ३ | ६ | १० | १५ | २१ | २८ | ३६ | त्रिसंयोगी |
| | जोड | ४ | १ | ४ | १० | २० | ३५ | ५६ | ८४ | चतुःसंयोगी |
| | | जोड | ८ | १ | ५ | १५ | ३५ | ७० | १२६ | पंचसंयोगी |
| | | | जोड | १६ | १ | ६ | २१ | ५६ | १२६ | षट्संयोगी |
| | | | | जोड | ३२ | १ | ७ | २८ | ८४ | सप्तसंयोगी |
| | | | | | जोड | ६४ | १ | ८ | ३६ | अष्टसंयोगी |
| | | | | | | जोड | १२८ | १ | ९ | नवसंयोगी |
| | | | | | | | जोड | २५६ | १ | दशसंयोगी |
| | | | | | | | | जोड | ५१२ | ०० |

इहां प्रत्येक आदि भंगनिका स्वरूप कहा? सो कहिये है—जुदे जुदे ग्रहणरूप प्रत्येक भंग हैं ते येकही प्रकार हैं। जैसैं दशवां ञवर्णकी विवक्षाविषैं ञवर्णकौं जुदा ग्रहण करिये यहु येक ही प्रत्येक भंग का विधान जानना। बहुरि दोय तीन आदि अक्षरनिके संयोगतैं जे भंग होंइ तिनकौं द्विसंयोगी त्रिसंयोगी आदि कहिये ते अनेक प्रकार हो हैं जैसैं दशवां ञ वर्णकी विवक्षाविषैं दोय अक्षरनिका संयोग—क् ञ्। ख ञ्। ग् ञ्। घ् ञ्। ङ् ञ्। च् ञ्। छ् ञ्। ज् ञ्। झ् ञ्। ऐसैं नव प्रकार हो है। बहुरि तीनि अक्षरनिका संयोग क् ख् ञ्। क् ग् ञ्। क् घ् ञ्। क् ङ् ञ्। क् च् ञ्। क् छ् ञ्। क् ज् ञ्। क् झ् ञ्। ख् ग् ञ्। ख् घ् ञ्। ख् ङ् ञ्। ख् च् ञ्। ख् छ् ञ्। ख् ज् ञ्। ख् झ् ञ्। ग् घ् ञ्। ग् ङ् ञ्। ग् च् ञ्। ग् छ् ञ्। ग् ज् ञ्। ग् झ् ञ्। घ् ङ् ञ्। घ् च् ञ्। घ् छ् ञ्। घ् ज् ञ्। घ् झ् ञ्। ङ् च् ञ्। ङ् छ् ञ्। ङ् ज् ञ्। ङ् झ् ञ्। च् छ् ञ्। च् ज् ञ्। च् झ् ञ्। छ् ज् ञ्। छ् झ् ञ्। ज् झ् ञ्। ऐसैं छत्तीस प्रकार भंग हो है। ऐसैं ही अन्य जानने। बहुरि जितनेकी विवक्षा होइ तितनां संयोगी भंग एक ही प्रकार हो है। जैसैं दश अक्षरनिकी विवक्षा विषै दश अक्षरनिका संयोग रूप भंग एकही हो है ऐसैं भंगनिका स्वरूप जानना। इहां श्रीअभयचन्द्रसूरि सिद्धान्तचक्रवर्तीके चरणनिका प्रसादकरि केशववर्णी संस्कृत टीकाकार सो तिन एक दोय संयोगी आदि भंगनिकी संख्याका साधनविषै करण सूत्र कहै हैं—

पत्तेयभंगमेगं वेसंजोगं विरूवपदमेत्तं।
तियसंजोगादिपमा रूवाहियवारहीणपदसंकलिदं॥

विवक्षित स्थान विषैं सर्वत्र प्रत्येक भंग एक एक ही है बहुरि द्विसंयोगी भंग एक घाटि गच्छ प्रमाण है इहां जेथवां स्थान विवक्षित होइ तीहिं प्रमाण गच्छ जानना। बहुरि त्रिसंयोगी आदि भंगनिका क्रमतैं एक अधिक वार हीन गच्छका संकलन धनमात्र प्रमाण है। भावार्थ यहु जो त्रिसंयोगी चतुःसंयोगी आदि विषैं एकवार दोयवार आदि संकलन करना। वहुरि जेतीवार संकलन होइ तातैं एक अधिक प्रमाणकों विवक्षित गच्छमें घटाएं अवशेष जेता प्रमाण रहै तितनेका संकलन करना। जैसैं दशवां स्थानकी विवक्षा विषैं त्रिसंयोगी

भंग ल्यावनेकों एकवार संकलन अर एकवारका प्रमाण एक तातैं एक अधिक दोय सो गच्छ दशमें घटाएं आठ होइ ऐसैं आठका एकवार संकलन धनमात्र तहां त्रिसंयोगी भंग जानना । ऐसैं ही अन्यत्र जानना । बहुरि संकलन धन ल्यावनेकों पूर्वै केशववर्णी करि उक्त सूत्र कहे थे—

तत्तो रूवहियकमे गुणगारा होंति उड्ढगच्छोत्ति।
इगिरूवमादिरूउत्तरहारा होंति पभवोत्ति ॥

इन सूत्रनिके अनुसारि विवक्षित संकलन धन ल्यावना। अब ऐसैं करण सूत्रके अनुसार उदाहरण दिखाइए है-विवक्षित दशमा अवर्ण तहां प्रत्येक भंग एक द्विसंयोगी एक घाटि गच्छमात्र नव त्रिसंयोगी भंग दोय घाटि गच्छमात्र आठ ताका एकवार संकलन धनमात्र सो संकलन धनके साधन करण सूत्रके अनुसारि आठ नवकौं दोय एकका भाग दीएं छत्तीस हो हैं। जातैं आठ नवकौं परस्पर गुणैं बहत्तरि भाज्य दोय एककौं परस्पर गुणैं भागहार दोय भागहारका भाग भाज्यकौं दीएं छत्तीस भए। ऐसैं ही चतुःसंयोगी भंग तीन घाटि गच्छका दोयवार संकलन धनमात्र है तहां सात आठ नवकौं तीन दोय एकका भाग दीएं चौरासी हो हैं। बहुरि पंचसंयोगी च्यारि घाटि गच्छ का तीनवार संकलधनमात्र है तहां छह सात आठ नवकौं च्यारि तीन दोय एकका भाग दीएं एकसौ छब्बीस हो हैं। बहुरि छह संयोगी पांच घाटि गच्छका च्यारिवार संकलनधनमात्र हैं तहां पांच छह सात आठ नवकौं पांच च्यारि तीन दोय एकका भाग दीएं एकसौ छब्बीस हो हैं। बहुरि सप्तसंयोगी छह घाटि गच्छका पांचवार संकलन धनमात्र है। तहां च्यारि पांच छह सात आठ नवकौं पांच च्यारि तीन दोय येकका भाग दीएं चौरासी हो हैं। बहुरि आठ संयोगी सात घाटि गच्छका छहवार संकलन धनमात्र है तहां तीन च्यारि पांच छह सात आठ नवकौं सात छह पांच च्यारि तीन दोय येकका भाग दीएं छत्तीस हो है। बहुरि नव संयोगी आठ घाटि गच्छका सातवार संकलनधनमात्र है तहां दोय तीन च्यारि पांच छह सात आठ नवकौं आठ सात छह पांच च्यारि तीन दोय एकका भाग दीएं नव हो हैं। बहुरि दश संयोगी नव घाटि गच्छका आठवार संकल धनमात्र

है। इहां परमार्थतैं संकलन नाहीं जातैं एकका सर्ववार संकलन एक ही हो है तातैं एक है अैसैं सबनिका जोड दीएं दशवां स्थानविषैं पांचसै बारह भंग भए॥ अैसैं ही सर्व स्थाननि विषैं ल्यावना। तहां अंतका चौसठिवां स्थानविषैं प्रत्येक भंग एक बहुरि द्विसंयोगी भंग एक घाटि गच्छमात्र तरेसठि बहुरि त्रिसंयोगी भंग दोय घाटि गच्छका एकवार संकलन धनमात्र तहां बासठि तरेसठिकौं दोय एकका भाग दीएं उगणीससै तरेपन हो हैं। बहुरि चतुःसंयोगी तीन घाटि गच्छ दोयवार संकलनधनमात्र तहां इकसठि बासठि तरेसठिकौं तीन दोय एकका भाग दीएं गुणतालीस हजार सातसै ग्यारह भंग हो हैं बहुरि पंचसंयोगी च्यारि घाटि गच्छका तीनवार संकलन धनमात्र तहां साठि इकसठि बासठि तरेसठिकौं च्यारि तीन दोय एकका भाग दीएं पांचलाख पिच्याणवै हजार छसै पैसठि हो हैं अैसें ही षट् संयोगी आदि भंग पांच आदि एक एक बंधता घाटि गच्छका तीन आदि एक एक बंधतावार संकलनधनमात्र जानने। तहां पूर्वोक्ततैं गुणसठि अठावन आदि भाज्यविषैं अर पांच छह आदि भागहारनिविषैं अधिक अधिक माडि भाज्यकौं भागहारका भाग दीएं जेता जेता प्रमाण आवै तितना तितना तहां तहां षट्संयोगी आदि भंग जानने। तहां तरेसठि संयोगी भंग बासठि घाटि गच्छ दोय ताका एकसठिवार संकलन धनमात्र तहां दोय तीन आदि एक एक बंधता तरेसठि पर्यंतकौं बासठि इकसठि आदि एक एक घटता एकपर्यंतका भाग दीएं यथा संभव अपवर्तन कीएं तरेसठि भंग हो हैं। बहुरि चौसठि संयोगी भंग एकही है। अैसैं चौसठिवां स्थानविषैं प्रत्येक आदि चौसठि संयोगी पर्यंत भंगनिकौं जोडैं एकट्ठीका आधा प्रमाणमात्र भंग होइ। अैसैं एक आदि एक एक अधिक चौसठि पर्यन्त अक्षरनिके स्थाननिविषैं 'पत्तेयभंगमेगं' इत्यादि करण सूत्रनिकरि भंग हो है। अथवा गुणस्थानाधिकारविषैं प्रमादनिका व्याख्यान करते अक्ष संचार विधान कह्या था तिस विधान करि भी अैसैं ही भंग हो हैं ते भंग क्रमतैं एक दोय चारि आठ सोलह बत्तीस चौसठि एक सौ अठाईस दोयसै छप्पन पांचसै बारह एक हजार चौबीस दोय हजार अडतालिस च्यारि हजार छिनवै आठ हजार एकसौ बानवै सोलह हजार तीनसौ चौरासी बत्तीस हजार सातसै अडसठि पैंसठ हजार पांचसै

छत्तीस एकलाख इकतीस हजार बहत्तरि दोय लाख बासठि हजार एकसौ चवालीस पांच लाख चौबीस हजार दोयसै अठासी दश लाख अडतालीस हजार पांचसै छिहत्तरि बीस लाख सित्ताणवै हजार एकसौ बावन इकतालीस लाख चौराणवे हजार तीनसै दोय तियासी लाख अठासी हजार छसै चारि एक कोडि सडसाठिलाख तेहत्तरि हजार दोयसै आठ इत्यादि दूणै दूणे हो हैं अंत स्थान तैं चौथा तीसरा दूसरा अन्तस्थानविषैं एकट्ठीका सोलवां आठवां चौथा दूसरा भागमात्र भए तिन सबनिकों जोडै 'चउसट्ठिपदं विरलिय' इत्यादि सूत्रोक्त एक घाटि एकट्ठी मात्र भंग हो है अथवा 'अन्तधणं गुणगुणियं 'आदि विहीणं रूउणुत्तारभजियं' इस करण सूत्रकरि अन्त धन एकट्ठीका आधा ताकौं गुणकार दोय करि गुणैं एकट्ठी तामैं एक घटाएं एक घाटि एकट्ठी एक घाटी गुणकार एक ताका भाग दिएं भी इतने ही सर्व भंग हो हैं ऐसै सर्वश्रुत संबंधी समस्त अक्षरानिकी संख्या एक घाटि एकट्ठी प्रमाण जानना इहां जैसैं अ आ आ इ ई ई इनि छह अक्षरनिविषैं प्रत्येक भंग छह द्विसंयोगी पंद्रह त्रिसंयोगी वीस चतुःसंयोगी पंद्रह पंचसंयोगी छह छह संयोगी एक मिलि तरेसठि भंग होंइ। छह जायगा दूवा मांडि परस्पर गुणे येक घटाय तरेसठि हो हैं तैसैं चौसठि मूल अक्षरनिविषैं पूर्वं एक एक स्थानविषैं एक एक प्रत्येक भंग मिलि चौसठि भए। ऐसैं ही सर्व स्थानकनिके द्विसंयोगी त्रिसंयोगी आदि भंग मांडि जितने जितने होंइ तितने तितने द्विसंयोगी त्रिसंयोगी आदि भंग जानने। सबनिकों जोडैं येक घाटि एकट्ठी प्रमाण हो हैं सोई चौसठि जायगा दोयका अंक मांडि परस्पर गुणैं तहां एक घटाएं एक घाटि एकट्ठी प्रमाण श्रुतज्ञानके अक्षर जानने ॥ ३५४ ॥

**मज्झिमपदक्खरवहिदवण्णा ते अंगपुव्वगपदाणि ।**
**सेसक्खरसंखा ओ पइण्णयाणं पमाणं तु ॥ ३५५ ॥**

**मध्यमपदाक्षरावहितवर्णास्ते अंगपूर्वगपदानि ।**
**शेषाक्षरसंख्या अहो प्रकीर्णकानां प्रमाणं तु ॥ ३५५ ॥**

जी० प्र०—मध्यमपदस्य परमागमप्रसिद्धस्याक्षरैः षोडशशतचतुस्त्रिंशत्कोटित्र्यशीतिलक्षसप्तसहस्राष्टशताष्टाशीतिप्रमितैः तेषु सकलश्रुतस्कंधाक्षरेषु रूपोनैकट्ठमात्रेषु भक्तेषु यल्लब्धं तावंत्यंगपूर्वगतमध्यमपदानि भवंति। अवशिष्टाक्षरसंख्या अंगबाह्यप्रकीर्णकाक्षरप्रमाणं भवति। यद्येतावतामक्षराणां एकं मध्यमपदं तदा एतावदक्षराणां कियंति मध्यमपदानि भवंति ? इति त्रैराशिकं कृत्वा प्रमाणराशिना भक्ते यल्लब्धं तदंगपूर्वपदानि भवंति। ११-२८३५८००५। अवशिष्टाक्षराणि सामायिकाद्यंगबाह्यश्रुताक्षराणि भवंति। ८०१०८१७५। ओ ! अहो भव्य ! इत्यंगांगबाह्यश्रुतद्वयस्य यथासंभवं पदप्रमाणमक्षरप्रमाणं च त्वं जानीहि। प्राकृते ओ शब्दः अव्ययं संबोधनार्थः ॥३५५॥ अथांगपूर्वपदसंख्याविशेषं त्रयोदशगाथासूत्रैराख्याति—

म०प्र०—मध्यमपदस्य परमागमप्रसिद्धस्य, अक्षरैः—षोडशशतचतुस्त्रिंशत्कोटित्र्यशीतिलक्षसप्तसहस्राष्टशताष्टाशीतिप्रमितैः, तेषु सकलश्रुतस्कंधाक्षरेषु अवहृतेषु—भक्तेषु, यल्लब्धं तावंति अंगपूर्वगतमध्यमपदानि भवति। अवशिष्टाक्षरसंख्या अंगबाह्यप्रकीर्णकाना प्रमाणं भवति। यद्येतावद्भिरक्षरैः प्र १६३४८३०-७८८८ एकं मध्यमपद लभ्यते। फ १। तदा एतावद्भिरक्षरैः इ १८४४६७४४०७३७०९५५१६१५ कियंति मध्यमपदानि लभ्यते इति त्रैराशिकेन लब्धान्यंगपूर्वपदानि। ११२८३५८००५। अवशिष्टाक्षराणि ८०१०८१७५। ओ इति प्राकृते संबोधनार्थमव्यय। अहो भव्याः ! इत्थमंगप्रविष्टांगबाह्यश्रुतयोः पदाक्षरप्रमाणे भवद्भिर्ज्ञातव्ये इति। तुशब्दो विशेषार्थः पूर्ववत् ॥ ३५५ ॥ अथ श्रीमाधवचद्रत्रैविद्यदेवा अंगपूर्वाणा पदसंख्याविशेषं त्रयोदशभिर्गाथाभि. प्ररूपयंति—

स.चं०—एक घाटि एकट्ठी प्रमाण समस्तश्रुतके अक्षर कहे तिनिकौं परमागमविषैं प्रसिद्ध जो मध्यम पद ताके अक्षरनिका प्रमाण सोलासै चौंतीस कोडि तियासीलाख सातहजार आठसे अठ्यासी ताका भाग दीएं जो पदनिका प्रमाण आवै तितने तौ अंगपूर्व संबंधी मध्यम पद जानने। बहुरि अवशेष जे अक्षर रहे ते प्रकीर्णकौंके जानने सो एक सौ बारह कोडि तियासीलाख अठावन हजार पांच इतने तौ अंग प्रविष्ट श्रुतका पदनिका प्रमाण आया अवशेष आठ कोडि एक लाख आठ हजार एकसौ पिचहत्तरि अक्षर रहे ते अंगबाह्य प्रकीर्णकके जानने। ऐसैं अंगप्रविष्ट अंगबाह्य दोय प्रकार श्रुतके पदनिका वा अक्षरनिका प्रमाण हे भव्य ! तू जानि ॥ ३५५ ॥ आगे श्रीमाधवचन्द्र त्रैविद्यदेव तेरह गाथानि करि अंगपूर्वनिके पदनिकी संख्या प्ररूपै हैं—

# आयारे सुद्दयडे ठाणे समवायणामगे अंगे ।
# तत्तो विक्खापण्णत्तीए णाहस्स धम्मकहा ॥ ३५६ ॥



आचारे सूत्रकृते स्थाने समवायनामके अंगे ।
ततो व्याख्याप्रज्ञप्तौ नाथस्य धर्मकथायां ॥ ३५६ ॥

जी० प्र०—द्रव्यश्रुतमधिकृत्य निरुक्तिप्रतिपाद्यार्थपदसंख्याविशेषाणां तत्तदंगपूर्वेषु प्ररूपणा क्रियते भावश्रुते निरुक्त्याद्यसंभवात् । अत्र द्वादशांगेषु प्रथमाचारांगं कथितं। कुतः ? मोक्षहेतुभूतसंवरनिर्जराकारणपंचाचारादिसकलचारित्रप्रतिपादकत्वेन मुमुक्षुभिराद्रियमाणस्य मोक्षांगभूतस्य परमागमशास्त्रस्य प्रथमतोवक्तव्यत्वस्य युक्तिसिद्धत्वात् । चतुर्ज्ञानसप्तर्धिसंपन्नगणधरदेवैः तीर्थकरमुखसरोजसंभूतसर्वभाषात्मकदिव्यध्वनिश्रवणावधारितसमस्तशब्दार्थैः शिष्यप्रशिष्यानुग्रहार्थं विरचितश्रुतस्कंधद्वादशांगानां मध्ये प्रथममाचारांगं विरचितं । आचरंति समंततोऽनुतिष्ठंति मोक्षमार्गमाराधयंति अस्मिन्ननेनेति वा आचारः तस्मिन् आचारांगे—

जदं चरे जदं चिट्ठे जदं आसे जदं सये ।
जदं भुंजेज्जमासेज्ज एवं पावं ण वज्झई ॥ १ ॥

कथं चरेत् ? कथ तिष्ठेत ? कथमासीत् ? कथं शयीत ? कथं भाषेत ? कथं भुंजीत ? कथं पापं न वध्यते ? इति गणधरप्रश्नानुसारेण यतं चरेत् । यतं तिष्ठेत् । यतमासीत । यतं शयीत । यतं भाषेत । यतं भुंजीत । एवं पापं न वध्यते इत्याद्युत्तरवाक्यप्रतिपादिमुनिजनसमस्ताचरणं वर्ण्यते । सूत्रयति–संक्षेपेण अर्थं सूचयति इति सूत्रं परमागमः । तदर्थं कृतं करणं ज्ञानविनयादिनिर्विघ्नाध्ययनादिक्रिया, अथवा प्रज्ञापना, कल्प्याकल्प्यं, छेदोपस्थापना, व्यवहारधर्मक्रिया, स्वसमयपरसमयस्वरूपं च सूत्रैः कृतं करणं क्रियाविशेषो यस्मिन् वर्ण्यते तत् सूत्रकृतं नाम द्वितीयमंगं । तिष्ठंति अस्मिन् एकाद्येकोत्तराणि स्थानानीति स्थानं तस्मिन् संग्रहनयेन एक एवात्मा । व्यवहारनयेन संसारी मुक्तश्चेति द्विविकल्पः उत्पादव्ययध्रौव्ययुक्त इति त्रिलक्षणः । कर्मवशात् चतुर्गतिषु संक्रामतीति चतुःसंक्रमणयुक्तः औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभेदेन पंचविशिष्टधर्मप्रधानः पूर्वदक्षिणपश्चिमोत्तरोर्ध्वाधोगतिभेदेन संसारावस्थायां षट्कोपक्रमयुक्तः स्यादस्ति स्यान्नास्ति स्यादस्तिनास्ति स्यादवक्तव्यः स्यादस्त्यवक्तव्यः स्यान्नास्त्यवक्तव्यः स्यादस्तिनास्त्यवक्तव्यः इत्यादि सप्तभंगीसद्भावेष्वुपयुक्तः अष्टविधकर्मास्रवयुक्तत्वादष्टास्रवः नव जीवाजीवास्रवबंधसंवरनिर्जरामोक्षपुण्यपापरूपा अर्थाः—पदार्थाः विषयाः यस्य स नवार्थः । पृथिव्यप्तेजोवायुप्रत्येकसाधारणद्वित्रिचतुःपंचेंद्रियभेदाद् दशस्थानकः इत्यादीनि जी-

वस्य, सामान्यार्पणादेकः पुद्गलः विशेषार्पणाया अणुस्कंधभेदाद् द्वितयः, इत्यादि पुद्गलादीनां च एकाद्येकोत्तरस्थानानि वर्ण्यंते इति स्थानं नाम तृतीयमंगं । सं—संग्रहेण सादृश्यसामान्येन अवेयंते ज्ञायंते जीवादिपदार्था द्रव्यक्षेत्रकालभावानाश्रित्य अस्मिन्निति समवायांगं। तत्र द्रव्याश्रयेण धर्मास्तिकायेन अधर्मास्तिकायः सदृशः । संसारिजीवेन संसारिजीवः सदृशः । मुक्तजीवेन मुक्तजीवः सदृशः इत्यादिर्द्रव्यसमवायः । क्षेत्राश्रयेण सीमंतनरक-मनुष्यक्षेत्र--ऋतुविद्रक--सिद्धक्षेत्राणि प्रदेशतः सदृशानि। अवधिस्थान-नरक-जंबूद्वीप- सर्वार्थसिद्धिविमानानि सदृशानि इत्यादि क्षेत्रसमवायः । एकसमयः एकसमयेन सदृशः, आवलिः आवल्या सदृशी, प्रथमपृथ्वीनारकभावनव्यंतराणां जघन्यायूंषि सदृशानि । सप्तमपृथ्वीनरकसर्वार्थसिद्धिदेवानां उत्कृष्टायुषी सदृशे इत्यादिः कालसमवायः । केवलज्ञानं केवलदर्शनेन सदृशमित्यादिर्भावसमवायः इति समवायाख्यं चतुर्थमंगं । विशेषैः बहुप्रकारैराख्यातं किमस्ति जीवः? किं नास्ति जीवः? किमेको जीवः? किमनेको जीवः? किं नित्यो जीवः? किमनित्यो जीवः? किं वक्तव्यो जीवः? किमवक्तव्यो जीव इत्यादीनि षष्टिसहस्रसंख्यानि भगवदर्हत्तीर्थंकरसन्निधौ गणधरदेवप्रश्नवाक्यानि प्रज्ञाप्यंते कथ्यंते यस्यां सा व्याख्याप्रज्ञप्तिनाम पंचममंगं । नाथः-त्रिलोकेश्वराणांस्वामी तीर्थंकरपरमभट्टारकः तस्य धर्मकथा जीवादिवस्तुस्वभावकथनं, घातिकर्मक्षयानंतरकेवलज्ञानसहोत्पन्नतीर्थंकरत्वपुण्यातिशयविजृंभितमहिम्नः तीर्थंकरस्य पूर्वाह्णमध्याह्नापराह्णार्धरात्रेषु षट्षट्घटिकाकालपर्यंतं द्वादशगणसभामध्ये स्वभावतो दिव्यध्वनिरुद्गच्छति अन्यकालेऽपि गणधरशक्रचक्रधरप्रश्नानंतरं चोद्भवति एवं समुद्भूतो दिव्यध्वनिः समस्तासन्नश्रोतृगणानुदिश्य उत्तमक्षमादिलक्षणं रत्नत्रयात्मकं वा धर्मं कथयति । अथवा ज्ञातुर्गणधरदेवस्य जिज्ञासमानस्य प्रश्नानुसारेण तदुत्तरवाक्यरूपा धर्मकथा तत्पृष्टास्तित्वनास्तित्वादिस्वरूपकथनं, अथवा ज्ञातॄणां तीर्थंकरगणधरशक्रचक्रधरादीनां धर्मानुबंधिकथोपकथाकथनं नाथधर्मकथा ज्ञातृधर्मकथानाम वा षष्ठमंगं ॥ ३५६ ॥

मं० प्र०—द्रव्यश्रुतमाधिकृत्य निरुक्तिप्रतिपाद्यार्थपदसंख्याविशेषाणा तत्तदंगपूर्वेषु प्ररूपणा क्रियते भावश्रुते निरुक्त्याद्यसंभवात् । द्वादशांगानां प्रथममाचारांग मोक्षार्थस्य परमागमस्य मुमुक्षुभिरद्रियमाणत्वेन मोक्षहेतुसंवरनिर्जराकारणपंचाचारादिसकलचारित्रप्रतिपादकस्य शास्त्रस्य प्रथमतो वक्तव्यत्व युक्तिसिद्धमिति चतुर्ज्ञानसप्तर्धिसंपन्नैर्गणधरदेवैस्तीर्थकरमुखारविंदसंभूतसर्वभाषात्मक दिव्यध्वनिश्रवणावधारितसमस्तशब्दार्थैः शिष्यप्रशिष्यानुग्रहार्थं विरचितस्य श्रुतस्कंधस्य द्वादशांगानां मध्ये आचारांगं प्रथम विरचितं । आचरंति—समततः अनुतिष्ठंति मोक्षमार्गमाराधयंत्यस्मिन्ननेनेति वा आचारः, तस्मिन्नाचारांगे कथं चरेत् ? कथं तिष्ठेत् ? कथमासीत ? कथं शयीत ? कथं भाषेत ? कथं भुंजीत ? कथं पापं न बध्यते ? इत्यादि गणधरप्रश्नानुसारेण यतं चरेत् ? यतं तिष्ठेत् ? यतमासीत, यत शयीत, यतं भाषेत, यतं भुंजीत, एव पापं न बध्यते इत्याद्युत्तरवाक्यप्रतिपादितं मुनीना समस्तंमाचरणं वर्ण्यते । सूत्रयति—संक्षेपेणार्थं सूचयतीति सूत्रं परमागमः, तदर्थंकृत—करण ज्ञानविनयादिनिर्विघ्नाध्ययनादिक्रिया । अथवा प्रज्ञापना—कल्प्याकल्प्य—छेदोपस्थापना—व्यवहारधर्मक्रियाः स्वसमयपरसमयस्वरूपं च सूत्रैः कृतं—करणं क्रियाविशेषो यस्मिन्वर्ण्यते तत्सूत्रकृतं नाम द्वितीयमंगं । तिष्ठंत्यस्मिन्नेकाद्येकोत्तराणि स्थानानीति स्थानं तस्मिन् संग्रहनयेन एक एवात्मा, व्यवहारनयेन संसारी मुक्तश्चेति द्विविकल्पः । उत्पादव्ययध्रौव्ययुक्तः इति त्रिलक्षणः । कर्मवशाच्चतुर्गतिषु संक्रामतीति चतुःसंक्रमणयुक्तः । औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभेदेन पंचविशिष्टधर्मप्रधानः । पूर्वदक्षिणपश्चिमोत्तरोर्ध्वाधोगतिभेदेन संसारावस्थायां षट्कोपक्रमयुक्तः । स्यादस्ति,

स्यान्नास्ति, स्यादस्तिनास्ति, स्यादवक्तव्यःस्यादस्त्यवक्तव्यःस्यान्नास्त्यवक्तव्यःस्यादस्तिनास्त्यवक्तव्यः इत्यादि सप्तभंगीसद्भाव उपयुक्तः। अष्टविधकर्मास्रवण युक्तत्वादष्टास्रवः, नव-जीवाजीवास्रवबंधसंवरनिर्जरामोक्षपुण्यपापरूपा अर्थाः पदार्था विषया यस्य स नवार्थः । पृथिव्यप्तेजोवायुप्रत्येकसाधारणाद्वित्रिचतुःपचें-द्रियभेदाद्दशस्थानकः इत्यादीनि जीवस्य, सामान्यार्पणया एकः पुद्गलः, विशेषार्पणया अणुस्कंधभेदाद् द्वितयः इत्यादि पुद्गलादीनां च एकाद्येकोत्तरस्थानानि वर्ण्यंते इति स्थानं नाम तृतीयमंगं । सं-सग्रहेण-सादृश्यसामान्येन अवेयते-ज्ञायंते जीवादिपदार्था द्रव्यक्षेत्रकालभावानाश्रित्य यस्मिन्निति समवायांगं। तत्र द्रव्याश्रयेण धर्मास्तिकायेन अधर्मास्तिकायः सदृशः, संसारिजीवेन संसारिजीवःसदृशः, मुक्तजीवेन मुक्तजीवः सदृशः, इत्यादिर्द्रव्यसमवायः, क्षेत्राश्रयेण सीमंतनरकमनुष्यक्षेत्रऋजुविद्रकाणि सदृशानि । अवधिस्थाननरकजंबूद्वीपसर्वार्थसिद्धिविमानानि सदृशानि इत्यादिः क्षेत्रसमवायः । एकसमयः एकसमयेन सदृशः, आवलिः आवल्या सदृशी, प्रथमपृथ्वीनारकभावनव्यंतराणा जघन्यायूंषि सदृशानि । सप्तमपृथ्वीनारकसर्वार्थसिद्धिदेवानामुत्कृष्टायुषी सदृशे इत्यादिः कालसमवायः। केवलज्ञानं केवलदर्शनेन सदृशमित्यादिर्भावसमवायः। इति समवायाख्यं चतुर्थमंगं । विशेषैः-बहुत्वप्रकारैः आख्या, किमस्ति जीवः, किं नास्ति जीव., किमेको जीवः, किमनेको जीवः, किंनित्यो जीवः, किमनित्यो जीवः, किं वक्तव्यो जीवः, किमवक्तव्यो जीवः, इत्यादीनि षष्टिसहस्रसंख्यानि भगवदर्हत्तीर्थकरसन्निधौ गणधरदेवप्रश्नवाक्यानि प्रज्ञाप्यते- कथ्यते यस्या सा व्याख्याप्रज्ञप्तिनाम पंचममंगं। नाथः-त्रिलोकेश्वराणां स्वामी तीर्थकरपरम-भट्टारक' तस्य धर्मकथा जीवादिवस्तुस्वभावकथनं घातिकर्मक्षयानतरकेवलज्ञानसहोत्पन्नतीर्थकरत्वपुण्यातिशयावजृंभितमहिम्नः तीर्थकरस्य पूर्वाह्णमध्या-ह्नापराह्णार्धरात्रेषु षट्षट्घटिकाकालपर्यंतं द्वादशगणसभामध्ये स्वभावतो दिव्यध्वनिरुद्गच्छति, अन्यकालेऽपि गणधरशक्रचक्रधरप्रश्नानंतरं चोद्भवति एव समुद्भूतो दिव्यध्वनिः समस्तासन्नश्रोतृगणानुत्तमक्षमादिलक्षण वा धर्मं कथयति। अथवा ज्ञातुर्गणधरदेवस्य जिज्ञासमानस्य प्रश्नानुसारेण तदुत्तरवाक्य-रूपा धर्मकथा तत्पृष्टास्तित्वनास्तित्वादिस्वरूपकथनं। अथ वा ज्ञातृणा तीर्थकरगणधरशक्रचक्रवर्त्यादीना धर्मानुबंधिकथोपकथाकथनं नाथधर्मकथा ज्ञातृधर्म-कथा नाम वा षष्ठमंग ॥ ३५६ ॥

सं० चं०—द्रव्यश्रुतकी अपेक्षा सार्थक निरुक्ति लीएं अंगपूर्वके पदनिकी संख्या कहिए है जातैं भावश्रुत विषैं निरुक्त्यादिक संभवैही नाहीं तहां द्वादश अंगनिविषैं प्रथम ही आचारांग है जातैं परमागम जो है सो मोक्षके निमित्त है याहीतैं मोक्षाभिलाषी याकौं आदरं हैं तहां मोक्षका कारण संवरं निर्जरा तिनिका कारण पंचाचारादि सकल चारित्र है तातैं तिस चारित्रका प्रतिपादक शास्त्र पहिलैं कहना सिद्ध भया तीहि कारणतैं च्यारि ज्ञान सप्त ऋद्धिके धारक गणधर देवनिकरि तीर्थंकरके मुखकमलतैं उत्पन्न जो सर्व भाषामय दिव्यध्वनि ताकं सुननेतैं जो अर्थ अवधारण किया तिनिकरि शिष्य प्रतिशिष्यनिके अनुग्रहनिमित्त द्वादशांगरूप श्रुत रचना करी तीहिविषैं पहिलैं आचारांग कह्या सो आचरन्ति कहिए समस्तपनैं मोक्षकौं आराधै हैं जाकरि सो आचार, तिहिं

आचारांगविषैं ऐसा कथन है जो कैसैं चलिए ? कैसैं खडे रहिये ? कैसैं बैठिये ? कैसैं सोइए ? कैसैं बोलिए ? कैसैं खाइए ? कैसैं पाप कर्म न बंधैं ? इत्यादि गणधर प्रश्नके अनुसार यतनतैं चलिये यतनतैं खडे रहिये यतनतैं बैठिए यतनतैं सोइए यतनतैं बोलिए यतनतैं खाइये ऐसैं पापकर्म न बंधैं इत्यादि उत्तर वचन लीयें मुनीश्वरनिका समस्त आचरण इस आचारांगविषैं वर्णन कीजिये है। बहुरि सूत्रयति कहिए संक्षेपतैं अर्थकौं सूचै कहै ऐसा जो परमागम सो सूत्र ताके अर्थकृतं कहिए कारणभूत ज्ञानका विनय आदि निर्विघ्न अध्ययन आदि क्रिया विशेष सो जिसविषैं वर्णन कीजिये है। अथवा सूत्रकरि कीया धर्मक्रियारूप वा स्वमत परमतका स्वरूप क्रिया रूप विशेष सो जिस विषैं वर्णन कीजिये सो सूत्रकृत नामा दूसरा अंग हैं। बहुरि तिष्ठन्ति कहिए एक आदि एक एक बंधता स्थान जिस विषै पाइये सो स्थाननामा तीसरा अंग है तहां ऐसा व्याख्यान है संग्रह नयकरि आत्मा एक है व्यवहार नयकरि संसारी अर मुक्त दोय भेद संयुक्त है। बहुरि उत्पाद व्यय ध्रौव्य इनि तीन लक्षणनिकरि संयुक्त है। बहुरि कर्मके वशतैं च्यारि गतिविषैं भ्रमै है तातैं चतुःसंक्रमणयुक्त है। बहुरि औपशमिक क्षायिक क्षायोपशमिक औदयिक पारिणामिक भेद करि पंचस्वभाव करि प्रधान है। बहुरि पूर्व पश्चिम दक्षिण उत्तर ऊर्ध्व अध भेदकरि छह गमन करि संयुक्त है। संसारी जीव विग्रह गतिविषैं विदिशामें गमन न करै श्रेणीवद्ध छहों दिशाविषैं गमन करै है। बहुरि स्यादस्ति स्यान्नास्ति स्यादस्ति नास्ति स्यादवक्तव्य स्यादस्ति अवक्तव्य स्यान्नास्ति अवक्तव्य स्यादस्तिनास्तिअवक्तव्य इत्यादि सप्तभंगी विषैं उपयुक्त है। बहुरि आठ प्रकार कर्मका आश्रय करि संयुक्त है। बहुरि जीव अजीव आस्रव बंध संवर निर्जरा मोक्ष पुण्य पाप ये नव पदार्थ हैं विषय जाके ऐसा नवार्थ है। बहुरि पृथ्वी अप् तेज वायु प्रत्येक वनस्पती साधारण वनस्पति द्वींद्रिय त्रींदिय चतुरिन्द्रिय पंचेन्द्रिय भेदतैं दश स्थान हैं। इत्यादि जीवकौं प्ररूपै है। बहुरि पुद्गल सामान्य अपेक्षा एक है विशेष करि अणुस्कन्धके भेदतैं दोय प्रकार है इत्यादि पुदलकौं प्ररूपै है। ऐसैं एकने आदि देकरि एक एक बंधता स्थान इस अंगविषैं वर्णिये है। बहुरि 'सं' कहिये समानता करि अवेयंते कहिये जीवादि पदार्थ जिसविषैं जानिये सो समवायांग चौथा जानना।

इसविषैं द्रव्य क्षेत्र काल भाव अपेक्षा समानता प्ररूपै हैं तहां द्रव्यकरि धर्मास्तिकाय अरअधर्मास्तिकाय समान है। संसारी जीवनिकरि संसारी जीव समान हैं। मुक्तजीवकरि मुक्तजीव समान हैं इत्यादिक द्रव्य समवाय है। बहुरि क्षेत्रकरि प्रथम नरकका प्रथम पाथडेका सीमंत नामा इंद्रकविला अर अढाई द्वीपरूप मनुष्यक्षेत्र प्रथम स्वर्गका प्रथम पटलका ऋजु नामा इंद्रक विमान अर सिद्धसिला सिद्धक्षेत्र ये समान हैं। बहुरि सातवां नरकका अवधि स्थान नामा इंद्रक विला अर जंबूद्वीप अर सर्वार्थसिद्धिविमान ये समान हैं इत्यादि क्षेत्र समवाय है। बहुरि कालकरि एक समय एक समय समान है। आवली आवली समान है। प्रथम पृथ्वीके नारकी भवनवासी व्यंतर इनिकी जघन्य आयु समान है बहुरि सातवीं पृथ्वीके नारकी सर्वार्थसिद्धिके देव इनिकी उत्कृष्ट आयु समान है इत्यादिक कालसमवाय है। बहुरि भावकरि केवलज्ञान केवलदर्शन समान हैं इत्यादि भावसमवाय है ऐसें इत्यादि समानता इस अंगविषैं वर्णिये हैं। बहुरि 'वि' कहिये विशेषकरि बहुत प्रकार आख्या कहिये गणधरके कीये प्रश्न प्रज्ञाप्यंते कहिये जानिये जिसविषैं ऐसा व्याख्याप्रज्ञप्तिनामा पांचवा अंग जानना। इस विषैं ऐसा कथन है—कि जीवअस्ति है कि जीवनास्ति है कि जीव एक है कि जीव अनेक है कि जीव नित्य है कि जीव अनित्य है कि जीव वक्तव्य है कि जीव अवक्तव्य है इत्यादि साठि हजार प्रश्न गणधर देव तीर्थंकरके निकट कीये ताका वर्णन इस अंगविषैं है। बहुरि नाथ कहिये तीन लोकका स्वामी तीर्थंकर परम भट्टारक तिनके धर्मकी कथा जिस विषैं होइ ऐसा नाथधर्मकथा नाम छठा अंग है। इसविषैं जीवादि पदार्थनिका स्वभाव वर्णन करिए है। बहुरि घातियाकर्मके नाशतैं उत्पन्न भया केवल ज्ञान उसहीके साथि तीर्थंकर नामा पुण्य प्रकृतिके उदयतें जाकै महिमा प्रकट भया ऐसा तीर्थंकरकै पूर्वाह्न मध्याह्न अपराह्न अर्धरात्रि इनि च्यारि कालनिविषैं छह छह घडी पर्यन्त बारह सभाके मध्य सहज ही दिव्यध्वनि होय है बहुरि गणधर इंद्र चक्रवर्ति इनके प्रश्न करनेतैं और कालविषैं भी दिव्यध्वनि हो है ऐसा दिव्यध्वनि निकटवर्ती श्रोतृजननिकौं उत्तम क्षमा आदि दश प्रकार वा रत्नत्रय स्वरूप धर्म कहै है इत्यादि इस अंग विषैं कथन है। अथवा इसही छठा अंगका दूसरा नाम ज्ञातृधर्मकथा है सो याका

अर्थ यहु है-ज्ञाता जो गणधर देव जाननेकी है इच्छा जाकैं ताका प्रश्नके अनुसारि उत्तर रूप जो धर्मकथा ताकौं ज्ञातृधर्मकथा कहिए। जे अस्ति नास्ति इत्यादिकरूप प्रश्न गणधरदेव कीये तिनिका उत्तर इस अंगविषै वर्णन करिये है। अथवा ज्ञाता तीर्थंकर गणधर इंद्र चक्रवर्त्यादिक तिनिका धर्मसंबंधी कथा इसविषैं पाइये है तातैं भी ज्ञातृधर्मकथा ऐसा नामका धारी छठा अंग जानना ॥ ३५६ ॥

## तो वासयअज्झयणे अंतयडे णुत्तरोववाददसे ।
## पण्हाणं वायरणे विवायसुत्ते य पदसंखा ॥ ३५७ ॥

तत उपासकाध्ययने अंतकृते अनुत्तरौपपाददशे ।
प्रश्नानां व्याकरणे विपाकसूत्रे च पदसंख्या ॥ ३५७ ॥

जी० प्र०—ततः परं उपासते आहारादिदानैर्नित्यमहादिपूजाविधानैश्च संघमाराधयंतीति उपासकाः ते अधीयंते पठ्यंते दर्शनिकव्रतिकसामयिकप्रोषधोपवाससचित्तविरतरात्रिभक्तव्रतब्रह्मचर्यारंभपरिग्रहनिवृत्तानुमतोद्दिष्टविरतभेदैकादशनिलयसंबंधिव्रतगुणशीलाचारक्रियामंत्रादिविस्तरैर्वर्ण्यंते अस्मिन्निति उपासकाध्ययनं नाम सप्तममंगं। प्रति तीर्थे दश दश मुनीश्वराः तीव्रं चतुर्विधोपसर्गं सोढ्वा इन्द्रादिभिर्विरचितां पूजादिप्रातिहार्यसंभावनां लब्ध्वा कर्मक्षयानंतरं संसारस्यांतं अवसानं कृतवंतोऽन्तकृतः। श्रीवर्धमानतीर्थे नमि-मतंग-सोमिल-रामपुत्र-सुदर्शन-यमलीक-वलिक-किष्कंविल-पालंवष्ट-पुत्रा इति दश। एवं वृषभादितीर्थेष्वपि दशदशांतकृतो वर्ण्यंते यस्मिंस्तदंतकृद्दशनामाष्टममंगं। तथा उपपादः प्रयोजनमेषां ते इमे औपपादिकाः। अनुत्तरेषु विजयवैजयंतजयंतापराजितसर्वार्थसिद्ध्याख्येषु औपपादिकाः अनुत्तरौपपादिकाः। प्रति तीर्थं दश दश मुनयो दारुणान् महोपसर्गान् सोढ्वा लब्धप्रातिहार्याः समाधिविधिना त्यक्तप्राणाः ये विजयाद्यनुत्तरविमानेषूपपन्नाः ते वर्ण्यंते यस्मिंस्तदनुत्तरौपपादिकदशं नाम नवममंगं। तत्र श्रीवर्धमानतीर्थे ऋजुदास-धन्य सुनक्षत्र-कार्तिकेय-नंद-नंदन-शालिभद्र-अभय-वारिषेण-चिलातपुत्रा इत्येते दारुणमहोपसर्गान् विजित्य इंद्रादिकृतां पूजां लब्ध्वा अनुत्तरविमानेषूपपन्नाः एवं वृषभादितीर्थेष्वपि परमागमानुसारेण ज्ञातव्याः। प्रश्नस्य-दूतवाक्यनष्टमुष्टिचिंतादिरूपस्य अर्थः त्रिकालगोचरो धनधान्यादिलाभालाभसुखदुःखजीवितमरणजयपराजयादिरूपो व्याक्रियते व्याख्यायते यस्मिंस्तत्प्रश्नव्याकरणं। अथवा शिष्यप्रश्नानुरूपतया अवक्षेपणी विक्षेपणी संवेजनी निर्वेजनी चेति कथा चतुर्विधा। तत्र प्रथमानुयोगकरणानुयोगचरणानुयोगद्रव्यानुयोगरूपपरमागमपदार्थानां तीर्थंकरादिवृत्तांतलोकसंस्थानदेशसकलयतिधर्मपंचास्तिकायादीनां परमताशंकारहितं कथनमाक्षेपणी कथा। प्रमाणनयात्मकयुक्तियुक्तहेतुत्वादिबलेन सर्वथैकांतादि परसम-

यार्थनिराकरणरूपा विक्षेपणी कथा। रत्नत्रयात्मकधर्मानुष्ठानफलभूततीर्थकराद्यैश्वर्यप्रभावतेजोवीर्यज्ञानसुखादिवर्णनारूपा संवेजनी कथा। संसारशरीरभोगरागजनितदुष्कर्मफलनारकादिदुःखदुष्कुलविरूपांगदारिद्र्यापमानदुःखादिवर्णनाद्वारेण वैराग्यकथनरूपा निर्वेजनी कथा एवंविधाः कथाः व्याक्रियंते व्याख्यायंते यस्मिंस्तत्प्रश्नव्याकरणं नाम दशममंगं। शुभाशुभकर्मणां तीव्रमंदमध्यमविकल्पशक्तिरूपानुभागस्य द्रव्यक्षेत्रकालभावाश्रयफलदानपरिणतिरूप उदयः-विपाकः तं सूत्रयति वर्णयतीति विपाकसूत्रं नामैकादशमंगं। एतेष्वाचारादिषु विपाकसूत्रपर्यंतेषु एकादशसु अंगेषु प्रत्येकं मध्यमपदानां संख्या यथाक्रमं वक्ष्यते इत्यर्थः ॥ ३५७ ॥

मं० प्र०—ततः उपासते आहारादिदानैर्नित्यमहादिपूजाविधानैश्च संघमाराधयतीत्युपासकाः, ते अधीयंते—पठ्यते दर्शनिकव्रतिकसामायिकप्रोषधोपवाससचित्तविरतरात्रिभक्तव्रतब्रह्मचर्यारंभपरिग्रहनिवृत्तानुमतोद्दिष्टविरतभेदैकादशनिलयमंबंधिव्रतगुणशीलाचाराक्रियामंत्रादिविस्तरैर्वर्ण्यंते अस्मिन्नित्युपासकाध्ययनं नाम सप्तममंगं। प्रति तीर्थं दश दश मुनीश्वराः तीव्रं चतुर्विधोपसर्गं सोढ्वा इंद्रादिभिर्विरचितां पूजादिप्रातिहार्यसंभावनां लब्ध्वा कर्मक्षयानंतरं संसारस्यांतं कृतवंतोऽतकृतः। श्रीवर्धमानतीर्थे नमि—मतग—सोमिल—रामपुत्र—सुदर्शन—यमलीक—वलिक—किस्कविल—पालवष्ट—पुत्रा इति दश। एवं वृषभादितीर्थेष्वपि दश दश अंतकृतो वर्ण्यंते यस्मिन् तदतकृद्दश नामाष्टममंग। तथा उपपादः प्रयोजन येषा ते इमे औपपादिकाः, अनुत्तरेषु विजय—वैजयंत—जयत—अपराजित—सर्वार्थसिद्धयाख्येषु औपपादिकाः अनुत्तरौपपादिकाः। प्रति तीर्थं दश दश मुनयः दारुणान् महोपसर्गान् सोढ्वा लब्धप्रातिहार्याः समाधिविधिना त्यक्तप्राणाः ये विजयाद्यनुत्तरविमानेषूत्पन्नाः ते वर्ण्यंते यस्मिन् तदनुत्तरोपपादिकदश नाम नवममंग। तत्र श्रीवर्धमानतीर्थे ऋजुदास—धन्य—सुनक्षत्र—कार्तिकेय—नद—नदन—शालिभद्र—अभय—वारिषेण—चिलातपुत्रा इत्येते दारुणमहोपसर्गान् विजित्य इद्रादिकृता पूजां लब्ध्वा अनुत्तरविमानेषूपपन्नाः एवं वृषभादितीर्थेष्वपि परमागमानुसारेण ज्ञातव्याः। प्रश्नस्य—दूतवाक्यनष्टमुष्टिचिंतादिरूपस्य अर्थस्त्रिकालगोचरो धनधान्यादिलाभालाभसुखदुःखजीवितमरणजयपराजयादिरूपो व्याक्रियते यस्मिन् तत्प्रश्नव्याकरण अथवा शिष्यप्रश्नानुरूपतया आक्षेपिणी विक्षेपिणी सवेजनी निर्वेजनी चेति कथा चतुर्विधा। तत्र प्रथमानुयोगकरणानुयोगचरणानुयोगद्रव्यानुयोगरूपपरमागमपदार्थानां तीर्थकरादिवृत्तातलोकसंस्थानदेशसर्वयतिधर्मपंचास्तिकायादीनां परमताशंकारहितकथनं—आक्षेपणी कथा। प्रमाणनयात्मकयुक्तियुक्तहेतुवादवलेन सर्वथैकातादिपरसमयार्थनिराकरणरूपा विक्षेपणी कथा। रत्नत्रयात्मकधर्मानुष्ठानफलभूततीर्थकरायैश्वर्यप्रभावतेजोवीर्यज्ञानसुखादिवर्णनारूप सवेजनी कथा। संसारशरीरभोगरागजनितदुष्कर्मफलनारकादिदुष्कुलविरूपागदारिद्र्यापमानदुःखादिवर्णनाद्वारेण वैराग्यकथनरूपा निर्वेजनी कथा, एवंविधाः कथा व्याक्रियते व्याख्यायते यस्मिन् तत्प्रश्नव्याकरणं नाम दशममगं। शुभाशुभकर्मणा तीव्रमंदमध्यमविकल्पशक्तिरूपानुभागस्य द्रव्यक्षेत्रकालभावाश्रयः फलदानपरिणतिरूप उदयो विपाकः त सूत्रयति वर्णयतीति विपाकसूत्रं नामैकादशमंगं, एतेषु आचारादिषु विपाकसूत्रपर्यंतेष्वेकादशसु अगेषु प्रत्येकं मध्यमपदाना सख्या यथाक्रमं वक्ष्यते इत्यर्थः ॥ ३५७ ॥

स० च०—बहुरि तहां पीछैं उपासते कहिये आहारादि दानकरि वा पूजनादिकरि संघकौं सेवैं ऐसे जे श्रावक तिनिकौं उपासक कहिये, ते 'अधीयंते' कहिये पढैं सो उपासकाध्ययन नामा सातवां अंग है। इसविषैं दर्श-

निक १ व्रतिक २ सामायिक ३ प्रोषधोपवास ४ सचित्तविरति ५ रात्रिभक्तविरति ६ ब्रह्मचर्य ७ आरंभनिवृत्त ८ परिग्रहनिवृत्त ९ अनुमतिविरत १० उद्दिष्टविरत ११ ये गृहस्थकी ग्यारह प्रतिमा वा व्रत शील आचार क्रिया मंत्रादिक इनिका विस्तारकरि प्ररूपण है। बहुरि एक एक तीर्थंकरका तीर्थकालविषैं दश दश मुनीश्वर तीव्र चारि प्रकारका उपसर्ग सहि इंद्रादिक करि करी हुई पूजा आदि प्रातिहार्यरूप प्रभावना पाइ पापकर्मका नाशकरि संसारका जो अंत ताहि करते भये तिनिकौं अंतकृत् कहिये। तिनिका कथन जिस अंगमें होइ ताकौं अंतकृद्दशांग आठवां अंग कहिये। तहां वर्धमान स्वामीके वारैं नमि १ मतंग २ सोमिल ३ रामपुत्र ४ सुदर्शन ५ यमलीक ६ वलिक ७ किष्कंवल ८ पालंवष्ट ९ पुत्र १० ये दशभये। ऐसैंही वृषभादिक एक एक तीर्थंकरके वारैं दश दश अंतकृत् केवली हो हैं तिनिका कथन इस अंगविषैं है। बहुरि उपपाद है प्रयोजन जिनिका ऐसे औपपादिक कहिये। बहुरि अनुत्तर कहिये विजय १ वैजयंत २ जयंत ३ अपराजित ४ सर्वार्थसिद्धि ५ इनि विमाननिविषैं औपपादिक होंहिं उपजैं तिनिकौं अनुत्तरौपपादिक कहिये सो एक एक तीर्थंकरके वारैं दश दश महामुनि दारुण उपसर्ग सहि करि बड़ी पूजा पाइ समाधिकरि प्राण छोड़ि विजयादिक अनुत्तर विमाननिविषै उपजैं तिनिकी कथा जिस अंगविषैं होइ सो अनुत्तरौपपादिक दशांगनामा नवमा अंग जानना। तहां श्रीवर्धमान स्वामीके वारै—ऋजुदास १ धन्य २ सुनक्षत्र ३ कार्तिकेय ४ नंद ५ नंदन ६ सालिभद्र ७ अभय ८ वारिषेण ९ चिलातीपुत्र १० ये दश भये। ऐसैं ही दश दश अन्य तीर्थंकरके समय भी भये हैं। तिनि सवनिका कथन इस अंग विषैं है। बहुरि प्रश्न कहिये बूझनहारा पुरुष जो बूझै सो व्याक्रियंते कहिये जिसविषैं वर्णन करिये सो प्रश्न व्याकरण नामा दशवां अंग जानना। इसविषैं जो कोई बूझनेवाला गई वस्तुकौं वा मूठीकी वस्तुकौं वा चिंता वा धन धान्य लाभ अलाभ सुख दुःख जीवना मरणा जीति हारि इत्यादिक प्रश्न बूझै अतीत अनागत वर्तमानकाल संबंधी ताकौं यथार्थ कहनेका उपायरूप व्याख्यान इस अंगविषैं है। अथवा शिष्यकौं प्रश्नके अनुसार आक्षेपिणी १ विक्षेपिणी २ संवेजिनी ३ निर्वेजिनी ४ ये

च्यारि कथा भी प्रश्नव्याकरण अंगविषै प्रकट कीजिये है। तहां तीर्थंकरादिकका चारित्ररूप प्रथमानुयोग, लोक का वर्णन रूप करणानुयोग, श्रावक मुनिधर्मका कथनरूप चरणानुयोग, पंचास्तिकायादिकका कथनरूप द्रव्यानुयोग इनिका कथन अर परमतकी शंका दूरि करिए सो आक्षेपिणी कथा बहुरि प्रमाण नय रूप युक्ति तीहिं करि न्यायके बलतैं सर्वथा एकांतवादी आदि परमतनिकरि कह्या अर्थ ताका खंडन करना सो विक्षेपिणीकथा बहुरि रत्नत्रयरूपधर्म अर तीर्थंकरादिपदकी ईश्वरता वा ज्ञान सुख वीर्यादिकरूप धर्मका फल ताके अनुरागकौं कारण सो संवेजिनी कथा बहुरि संसार देह भोगके रागतैं जीव नारकादिविषै दरिद्र अपमान पीडा दुःख भोगवै है इत्यादिक विराग होनेकौं कारणरूप जो कथा सो निर्वेजिनी कथा कहिये सो ऐसी भी कथा प्रश्नव्याकरण अंग विषैं पाइए है। बहुरि विपाक जो कर्मका उदय ताकौं सूत्रयति कहिये कहै सो विपाक सूत्रनामा ग्यारमां अंग जानना इसविषै कर्मनिका फलदेने रूप जो परिणमन सोई उदय कहिये ताका तीव्र मंद मध्यम अनुमान करि द्रव्य क्षेत्र काल भाव अपेक्षा वर्णन पाइए है ऐसैं आचारनैं आदि देकरि विपाक सूत्र पर्यंत ग्यारह अंग तिनिके पदनिकी संख्या कहिए है ॥ ३५७ ॥

**अट्ठारस छत्तीसं बादालं अडकडी अडविछप्पण्णं ।**
**सत्तरि अट्ठावीसं चोद्दालं सोलससहस्सा ॥ ३५८ ॥**
**इगिदुगपंचेयारं तिवीसदुतिणउदिलक्ख तुरियादी ।**
**चुलसीदिणक्खमेया कोडी य विवागसुत्तम्हि ॥ ३५९ ॥**

अष्टादश षट्त्रिंशत् द्वाचत्वारिंशत् अष्टकृतिः अष्टद्विपंचाशत् ।

सप्ततिः अष्टाविंशतिः चतुश्चत्वारिंशत् षोडश सहस्राणि ॥ ३५८ ॥
एकद्विपंचैकादशत्रयोविंशतिद्वित्रिनवतिलक्षं चतुर्थादिषु।
चतुरशीतिलक्षमेका कोटिश्च विपाकसूत्रे ॥ ३५९ ॥

जी० प्र०—सहस्रशब्दः सर्वत्र संबध्यते। आचारांगे अष्टादशसहस्राणि पदानि १८०००। सूत्रकृतांगे षट्त्रिंशत्सहस्राणि पदानि ३६०००। स्थानांगे द्वाचत्वारिंशत्सहस्राणि पदानि ४२०००। चतुर्थादिषु समवायादिषु प्रश्नव्याकरणपर्यंतेषु सप्तस्वंगेषु एकलक्षादियोगः क्रियते। तद्यथा—समवायांगे एकलक्षचतुःषष्टिसहस्राणि पदानि १६४०००। व्याख्याप्रज्ञप्त्यंगे द्विलक्षाष्टाविंशतिसहस्राणि पदानि २२८०००। ज्ञातृकथांगे पंचलक्षषट्पंचाशत्सहस्राणि पदानि ५५६०००। उपासकाध्ययनांगे एकादशलक्षसप्ततिसहस्राणि पदानि ११७००००। अंतकृद्दशांगे त्रयोविंशतिलक्षाष्टाविंशतिसहस्राणि पदानि २३२८०००। अनुत्तरौपपादिकदशांगे द्विनवतिलक्षचतुश्चत्वारिंशत्सहस्राणि पदानि ९२४४०००। प्रश्नव्याकरणांगे त्रिनवतिलक्षषोडशसहस्राणि पदानि ९३१६०००। विपाकसूत्रांगे एककोटिचतुरशीतिलक्षाणि पदानि १८४०००००॥ ३५८-३५९ ॥

मं० प्र०—सोलससहस्सा इति सहस्रशब्दः प्रत्येकमभिसंबध्यते आचारांगे अष्टादशसहस्राणि पदानि १८०००। सूत्रकृतांगे षट्त्रिंशत्सहस्राणि पदानि ३६०००। स्थानांगे द्वाचत्वारिंशत्सहस्राणि पदानि ४२०००। तुरियादी—चतुर्थादिषु समवायादिषु प्रश्नव्याकरणपर्यंतेषु सप्तस्वंगेषु एकलक्षादियोगः कर्तव्यः। तद्यथा—समवायांगे एकलक्षचतुःषष्टिसहस्राणि पदानि १६४०००। व्याख्याप्रज्ञप्त्यंगे द्विलक्षाष्टाविंशतिसहस्राणि पदानि २२८०००। ज्ञातृकथांगे पंचलक्षषट्पंचाशत्सहस्राणि पदानि ५५६०००। उपासकाध्ययनांगे एकादशलक्षसप्ततिसहस्राणि पदानि ११७००००। अंतकृद्दशांगे त्रयोविंशतिलक्षाष्टाविंशतिसहस्राणि पदानि २३२८०००। अनुत्तरौपपादिकदशांगे द्विनवतिलक्षचतुश्चत्वारिंशत्सहस्राणि पदानि ९२४४०००। प्रश्नव्याकरणांगे त्रिनवतिलक्षषोडशसहस्राणि पदानि ९३१६०००। विपाकसूत्रांगे एककोटिचतुरशीतिलक्षाणि पदानि १८४००००० ॥ ३५९ ॥

**स० चं०—प्रथम गाथा विषैं अठारह आदि हजार कहे। बहुरि दूसरी गाथाविषैं चौथा अंग आदि अंगनिविषै एकादिक लाख सहित हजार कहे अर विपाकसूत्रका जुदा वर्णन कीया अब इनि गाथानिके अनुसारि एकादश अंगनिकी पदनिकी संख्या कहिये है—आचारांगविषैं पद अठारह हजार १८००० सूत्रकृतांगविषैं पद छत्तीस हजार ३६००० स्थानांगविषैं बियालीस हजार ४२००० समवायांगविषैं एक लाख अर आठकी कृति चौंसठि हजार १६४००० व्याख्याप्रज्ञप्तिविषैं दोय लाख अठाईस हजार २२८००० ज्ञातृकथा अंगविषैं पांचलाख छप्पन हजार ५५६००० उपासकाध्ययन अंगविषैं ग्यारह लाख सत्तरि हजार ११७०००० अंतकृतदशांगविषैं**

तेईस लाख अट्ठाईस हजार२३२८००० अनुत्तरौपपादक दशांगविषैं वाणवै लाख चवालीस हजार९२४४०००प्रश्न व्याकरण अंगविषैं तिराणवै लाख सोलह हजार ९३१६००० विपाकसूत्र अंगविषैं एक कोडि चौरासी लाख १८४००००० ऐसें एकादश अंगनिविषैं पदनिकी संख्या जाननी ॥ ३५८–३५९ ॥

**वापणनरनोनानं एयारंगे जुदा हु वादम्हि ।**
**कनजतजमताननमं जनकनजयसीम वाहिरे वण्णा ॥३६०॥**

वापणनरनोनानं एकदशांगे युतिर्हि वादे ।
कनजतजमताननमं जनकनजयमीम वाह्ये वर्णाः ॥ ३६० ॥

जी० प्र०—पूर्वोक्तैकादशांगपदसंख्यायुतिः अक्षरसंख्यया वापणनरनोनानं चतुःकोटिपंचदशलक्षद्विसहस्रप्रमिता भवति ;४१५०२००० खलु स्फुटं दृष्टिवादांगे कनजतजमताननमं अष्टोत्तरशतकोट्यष्टाषष्टिलक्षपट्पंचाशत्सहस्रपंचपदानि भवंति १०८६८५६००५ । जनकनजयसीम अष्टकोट्येकलक्षाष्टसहस्रैकशतपंचसप्तत्यक्षराणि सामायिकादिचतुर्दशभेदेंऽगवाह्यश्रुते भवंति ८०१०८१७५ । दृष्टीनां त्रिषष्ट्युत्तरत्रिशतसंख्यानां मिथ्यादर्शनानां वादः अनुवादः तन्निराकरणं च यस्मिन् क्रियते तद् दृष्टिवादं नाम द्वादशमंगं । तद्यथा कौत्कल-कंठेविद्धि-कौशिक-हरिश्मश्रु-मांधपिक-रोमश—हारीत-मुंड-आश्वलायनादयः क्रियावाददृष्टयः अशीत्युत्तरशतं १८० । मरीचि-कपिल-उलूक-गार्ग्य-व्याघ्रभूति-वाद्वलिः—माठर- मौद्गलायनादयः अक्रियावाददृष्टयश्चतुरशीतिः ८४ । शाकल्य-वाल्कल-कुथुमि-सात्यमुग्रि-नारायण-कठ-माध्यंदिन-मौद—पैप्पलाद-वादरायण-स्विष्ठिक्य-दैत्यकायन-वसु-जैमिन्यादयः अज्ञानकुदृष्टयः सप्तषष्टिः ६७ । वशिष्ट-पाराशर-जतुष्कर्ण-वाल्मिकि-रोमहर्षणि-सत्यदत्त-व्यास-एलापुत्र ( तु ) औपमन्यव-ऐंद्रदत्त-आगस्त्यादयो वैनयिकदृष्टयो द्वात्रिंशत् ३२ । मिलित्वा मिथ्यावादाः त्रिषष्ट्यग्रत्रिशती भवंति ॥ ३६० ॥

मं० प्र०—युक्ताना एकादशागाना पदसख्यायुतिः अक्षरसज्ञया वा—प—ण—नर—नो—नान चतुःकोटिपंचदशलक्षद्विसहस्रप्रमिता ४१५०२००० । वादे—दृष्टिवादनाम्नि, द्वादश अगे कनजतजमताननमं अष्टोत्तरशतकोटयष्टाषष्टिलक्षषट्पंचाशत्सहस्राणि पंचाग्राणि पदानि १०८, ६८, ५६००५, दृष्टीना त्रिषष्ट्युत्तरत्रिशतसख्याना मिथ्यादर्शनाना वादः—अनुवादः, तन्निराकरणं च यस्मिन् क्रियते तद् दृष्टिवादं नाम द्वादशमंगं । तद्यथा—कौत्कल—काठेविद्धि—कौशिक—हरिश्मश्रु—माधपिक—रोमश—हारीत—मुंड—आश्वलायनादीना क्रियावाददृष्टीनामशीतिशत १८० । मरीचि—कपिल—उलूक—गार्ग्य व्याघ्रभू ति—वाद्वलि—माठर—मौद्गलादीना अक्रियावाददृष्टीना चतुरशीतिः ८४ । शाकल्य—वल्कल—कुथुमि—सात्यमुग्रि—नारायण—कठ—माध्यदिन—मौद—पैप्पलाद—वादरायण—स्वि-

ष्ठिक्य-दैतिकायन-वसु-जैमिन्यादीनां अज्ञानां अज्ञानकुदृष्टीनां सप्तषष्टिः ६७। वासिष्ठ-पराशर-जतुकर्ण-वाल्मीकि-रोमहर्षणि-सत्यदत्त-व्यास-एलापुत्र-औपमन्यव-ऐंद्रदत्त-अगस्त्यादीनां वैनयिकदृष्टीनां द्वात्रिंशत् ३२ इति मिलित्वा त्रिषष्ट्युत्तरा त्रिशती ३६३। अंगबाह्ये-सामायिकादिचतुर्दशभेदे जनकनजयसीम अष्टकोटयेकलक्षाष्टसहस्रपचसप्तत्युत्तरशतप्रमिताः अपुनरुक्ता वर्णाः ८०१०८१७५ ॥ ३६० ॥

स०चं०-इहां वा आगे अक्षर संज्ञाकरि अंकनिकौं कहैं हैं सो याका सूत्र पूर्वै गतिमार्गणाका वर्णनविषै पर्याप्त मनुष्यनिकी संख्या कही है तहां कह्या है 'कटपयपुरस्थवर्णैः' इत्यादि सूत्र कह्या है तिसहीतैं अक्षरसंज्ञाकरि अंक जानना। ककारादिक नव अक्षरनिकरि एक दोय आदि क्रमतैं नव अंक जानने। टकारादि नव अक्षरनिकरि नव अंक जानने। पकारादि पंच अक्षरनिकरि पंच अंक जानने। यकरादि आठ अक्षरनिकरि आठ अंक जानने। ञकार नकार इनिकरि बिंदी जानिये ऐसा कहि आए हैं सो इहां 'वापणनरनोनानं इनि अक्षरनिकरि चारि एक पांच बिंदी दोय बिंदी बिंदी बिंदी ए अंक जानना। ताके चारि कोडि पंद्रह लाख दोय हजार ४१५०२००० पद सर्व एकादश अंगनिका जोड दीयें भये। बहुरि दृष्टिवाद नाम बारहवां अंग ताविषै 'कनजतजमताननमं' कहिये एक बिंदी आठ छह आठ पांच छह बिंदी बिंदी पांच इनि अंकनिकरि एकसौ आठ कोडि अडसठि लाख छप्पन हजार पांच पद हैं १०८६८५६००५, सो दृष्टि कहिये मिथ्यादर्शन तिनिका है अनुवाद कहिये निराकरण जिसविषै ऐसा दृष्टिवाद नामा अंग बारहवां जानना। तहां मिथ्यादर्शनसंबंधी कुवादी तीनसै तरेसठि हैं तिनिविषै कौत्कल कांठेविद्धि कौशिक हरिश्मश्रु मांधपिक रोमश हारीत मुंड आश्वलायन इत्यादि क्रियावादी हैं सो इनिके एकसौ अस्सी १८० कुवाद हैं। बहुरि मारीचि कपिल उलूक गार्ग्य व्याघ्रभूति वाड्वालि माठर मौद्गलायन इत्यादि अक्रियावादी हैं तिनिके चौरासी ८४ कुवाद हैं। बहुरि साकल्य वाल्कलि कुथुमि सात्यमुग्री नारायण कठ माध्यंदिन मौद पैप्पलाद वादरायण स्विष्ठिक्य दैत्यकायन वसु जैमिन्य इत्यादि ए अज्ञानवादी हैं। इनिके सडसठि६७कुवाद हैं बहुरि वशिष्ठ पाराशर जतुकर्ण वाल्मिकि रोमहर्षिणि सत्यदत्त व्यास एलापुत्र उपमन्यु ऐंद्रदत्त अगस्ति इत्यादिक ए विनयवादी हैं इनिके कुवाद बत्तीस ३२ हैं। सब मिलाएं तीनसै

तरेसठि कुवाद भये इनिका वर्णन भावाधिकारविषैं कहैंगे इहां प्रवृत्तिविषैं इनि कुवादनिके जे जे अधिकारी तिनिके नाम कहे हैं। बहुरि अंग बाह्य जो सामायिकादिक तिनिविषैं 'जनकनजयसीम' कहिये आठ विंदी एक विंदी आठ एक सात पांच अंक तिनिके आठ कोडि एक लाख आठ हजार एकसौ पिचत्तरि ८०१०८१७५ अक्षर जानने ॥ ३६० ॥

**चंदरविजंबुदीवयदीवसमुद्दयवियाहपण्णत्ती ।**
**परियम्मं पंचविहं सुत्तं पढमाणि जोगमदो ॥ ३६१ ॥**
**पुव्वं जलथलमायाआगासयरूवगयामिमा पंच ।**
**भेदा हु चूलियाए तेसु पमाणं इणं कमसो ॥ ३६२ ॥**

चंद्ररविजंबूद्वीपकद्वीपसमुद्रकव्याख्याप्रज्ञप्तयः ।
परिकर्म पंचविधं सूत्रं प्रथमानुयोगमतः ॥ ३६१ ॥
पूर्वं जलस्थलमायाकाशकरूपगता इमे पंच ।
भेदा हि चूलिकायाः तेषु प्रमाणमिदं क्रमशः ॥ ३६२ ॥

जी० प्र०—दृष्टिवादागे अधिकाराः पंच। ते के? परिकर्म सूत्रं प्रथमानुयोगः पूर्वगतं चूलिका चेति। तत्र परितः सर्वतः कर्माणि गणितकरणसूत्राणि यस्मिन् तत्परिकर्म, तच्च पंचविधं चंद्रप्रज्ञप्तिः सूर्यप्रज्ञप्तिः जंबूद्वीपप्रज्ञप्तिः द्वीपसागरप्रज्ञप्तिः व्याख्याप्रज्ञप्तिश्चेति । तत्र चंद्रप्रज्ञप्तिः चंद्रस्य विमानायुःपरिवारऋद्धिगमनहानिवृद्धिसकलार्धचतुर्थांशग्रहणादीन् वर्णयति । सूर्यप्रज्ञप्तिः सूर्यस्यायुर्मंडलपरिवारऋद्धिगमनप्रमाणग्रहणादीन्वर्णयति । जंबूद्वीपप्रज्ञप्तिः जंबूद्वीपगतमेरुकुलशैलह्रदवर्षकुंडवेदिकावनखंडव्यंतरावासमहानद्यादीन् वर्णयति । द्वीपसागरप्रज्ञप्तिः असंख्यातद्वीपसागराणां स्वरूपं तत्रस्थितज्योतिर्वानभावनावासेषु विद्यमानाकृत्रिमजिनभवनादीन् वर्णयति । व्याख्याप्रज्ञप्तिः रूप्यरूपिजीवाजीवद्रव्याणां भव्याभव्यभेदप्रमाणलक्षणानां अ-

नंतरसिद्धपरंपरासिद्धानां अन्यवस्तूनां च वर्णनं करोति। सूत्रयति—सूचयति कुदृष्टिदर्शनानीति सूत्रं। जीवः अबंधकः अकर्ता निर्गुणः अभोक्ता स्वप्रकाशकः परप्रकाशकः अस्त्येव जीवः नास्त्येव जीवः इत्यादि क्रियाक्रियाज्ञानविनयकुदृष्टीनां त्रिषष्ठ्युत्तरत्रिशतमिथ्यादर्शनानि पूर्वपक्षतया कथयति। प्रथमानुयोगः प्रथमं मिथ्यादृष्टिमव्रतिकमव्युत्पन्नं वा प्रतिपाद्यमाश्रित्य प्रवृत्तोऽनुयोगोऽधिकारः प्रथमानुयोगः, । चतुर्विंशतितीर्थकरद्वादशचक्रवर्तिनवबलदेवनववासुदेवनवप्रतिवासुदेवरूपत्रिषष्टिशलाकापुरुषपुराणानि वर्णयति। पूर्वं चतुर्दशविधं विस्तरेण अग्रे वक्ष्यति। चूलिकापि पंचविधा जलगता स्थलगता मायागता आकाशगता रूपगता चेति। तत्र जलगता चूलिका जलस्तंभनजलगमनाग्निस्तंभाग्निभक्षणाग्न्यासनाग्निप्रवेशनादिकारणमंत्रतंत्रतपश्चरणादीन् वर्णयति। स्थलगता चूलिका मेरुकुलशैलभूम्यादिषु प्रवेशनशीघ्रगमनादिकारणमंत्रतंत्रतपश्चरणादीन् वर्णयति। मायागता चूलिका मायारूपेंद्रजालविक्रियाकारणमंत्रतंत्रतपश्चरणादीन् वर्णयति। रूपगता चूलिका सिंहकरितुरगरुरुनरतरुहरिणशशकवृषभव्याघ्रादिरूपपरावर्तनकारणमंत्रतंत्रतपश्चरणादीन् चित्रकाष्ठलेप्योत्खननादिलक्षणधातुवादरसवादखन्यावादादींश्च वर्णयति। आकाशगता चूलिका आकाशगमनकारणमंत्रतंत्रतपश्चरणादीन् वर्णयति। प्रागुक्तचंद्रप्रज्ञप्त्यादिषु क्रमशो यथाक्रमं पदप्रमाणं अनंतरमेव वक्ष्यमाणं जानीहि इति संबोधनमध्याहार्यं।३६१-३६२।

मं० प्र०—दृष्टिवादस्य अधिकाराः परिकर्म सूत्र प्रथमानुयोगः पूर्वगतं चूलिका चेति पंच भवंति। ततः परितः—सर्वतः, कर्माणि—गणितकरणसूत्राणि यस्मिन् तत्परिकर्म। तच्च पंचविध—चंद्रप्रज्ञप्तिः, सूर्यप्रज्ञप्तिः, जम्बूद्वीपप्रज्ञप्तिः, द्वीपसागरप्रज्ञप्तिः, व्याख्याप्रज्ञप्तिरिति। तत्र चंद्रप्रज्ञप्ति—चंद्रस्य विमानायुःपरिवारऋद्धिगमनवृद्धिहानिसकलार्धचतुर्भागग्रहणादीनि वर्णयति। सूर्यप्रज्ञप्तिः सूर्यस्यायुर्मंडलपरिवारऋद्धिगमनप्रमाणग्रहणादीनि वर्णयति, जंबूद्वीपप्रज्ञप्तिः जंबूद्वीपगतमेरुकुलशैलह्रदवर्षवेदिकावनखंडव्यंतरावासमहानद्यादीनां वर्णनं करोति। द्वीपसागरप्रज्ञप्तिः—असंख्यातद्वीपसागराणां स्वरूपस्य तत्रस्थितज्योतिर्वानभावनावासानां आवासं प्रति विद्यमानाकृत्रिमजिनभवनादीनां च वर्णनं करोति। व्याख्याप्रज्ञप्तिः—रूप्यरूपिजीवाजीवद्रव्याणां भव्याभव्यभेदप्रमाणलक्षणानां अनंतरपरंपरासिद्धानां अन्येषां च वस्तूनां वर्णनं करोति। सूत्रयति—सूचयति कुदृष्टिदर्शनानीति सूत्रं, जीवः अबंधकः, अकर्ता, निर्गुणः, अभोक्ता, स्वप्रकाशकः, परप्रकाशकः अस्त्येव जीवः, नास्त्येव जीवः इत्यादि क्रियाऽक्रियाज्ञानविनयकुदृष्टीनां त्रिषष्ठ्युत्तरत्रिशतमिथ्यादर्शनानि पूर्वपक्षतया कथयति। प्रथमं मिथ्यादृष्टिमव्रतिकमव्युत्पन्नं वा प्रतिपाद्यमाश्रित्य प्रवृत्तोऽनुयोगः—अधिकारः चतुर्विंशतितीर्थकरद्वादशचक्रवर्तिनवबलदेवनववासुदेवनवप्रतिवासुदेवानां त्रिषष्टिपुराणानि वर्णयति। अतःपरं पूर्वं चतुर्दशविधं तच्च अग्रेविस्तरेण वक्ष्यते। चूलिकाः जलगता स्थलगता मायागता आकाशगता रूपगता चेति इमे पंचभेदा भवंति। तत्र जलगता जलस्तंभनजलगमनाग्निस्तंभनभक्षणासनप्रवेशनादिकारणमंत्रतंत्रतपश्चरणादीनि वर्णयति। स्थलगता मेरुकुलशैलभूम्यादिषु प्रवेशनशीघ्रगमनादिकारणमंत्रतंत्रतपश्चरणादीनि वर्णयति। मायागता मायारूपेंद्रजालविक्रियाकारणमंत्रतंत्रतपश्चरणादीनि वर्णयति। रूपगता सिंहकरीतुरगरुरुनरतरुहरिणशशवृषभव्याघ्रादिरूपपरावर्तनकारणमंत्रतंत्रतपश्चरणादीनि चित्रकाष्ठलेप्योत्खननादिलक्षणं धातुवादरसवादखान्यवादादीनि च वर्णयति। आकाशगता आकाशगमनकारणमंत्रतंत्रतपश्चरणादीनि वर्णयति। तेषु चंद्रप्रज्ञप्त्यादिषु क्रमशः—यथाक्रमं पदमानं इदमनंतरमेव वक्ष्यमाणं जानीत हे भव्याः! इत्यध्याहारः॥ ३६१-३६१॥

**सं० च०—दृष्टिवाद नामा बारह्वां अंगके पंच अधिकार हैं परिकर्म १ सूत्र २ प्रथमानुयोग ३ पूर्वगत ४ चू-**

लिका ५ए पंच अधिकारहैं तिनिविषैं परित: कहिये सर्वांगतैं कर्माणि कहिये जिनतैं गुण कार भागहारादि रूप गणित होइ ऐसे कर्णसूत्र वे जिसविषैं पाइए सो परिकर्म कहिये सो परिकर्म पांच प्रकार है चंदप्रज्ञप्ति१ सूर्यप्रज्ञप्ति२ जंबूद्वीप प्रज्ञप्ति ३ द्वीपसागरप्रज्ञप्ति ४ व्याख्याप्रज्ञप्ति ५ । तहां चंद्रप्रज्ञप्ति चंद्रमाका विमान आयु परिवार ऋद्धि गमनविशेष वृद्धि हानि सारा आधा चौथाई ग्रहण इत्यादि प्ररूपै है बहुरि सूर्यप्रज्ञप्ति सूर्यका आयु मंडल परिवार ऋद्धि गमनका प्रमाण ग्रहण इत्यादि प्ररूपै है । बहुरि जंबूद्वीप प्रज्ञप्ति जंबूद्वीपसंबंधी मेरुगिरि कुलाचल द्रह क्षेत्र वेदी वनखंड व्यंतरनिके मांदिर नदी इत्यादि प्ररूपै है। बहुरि द्वीपसागरप्रज्ञप्ति असंख्यात द्वीप समुद्रसंबंधी स्वरूप वा तहां तिष्ठते ज्योतिषी व्यंतर भवनवासीनिके आवास तहां अकृत्रिम जिनमंदिर तिनकौं प्ररूपै है । बहुरि व्याख्याप्रज्ञप्ति रूपी अरूपी जीव अजीव आदि पदार्थनिका वा भव्य अभव्य आदि प्रमाणकरि निरूपण करै है ऐसैं परिकर्मके पंच भेद है । बहुरि सूत्रयति कहिये मिथ्यादर्शनके भेदनिकौं सूचै बतावै ताकौं सूत्र कहिये तिसविषैं जीव अबंधकही है अकर्ता है निर्गुण है अभोक्ता है स्वप्रकाशक ही है परप्रकाशक ही है अस्तिरूप ही है नास्तिरूप ही है इत्यादि क्रियावाद अक्रियावाद अज्ञानवाद विनयवाद तिनके तीनसै तरेसठि भेद तिनिका पूर्व पक्षपने करि वर्णन करिये है। बहुरि प्रथम कहिये मिथ्यादृष्टी अव्रती विशेष ज्ञानरहित ताकौं उपदेश देने निमित्त जो प्रवृत्त भया अधिकार अनुयोग कहिए सो प्रथमानुयोग कहिए तींहिं विषैं चौवीस तीर्थंकर बारह चक्रवर्ति नव बलभद्र नव नारायण नव प्रतिनारायण इनि तरेसठि शलाका पुरुषनिका पुराण वर्णन कीया है। बहुरि पूर्वगत चौदह सो आगैं विस्तारनैं लीएं कहैंगे। बहुरि चूलिकाके पंच भेद जल गता १ स्थलगता २ मायागता ३ रूपगता ४ आकाशगता ५ ए पंच भेद तिनिविषैं जगलता चूलिका तौ जल का स्तंभन करना जलविषैं गमन करना अग्निका स्तंभन करना अग्निका भक्षण करना अग्निविषैं प्रवेश करना इत्यादि क्रियाके कारणभूत मंत्र तंत्र तपश्चरणादि प्ररूपै है। बहुरि स्थलगता चूलिका मेरुपर्वत भूमि इत्यादि विषै प्रवेश करना शीघ्र गमन करना इत्यादिक क्रियाके कारणभूत मंत्र तंत्र तपश्चरणादिक प्ररूपै है। बहुरि मायागता चूलिका मायामई इंद्रजाल विक्रि-

याके कारणभूत मंत्र तंत्र तपश्चरणादि प्ररूपै है। बहुरि रूपगता चूलिका सिंह हाथी घोड़ा वृषभ हरिण इत्यादि नाना प्रकार रूप पलटिकरि धरना ताके कारण मंत्र तंत्र तपश्चरणादि प्ररूपै है वा चित्राम काठ लेपादिकका लक्षण प्ररूपै है वा धातु रसायनकौं प्ररूपै है। बहुरि आकाशगता चूलिका आकाश विषैं गमन आदिकौं कारण भूत मंत्र तंत्रादि प्ररूपै है ऐसैं चूलिकाके पांच भेद जानने। ए चंद्रप्रज्ञप्ति आदि देकरि भेद कहे तिनिके पदनि-का प्रमाण आगे कहिए है सो हे भव्य तू जानि। ३६१। ३६२॥

**गतनम मनगं गोरम मरगत जवगात नोननं जजलक्खा।**
**मननन धममननोननामं रनधजधरानन जलादी॥ ३६३॥**
**याजकनामेनाननमेदाणि पदाणि होंति परिकम्मे।**
**कानवधिवाचनाननमेसो पुण चूलियाजोगो॥ ३६४॥**

गतनम मनगं गोरम मरगत जवगातनोननं जजलक्षाणि।
मननन धममननोननामं रनधजधरानन जलादिषु॥ ३६३॥
याजकनामेनाननमेतानि पदानि भवंति परिकर्मणि।
कानवधिवाचनाननमेषः पुनः चूलिकायोगः॥ ३६४॥

जी० प्र०—अक्षरसंज्ञया चंद्रप्रज्ञप्तौ गतनमनोननं-षट्त्रिंशल्लक्षपंचसहस्राणि पदानि ३६०५००० । सूर्यप्रज्ञप्तौ मनगंनोननं-पंचलक्षत्रिसहस्राणि पदानि ५०३००० । जंबूद्वीपप्रज्ञप्तौ गोरमनोननं त्रिलक्षपंचविंशतिसहस्राणि पदानि । द्वीपसागरप्रज्ञप्तौ मरगतनोननं द्विपंचाशल्लक्षषट्त्रिंशत्सहस्राणि पदानि ५२३६००० । व्याख्याप्रज्ञप्तौ जवगातनोननं—चतुरशीतिलक्षषट्त्रिंशत्सहस्राणि पदानि ८४३६००० । सूत्रे जजलक्खा—अष्टाशीतिलक्षाणि पदानि ८८००००० । प्रथमानुयोगे मननन—पंचसहस्राणि पदानि ५००० । चतुर्दशपूर्वसमुच्चये धममननोननामं—पंचनवतिकोटिपंचाश-

लक्षपंचपदानि ९५५००००५। जलादी जलगतादिपंचचूलिकास्थानेषु प्रत्येके रनधजधरानन-द्विकोटिनवलक्षनवाशीतिसहस्रद्विशतानि पदानि। २०९८९२००। चंद्रप्रज्ञप्त्यादिपंचविधपरिकर्मयुतौ याजकनामेनाननं—एककोटयेकाशीतिलक्षपंचसहस्राणि पदानि १८१०५०००। जलगतादिपंचविधचूलिकायोगः पुनः कानवधिवाचनाननं—दशकोट्येकोनपंचाशल्लक्षपट्चत्वारिंशत्सहस्राणि पदानि १०४९४६००० ॥ ३६३–३६४ ॥

म० प्र०—अक्षरसंज्ञया गतनमनोनन—षट्त्रिंशल्लक्षपंचसहस्राणि पदानि चंद्रप्रज्ञप्तौ ३६०५०००। मनगनोनन पंचलक्षत्रिसहस्राणि पदानि सूर्यप्रज्ञप्तौ ५०३०००। गोरमनोनन त्रिलक्षपंचविंशतिसहस्राणि पदानि जंबूद्वीपप्रज्ञप्तौ ३२५०००। मरगतनोननं द्विपंचाशल्लक्षपट्त्रिंशत्सहस्राणि पदानि द्वीपसागरप्रज्ञप्तौ ५२३६०००। जवगातनोननं चतुरशीतिलक्षपट्त्रिंशत्सहस्राणि पदानि व्याख्याप्रज्ञप्तौ ८४३६०००। जजलक्खा अष्टाशीतिलक्षाः पदानि सूत्रं ८८०००००। मननन पचसहस्राणि पदानि प्रथमानुयोगे ५०००। धममननोनननामं पंचनवतिकोटिपंचाशल्लक्षाणि पंचोत्तराणि पदानि पूर्वगते चतुर्दशपूर्वसमुच्चये ९५५००००५। रनधजधरानन द्विकोटिनवलक्षनवाशीतिसहस्राणि द्विशतोत्तरपदानि प्रत्येके जलगतादिषु पंचसु चूलिकासु समानसंख्यानि-जलगता २०९८९२००। स्थलगता २०९८९२००। मायागता २०९८९२००। आकाशगता २०९८९२००। रूपगता २०९८९२००। याजकनामेनाननं एककोटयेकाशीतिलक्षपंचसहस्राणि पदानि चंद्रप्रज्ञप्त्यादिपंचविधेऽपि परिकर्मणि मिलितान्येतावंति भवति १८१०५०००। कानवधिवाचनाननं दशकोटयेकोन पचाशल्लक्षपट्चत्वारिंशत्सहस्राणि पदानि जलगतादीनां पंचानां चूलिकानां एव योग पदसंख्यासयोग १०,४९,४६००० ॥ ३६३–३६४ ॥

स० चं०—इहां 'कटपयपुरस्थवर्णैः' इत्यादि सूत्रोक्त विधानतैं अक्षर संज्ञाकरि अंक कहैं हैं सो अंकनिकरि जो प्रमाण भया सोई इहां कहिए है एक एक अक्षरतैं एक एक अंक जानि लेना सो 'गतनमनोननं' कहिये छत्तीस लाख पांच हजार ३६०५००० पद चंद्रप्रज्ञप्ति विषैं हैं। बहुरि 'मनगनोननं' कहिये पांच लाख तीन हजार ५०३००० पद सूर्यप्रज्ञप्तिविषैं हैं। बहुरि गोरमनोननं कहिये तीनलाख पचीस हजार ३२५००० पद जंबूद्वीप प्रज्ञप्तिविषैं हैं। बहुरि मरगतनोननं कहिये बावन लाख छत्तीस हजार ५२३६००० पद द्वीपसागर प्रज्ञप्तिविषैं है। बहुरि 'जवगातनोननं' कहिये चौरासीलाख छत्तीस हजार ८४३६००० पद व्याख्याप्रज्ञप्ति अंगके हैं। बहुरि 'जजलक्खा' कहिये अठ्यासी लाख ८८००००० पद सूत्र नामा भेदविषैं हैं बहुरि मननन कहिये पांच हजार ५००० पद प्रथमानुयोगविषैं हैं। बहुरि धममननोनननामं कहिये पिच्याणवै कोड़ि पचासलाख पांच ९५५००००५ पद पूर्वगतविषैं हैं। चौदह पूर्वनिके इतने पद हैं। बहुरि रनधजधरानन कहिये दोय कोडि नवलाख निवासी हजार दोयसै २०९८९२०० पद जलगत आदि चूलिका तिनविषैं एक एकके इतने इतने

पद जानने। जलगता पद २०९८९२०० स्थलगता २०९८९२०० मायागता २०९८९२०० आकाशगता २०९-८९२०० रूपगता २०९८९२०० ऐसैं पद जानने। बहुरि 'याजकनामेनोननं' कहिये एक कोडि इक्यासी लाख पांच हजार १८१०५००० पद चंद्रप्रज्ञप्ति आदि पांच प्रकार परिकर्मका जोड़ दीये हो हैं। बहुरि 'कानवधि वाचनाननं' कहिये दश कोडि गुणचासलाख छियालीस हजार '१०४९४६०००' पद पांचप्रकार चूलिकाका जोड़ दीयें हो हैं। इहां गकारतैं तीनका अंक नकारतैं छहका अंक मकारतैं पांचका अंक रकारतैं दोयका अंक नकारतैं बिंदी इत्यादि अक्षर संज्ञाकरि अंक कहे हैं। ककारतैं लेय गकार तीसरा अक्षर है तातैं तीनका अंक कह्या। बहुरि टकारतैं तकार छठा अक्षर है तातैं छहका अंक कह्या पकारतैं मकार पांचवां अक्षर है तातैं पांचका अंक कह्या यकारतैं रकार दूसरा अक्षर है तातैं दोयका अंक कह्या है नकारतैं बिंदी कही है। इत्यादि अक्षर संज्ञातैं अंक जानने॥ ३६३॥ ३६४॥

**पण्णट्ठदाल पणतीस तीस पण्णास पण्ण तेरसदं।**
**णउदी दुदाल पुव्वे पणवण्णा तेरससयाइं॥ ३६५॥**
**छस्सय पण्णासाइं चउसयपण्णास छसयपणुवीसा।**
**विहि लक्खेहि दु गुणिया पंचम रूऊण छज्जुदा छट्ठे॥३६६॥**

पंचाशदष्टचत्वारिंशत् पंचत्रिंशत् त्रिंशत् पंचाशत् पंचाशत् त्रयोदशशतं।
नवतिः द्वाचत्वारिंशत् पूर्वे पंचपंचाशत् त्रयोदशशतानि॥ ३६५॥
षट्छतपंचाशानि चतुःशतपंचाशत् षट्छतपंचविंशतिः।
द्वाभ्यां लक्षाभ्यां तु गुणितानि पंचमं रूपोनं षट्युतानि षष्ठे॥ ३६६॥

जी० प्र०——उत्पादादिचतुर्दशपूर्वेषु यथाक्रमं पदसंख्योच्यते--वस्तुनः-द्रव्यस्य उत्पादव्ययध्रौव्याद्यनेकधर्मपूरकमुत्पादपूर्वं तच्च जीवादिद्रव्याणां नानानयविषयक्रमयौगपद्यसंभावितोत्पादव्ययध्रौव्याणि त्रिकालगोचराणि नवधर्मा भवंति। तत्परिणतं द्रव्यमपि नवविधं। उत्पन्नं उत्पद्यमानं उत्पत्स्यमानं। नष्टं नश्यत् नंक्ष्यत्। स्थितं तिष्ठत् स्थास्यदिति नवप्रकारा भवंति। उत्पन्नादीनां प्रत्येकं नवविधत्वसंभवादेकाशीतिविकल्पधर्मपरिणतद्रव्यवर्णनं करोति। तत्र द्विलक्षगुणितपंचाशत्पदानि एकाकोटिरित्यर्थः १०००००००। अग्रस्य द्वादशांगेषु प्रधानभूतस्य वस्तुनः अयनं ज्ञानं अग्रायणं। तत्प्रयोजनमग्रायणीयं, द्वितीयं पूर्वं। तच्च सप्तशतसुनयदुर्णयपंचास्तिकायषड्द्रव्यसप्ततत्त्वनवपदार्थादीन् वर्णयति। तत्र द्विलक्षगुणिताष्टाचत्वारिंशत्पदानि षण्णवतिलक्षाणि इत्यर्थः। ९६०००००। वीर्यस्य-जीवादिवस्तुसामर्थ्यस्य अनुप्रवादः-अनुवर्णनं अस्मिन्निति वीर्यानुप्रवादं नाम तृतीयं पूर्वं। तच्च आत्मवीर्यपरवीर्योभयवीर्यक्षेत्रवीर्यकालवीर्यभाववीर्यतपोवीर्यादिसमस्तद्रव्यगुणपर्यायवीर्याणि वर्णयति। तत्र द्विलक्षगुणितपंचत्रिंशत्पदानि सप्ततिलक्षाणीत्यर्थः ७००००००। अस्ति नास्तीत्यादिधर्माणां प्रवादः-प्ररूपणमस्मिन्निति अस्तिनास्तिप्रवादं चतुर्थं पूर्वं। तच्च जीवादिवस्तु स्यादस्ति स्वद्रव्यक्षेत्रकालभावानाश्रित्य, स्यान्नास्ति परद्रव्यक्षेत्रकालभावानाश्रित्य। स्यादस्ति नास्ति च क्रमेण स्वपरद्रव्यक्षेत्रकालभावद्वयं संयुक्तमाश्रित्य। स्यादवक्तव्यं युगपत्स्वपरद्रव्यक्षेत्रकालभावद्वयमाश्रित्य तथा वक्तुमशक्यत्वात्। स्यादस्ति चावक्तव्यं च स्वद्रव्यक्षेत्रकालभावान् युगपत् स्वपरद्रव्यक्षेत्रकालभावद्वयं च संयुक्तमाश्रित्य। स्यान्नास्ति चावक्तव्यं च परद्रव्यक्षेत्रकालभावान् युगपत्स्वपरद्रव्यक्षेत्रकालभावद्वयं च संयुक्तमाश्रित्य। स्यादस्ति च नास्ति चावक्तव्यं च क्रमेण स्वपरद्रव्यक्षेत्रकालभावद्वयं युगपत्स्वपरद्रव्यक्षेत्रकालभावद्वयं च संयुक्तमाश्रित्य। इत्येकानेकनित्यानित्याद्यनंतधर्माणां विधिनिषेधावक्तव्यभंगानां प्रत्येकद्विसंयोगत्रिसंयोगजानां त्रित्र्येकसंख्यानां मेलनं सप्तभंगी प्रश्नवशादेकस्मिन्नेव वस्तुनि अविरोधेन संभवंती नानानयमुख्यगौणभावेन प्ररूपयति। तत्र द्विलक्षगुणितत्रिंशत्पदानि षष्टिर्लक्षाणि इत्यर्थः। ६००००००। ज्ञानानां प्रवादः प्ररूपणमस्मिन्निति ज्ञानप्रवादं पंचमं पूर्वं, तच्च मतिश्रुतावधिमनःपर्ययकेवलानि पंच सम्यग्ज्ञानानि, कुमतिकुश्रुतविभंगाख्यानि त्रीण्यज्ञानानि स्वरूपसंख्याविषयफलानि आश्रित्य तेषां प्रामाण्याप्रामाण्यविभागं च वर्णयति। तत्र द्विलक्षगुणितपंचाशत्पदानि किंतु पंचमरूऊणमिति कथनादेकरूपोना कोटिरित्यर्थः ९९९९९९९। सत्यस्य प्रवादः प्ररूपणमस्मिन्निति सत्यप्रवादं षष्ठं पूर्वं, तच्च वाग्गुप्तिं वाक्संस्कारकारणानि वाक्प्रयोगं द्वादश भाषाः वक्तृभेदान् बहुविधं मृषाभिधानं दशविधं सत्यं च प्ररूपयति। तद्यथा-असत्यनिवृत्तिर्मौनं वा वाग्गुप्तिः। उरःकंठशिरोजिह्वामूलदंतनासिकाताल्वोष्ठाख्यानि अष्टौ स्थानानि। स्पृष्टतेषत्स्पृष्टताविवृततेषद्विवृततासंवृततारूपाः पंच प्रयत्नाश्च वाक्संस्कारकारणानि। शिष्टदुष्टरूपः प्रयोगः वाक्प्रयोगः तल्लक्षणशास्त्रं संस्कृतादिव्याकरणं वा। इदमनेन कृतमित्यनिष्टकथनरूपमभ्याख्यानं। परस्परविरोधकारणं कलहवचनं। परदोषसूचनं पैशून्यवचनं। धर्मार्थकाममोक्षासंबद्धवचनरूपः अबद्धप्रलापः। इंद्रियविषयेषु रत्युत्पादिका वाक् रतिवाक्। तेषु अरत्यादिका वाक् अरतिवाक्। परिग्रहार्जनसंरक्षणाद्यासक्तिहेतुर्वाक् उपधिवाक्। व्यवहारवंचनाहेतुर्वाक् निकृतिवाक्। तपोज्ञानादिषु अविनयहेतुर्वाक् अप्रणतिवाक्। स्तेयहेतुर्वाग् मोषवाक्। सन्मार्गोपदेशवाक् सम्यग्दर्शनवाक्। मिथ्यामार्गोपदेशवाक् मिथ्यादर्शनवाक् एवं द्वादशभाषाः। द्वींद्रियादिपंचेंद्रियपर्यंता जीवा व्यक्ताव्यक्तवक्तृत्वपर्यायाः वक्तारः। द्रव्यक्षेत्रकालभावाश्रितं बहुविधमसत्यवचनं मृषावाक्।

जनपदसत्यादिदशप्रकारसत्यं तत्प्रागुक्तलक्षणमिति। तत्र सत्यप्रवादे द्विलक्षगुणितपंचाशत्पदानि षड्भिरधिकानि। छज्जुदा छट्टे इति वचनात् षडुत्तरकोटिरित्यर्थः। १००००००६। आत्मनः प्रवादः प्ररूपणमस्मिन्निति आत्मप्रवादं सप्तमं पूर्वं। तच्च आत्मनः 'जीवो कत्ता य वत्ता य पाणी भोत्ता य पुग्गलो वेदी विराहू सयंभू य सरीरी तह माणवो सत्ता जंतू य माणी य मायी जोगी य संकुडो असंकुडो य खेत्तराहू अंतरप्पा तहेव य' इत्यादिस्वरूपं वर्णयति। तद्यथा-जीवति व्यवहारनयेन दशप्राणान् निश्चयनयेन केवलज्ञानदर्शनसम्यक्त्वरूपचित्प्राणांश्च धारयति। जीविष्यति जीवितपूर्वश्चेति जीवः। व्यवहारनयेन शुभाशुभं कर्म निश्चयनयेन चित्पर्यायांश्च करोतीति कर्ता। व्यवहारनयेन सत्यमसत्यं च वक्तीति वक्ता निश्चयेनावक्ता। नयद्वयोक्तप्राणाः संति अस्येति प्राणी। व्यवहारेण शुभाशुभकर्मफलं निश्चयेन स्वस्वरूपं च भुंक्ते अनुभवतीति भोक्ता। व्यवहारेण कर्मनोकर्मपुद्गलान् पूरयति गालयति चेति पुद्गलः निश्चयेनापुद्गलः। नयद्वयेन लोकालोकगतं त्रिकालगोचरं सर्वं वेत्ति जानातीति वेदः। व्यवहारेण स्वोपात्तदेहं समुद्घाते सर्वलोकं निश्चयेन ज्ञानेन सर्वं वेवेष्टि व्याप्नोतीति विष्णुः। यद्यपि व्यवहारेण कर्मवशाद्भवे भवे भवति परिणमति तथापि निश्चयेन स्वयं स्वस्मिन्नेव ज्ञानदर्शनस्वरूपेणैव भवति परिणमति इति स्वयंभूः। व्यवहारेण औदारिकादिशरीरमस्यास्तीति शरीरी निश्चयेनाशरीरः। व्यवहारेण मानवादिपर्यायपरिणतो मानवः, उपलक्षणान्नारकः तिर्यङ् देवश्च। निश्चयेन मनौ ज्ञाने भवः मानवः। व्यवहारेण स्वजनमित्रादिपरिग्रहेषु सजतीति सक्ता। निश्चयेनासक्ता। व्यवहारेण चतुर्गतिसंसारे नानायोनिषु जायत इति जंतुः संसारी इत्यर्थः। निश्चयेनाजंतुः। व्यवहारेण मानः अहंकारः अस्यास्तीति मानी, निश्चयेनामानी। व्यवहारेण माया वंचना अस्यास्तीति मायी निश्चयेनामायी। व्यवहारेण योगः कायवाङ्मनःकर्मास्यास्तीति योगी, निश्चयेनायोगी। व्यवहारेण सूक्ष्मनिगोदलब्ध्यपर्याप्तकसर्वजघन्यशरीरप्रमाणेन संकुटति संकुचितप्रदेशो भवतीति संकुटः, समुद्घाते सर्वलोकं व्याप्नोतीत्यसंकुटः। निश्चयेन प्रदेशसंहारविसर्पणाभावादनुभयः किंचिदूनचरमशरीरप्रमाण इत्यर्थः। नयद्वयेन क्षेत्रं लोकालोकं स्वस्वरूपं च जानातीति क्षेत्रज्ञः। व्यवहारेण अष्टकर्माभ्यंतरवर्तिस्वभावत्वात्, निश्चयेन चैतन्याभ्यंतरवर्तिस्वभावत्वाच्च अंतरात्मा। इति—च शब्दौ उक्तानुक्तसमुच्चयार्थौ। ततः कारणाद् व्यवहाराश्रयेण कर्मनोकर्मरूपमूर्तद्रव्यादिसंबंधेन मूर्तः निश्चयनयाश्रयेणामूर्तः इत्यादय आत्मधर्माः समुच्चीयंते। तस्मिन्नात्मप्रवादे द्विलक्षगुणितत्रयोदशशतपदानि षड्विंशतिकोट्य इत्यर्थः २६००००००० । कर्मणः प्रवादः प्ररूपणमस्मिन्निति कर्मप्रवादमष्टमं पूर्वं तच्च मूलोत्तरोत्तरप्रकृतिभेदभिन्नं बहुविकल्पबंधोदयोदीरणसत्त्वाद्यवस्थं ज्ञानावरणादिकर्मस्वरूपं समवधानेर्यापथतपस्याधाकर्मादि वर्णयति। तत्र द्विलक्षगुणितनवतिपदानि एककोट्यशीतिलक्षाणीत्यर्थः १८०००००० । प्रत्याख्यायते निषिध्यते सावद्यमस्मिन्ननेनेति वा प्रत्याख्यानं नवमं पूर्वं। तच्च नामस्थापनाद्रव्यक्षेत्रकालभावानाश्रित्य पुरुषसंहननबलाद्यनुसारेण परिमितकालं अपरिमितकालं वा प्रत्याख्यानं सावद्यवस्तुनिवृत्ति उपवासविधिं तद्भावनांगं पंचसमितित्रिगुप्त्यादिकं च वर्णयति। तत्र द्विलक्षगुणितद्वाचत्वारिंशत्पदानि चतुरशीतिलक्षाणीत्यर्थः। ८४ ल.। विद्यानां अनुवादः अनुक्रमेण वर्णनं यस्मिन तद्विद्यानुवादं दशमं पूर्वं, तच्च सप्तशतानि अंगुष्ठप्रसेनाद्यल्पविद्याः रोहिण्यादिपंचशतमहाविद्याः तत्स्वरूपसामर्थ्यसाधनमंत्रतंत्रपूजाविधानानि सिद्धविद्यानां फलविशेषान् अष्टमहानिमित्तानि, (तानि कानि?) अंतरीक्षभौमांगस्वरस्वप्नलक्षणव्यंजनच्छिन्ननामानि च वर्णयति। तत्र द्विलक्षगुणितपंचपंचाश-

त्पदानि एककोटिदशलक्षाणीत्यर्थः। ११० ल.। कल्याणानां वादः प्ररूपणमस्मिन्निति कल्याणवादमेकादशं पूर्वं, तच्च तीर्थकरचक्रधरवलदेववासुदेवप्रतिवासुदेवादीनां गर्भावतरणकल्याणादिमहोत्सवान् तत्कारणतीर्थकरत्वादिपुण्यविशेषहेतुषोडशभावनातपोविशेषाद्यनुष्ठानानि चंद्रसूर्यग्रहनक्षत्रचारग्रहणशकुनादिफलादि च वर्णयति। तत्र द्विलक्षगुणितत्रयोदशशतपदानि षड्विंशतिकोट्य इत्यर्थः २६ को०। प्राणानां आवादः प्ररूपणमस्मिन्निति प्राणावादं द्वादशं पूर्वं, तच्च कायचिकित्साद्यष्टांगमायुर्वेदं भूतिकर्मजांगुलिकप्रक्रमं इलापिंगलासुषुम्नादिबहुप्रकारप्राणापानविभागं दशप्राणानां उपकारकापकारकद्रव्याणि गत्याद्यनुसारेण वर्णयति। तत्र द्विलक्षगुणितपंचाशदुत्तरषट्छतानि पदानि त्रयोदशकोट्य इत्यर्थः १३ को.। क्रियादिभिः-नृत्यादिभिः, विशालं विस्तीर्णं शोभमानं वा क्रियाविशालं त्रयोदशं पूर्वं। तच्च संगीतशास्त्र छंदोलंकारादिद्वासप्ततिकलाः चतुःषष्टिस्त्रीगुणान् शिल्पादिविज्ञानानि चतुरशीतिगर्भाधानादिकाः अष्टोत्तरशतं सम्यग्दर्शनादिकाः पंचविंशतिं देववंदनादिकाः नित्यनैमित्तिकाः क्रियाश्च वर्णयति। तत्र द्विलक्षगुणितपंचाशदधिकचतुःशतपदानि नवकोट्य इत्यर्थः। ९ को.। त्रिलोकानां विंदवः अवयवाः सारं च वर्ण्यते अस्मिन्निति त्रिलोकविंदुसारं चतुर्दशं पूर्वं तच्च त्रिलोकस्वरूपं षट्त्रिंशत्परिकर्माणि अष्टौ व्यवहारान् चत्वारि वीजानि मोक्षस्वरूपं तद्गमनकारणक्रियाः मोक्षसुखस्वरूपं च वर्णयति। तत्र द्विलक्षगुणितपंचविंशत्यधिकषट्छतानि पदानि द्वादशकोटिपंचाशल्लक्षाणीत्यर्थः १२ को. ५० ल ॥ ३६५-३६६ ॥

म० प्र०—पूर्वे उत्पादपूर्वादौ चतुर्दशविधे प्रत्येकं यथाक्रम पदसंख्या इयमुच्यते तद्यथा—वस्तुनः उत्पादव्ययध्रौव्याद्यनेकधर्मपूरकं उत्पादपूर्वं तत् जीवादिद्रव्याणां नानानयविषयक्रमयौगपद्यसंभावितोत्पादव्ययध्रौव्याणि त्रिकालगोचराणि नव धर्मा भवंति। तत्परिणतं द्रव्यमपि नवधा उत्पन्नं, उत्पद्यमानं, उत्पत्स्यमानं, नष्टं, नश्यत्, नक्ष्यत्, स्थितं, तिष्ठत्, स्थास्यदिति नवानां तद्धर्माणामुत्पन्नत्वादीनां प्रत्येकं नवविधत्वसंभवादेकाशीतिविकल्पधर्मपरिणतद्रव्यवर्णनं करोति। तत्र द्वाभ्यां लक्षाभ्यां गुणिता पंचाशत् एककोटिपदानि भवति १००००००० । अग्रस्य द्वादशांगेषु प्रधानभूतस्य वस्तुनः अयनं—ज्ञानं, अग्रायणं तत्प्रयोजनं अग्रायणीयं द्वितीयं पूर्वं। तत्सप्तशतसुनयदुर्णयपंचास्तिकायषड्द्रव्यसप्ततत्त्वनवपदार्थादीन्वर्णयति। तत्र द्विलक्षगुणिताष्टाचत्वारिंशत्पदानि षण्णवतिलक्षाणीत्यर्थः ९६००० ०। वीर्यस्य जीवादिवस्तुसामर्थ्यस्य, अनुप्रवादः—अनुवर्णनमस्मिन्निति वीर्यानुवादं तृतीयपूर्वं। तत् आत्मवीर्यं परवीर्यं उभयवीर्यं क्षेत्रवीर्यं कालवीर्यं भाववीर्यं तपोवीर्यमित्यादीनि समस्तगुणपर्यायवीर्याणि वर्णयति। तत्र द्विलक्षगुणितपंचत्रिंशत्पदानि सप्ततिलक्षाणीत्यर्थः। ७०००००० । अस्ति नास्तीत्यादिधर्माणां प्रवादः—प्ररूपणं, अस्मिन्नित्यास्तिनास्तिप्रवादं चतुर्थं पूर्वं। तत् जीवादिवस्तु स्यादस्ति स्वद्रव्यक्षेत्रकालभावानाश्रित्य, स्यान्नास्ति परद्रव्यक्षेत्रकालभावानाश्रित्य, स्यादस्ति नास्ति च क्रमेण स्वपरद्रव्यक्षेत्रकालभावद्वयं संयुक्तमाश्रित्य, स्यादवक्तव्यं युगपत्स्वपरद्रव्यक्षेत्रकालभावद्वयमाश्रित्य तथा वक्तुमशक्यत्वात्, स्यादस्ति चावक्तव्यं च स्वद्रव्यक्षेत्रकालभावान् युगपत्स्वपरद्रव्यक्षेत्रकालभावद्वयं च संयुक्तमाश्रित्य, स्यान्नास्तिचावक्तव्यं च परद्रव्यक्षेत्रकालभावान् युगपत्स्वपरद्रव्यक्षेत्रकालभावद्वयं च संयुक्तमाश्रित्य। स्यादस्ति च नास्ति चावक्तव्यं च क्रमेण स्वपरद्रव्यक्षेत्रकालभावद्वयं युगपत्स्वपरद्रव्यक्षेत्रकालभावद्वयं च संयुक्तमाश्रित्य। एवमेकानेकनित्यानित्याद्यनंतधर्माणां विधिनिषेधावक्तव्यभंगानां प्रत्येकद्विसंयोगत्रिसंयोगजानां त्रिंत्र्येकसंख्यानां मेलनं सप्तभंगीं प्रश्नवशादेकस्मिन्नेव वस्तुनि अविरोधेन संभवतीं नानानयमुख्यगौणभावेन प्ररूपयति। तत्र द्विलक्षगुणितत्रिंशत्पदानि षष्टिलक्षाणीत्यर्थः ६०००००० । ज्ञा-

यिक राशि विषैं मिलायैं तितना अप्कायिक जीवनिका परिमाण हो है बहुरि अप्कायिक राशिकौं असंख्यात लोकका भाग दीये जो परिमाण आवै तितना अप्कायिक राशिविषैं मिलाएं वातकायिक जीवनिका परिमाण हो है ऐसैं अधिक अधिक जानने ॥ २०४ ॥

**अपदिट्ठिदपत्तेया असंखलोगप्पमाणया होंति ।**
**तत्तो पदिट्ठिदा पुण असंखलोगेण संगुणिदा ॥ २०५ ॥**

अप्रतिष्ठितप्रत्येका असंख्यलोकप्रमाणका भवंति ।
ततः प्रतिष्ठिताः पुनः असंख्यलोकेन संगुणिताः ॥ २०५ ॥

जी० प्र०—अप्रतिष्ठितप्रत्येकवनस्पतिकायिकजीवाः यथायोग्यासंख्यातलोकप्रमाणा भवंति ≡ a । पुनः प्रतिष्ठितप्रत्येकवनस्पतिकायिकजीवाः तेभ्यः असंख्येयलोकगुणिता भवंति ≡ a ≡ a ॥ २०५ ॥

मं० प्र०—अप्रतिष्ठितप्रत्येकवनस्पतिकायिका यथायोग्यासंख्यातलोकप्रमाणा भवति पुनः प्रतिष्ठितप्रत्येकवनस्पतिकायिकास्ततः अप्रतिष्ठितप्रत्येकवनस्पतिकायिकप्रमाणात् असंख्येयलोकेन सगुणिता भवति ॥ २०५ ॥

स.चं.-अप्रतिष्ठित प्रत्येक वनस्पती कायिक जीव यथायोग्य असंख्यात लोक प्रमाण है बहुरि इनिकौं असंख्यात लोक करि गुणें जो परिमाण होइ तितने प्रतिष्ठित प्रत्येक वनस्पती कायिक जीव जानने। दोऊनिकौं मिलाएं सामान्य प्रत्येक वनस्पती कायिक जीवनिका प्रमाण हो है ॥ २०५ ॥

**तसरासिपुढविआदीचउक्कपत्तेयहीणसंसारी ।**
**साहारणजीवाणं परिमाणं होदि जिणदिट्ठं ॥२०६॥**

त्रसराशिपृथिव्यादिचतुष्कप्रत्येकहीनसंसारी ।
साधारणजीवानां परिमाणं भवति जिनदिष्टं ॥ २०६ ॥

जी० प्र०—त्रसराशिना वक्ष्यमाणप्रमाणेन आवल्यसंख्येयभागभक्तप्रतरांगुलभाजितजगत्प्रतरप्रमितेन ≡ ४ / २ / ə तथा पृथिव्यादिचतुष्टयेन उक्तप्रमाणेन एतावता ते ≡ ə पृ ≡ ə अ ≡ ə वा ≡ ə मिलितेन ≡ ə । ४

≡ ə । १ / ९ ≡ ə । २ / ९ ≡ ə । ३ / ९ ≡ ə । ४ / ९

≡ ə । १ / ९ । ९ ≡ ə । ३ / ९ । ९ ≡ ə । ४ / ९ । ९

≡ । ə । १ / ९ । ९ । ९ ≡ ə । ४ / ९ । ९ । ९

साधिकचतुर्गुणतेजस्कायिकराशिप्रमाणेन ≡ ə । ४ प्रत्येकवनस्पतिराशिद्वयेन ≡ ə ≡ ə । चेति राशित्रयेण विहीनसंसारराशिरेव साधारणजीवराशिप्रमाणं भवतीति जिनैर्दिष्टं-कथितं वा १३ ≡ ॥ २०६ ॥

मं० प्र०—वक्ष्यमाणेन त्रसराशिना पृथिव्यादिचतुष्कप्रत्येकवनस्पतिराशिभ्या च हीनः संसारिजीवराशिः साधारणजीवानां परिमाणं भवति इति जिनैरर्हदादिभिः, निर्दिष्टं-कथितं ॥ २०६ ॥

स० चं०—आगैं कहिए हैं आवलीका असंख्यातवां भागकरि भाजित प्रतरांगुलके भाग जगत्प्रतरकौं दीएं जो होइ तितना त्रसराशिका प्रमाण अर पृथ्वी अप तेज वायु इनि च्यारिनिका मिल्या हूवा साधिक चौगुणा तेज कायिक राशिका प्रमाण बहुरि इस प्रतिष्ठित अप्रतिष्ठित प्रत्येक वनस्पतीका मिल्या हूवा, परिमाण ऐसैं इनि तीनि राशिनिकौं संसारी जीवनिका परिमाणमें घटाएं जो अवशेष रहै तितना साधारण वनस्पती जे निगोद जीव तिनिका परिमाण अनंतानंत जानना ऐसा जिनदेवनें कह्या है ॥ २०६ ॥

**सगसगअसंखभागो वादरकायाण होदि परिमाणं ।**
**सेसा सुहुमपमाणं पाडिभागो पुव्वणिद्दिट्ठो ॥ २०७ ॥**

स्वकस्वकासंख्यभागो वादरकायानां भवति परिमाणं ।
शेषाः सूक्ष्मप्रमाणं प्रतिभागः पूर्वनिर्दिष्टः ॥ २०७ ॥

जी० प्र०—पृथिव्यप्तेजोवायुकायिकानां साधारणवनस्पतिकायिकानां च असंख्येयलोकैकभागमात्रं स्वस्ववादरकायानां परिमाणं भवति। शेषा' तद्बहुभागाः सूक्ष्मकायिकजीवानां प्रमाणं भवति । अत्र प्रविष्टप्रतिभागः भागहारः पूर्वोक्तासंख्यातलोकमात्र एवेति ज्ञातव्यः । तदंकसंदृष्टिर्नवांकः ॥ २०७ ॥

म० प्र०—पृथिव्यप्तेजोवायुकायिकाना साधारणवनस्पतिकायिकानां च पूर्वोक्तस्वस्वसंख्याया असंख्यातभागमात्रं स्वस्ववादरकायानां प्रमाणं भवति शेषतद्बहुभागमात्रं सूक्ष्मकायानां प्रमाण भवति। अत्र प्रविष्टः प्रतिभागः-भागहारः पूर्वमेव निर्दिष्ट. असंख्यातलोकमात्र इति ज्ञातव्यः। तस्य संदृष्टिर्नवाक.॥२०७॥

सं० च०—पृथिवी अप् तेज वायु साधारण वनस्पती कायिकनिका जो पूर्वै परिमाण कह्या तिस अपने अपने परिमाणकौं असंख्यातका भाग देना। तहां एक भाग प्रमाण तौ अपना अपना वादर कायकनिका प्रमाण है। अवशेष वहुभाग प्रमाण सूक्ष्म कायकनिका प्रमाण है। पृथ्वीकायिकके परिमाणकौं असंख्यातका भाग दीजिए तहां एक भाग प्रमाण वादर पृथ्वीकायकनिका परिमाण है अवशेष वहुभाग परिमाण सूक्ष्म पृथ्वी कायिकनिका परिमाण है ऐसैं ही सबका जानना। इहां भी भागहारका परिमाण पूर्वै कह्या था असंख्यात लोक प्रमाण सोई है। तातैं इहां भी अग्निकायादिकविषैं पूर्वोक्त प्रकार अधिक अधिकपना जानना ॥ २०७ ॥

**सुहमेसु संखभागं संखा भागा अपुण्णगा इदरा ।**
**जस्सि अपुण्णद्धादो पुण्णद्धा संखगुणिदकमा ॥ २०८ ॥**

**सूक्ष्मेषु संख्यभागः संख्या भागा अपूर्णका इतरे ।**
**यस्मादपूर्णाद्धातः पूर्णाद्धा संख्यगुणितक्रमा ॥ २०८ ॥**

जी० प्र०— पृथिव्यप्तेजोवायुसाधारणवनस्पतिकायिकानां ये सूक्ष्माः प्रागुक्तास्तेषु अपर्याप्ताः तत्संख्यातैकभागप्रमाणा भवंति । पर्याप्तकास्तत्संख्यातबहुभागप्रमिता भवंति। किं कारणं ? इति चेदुच्यते यस्मात्कारणादंतर्मुहूर्तमात्र्याः अपर्याप्ताद्धायाः कालात्तत्पर्याप्ताद्धा संख्यातगुणितक्रमा भवति । मृदुकठिनभूमिजलवायुवनस्पतितेजस्कायिकजीवानामुत्कृष्टायुषो द्वादशद्वाविंशतिसप्तत्रिदशसहस्रवर्षत्रिदिनप्रमितत्वेन अंतर्मुहूर्तमात्रापर्याप्तकालात् २ ७ पर्याप्तकालस्य संख्येयगुणत्वप्रसिद्धेः तस्मात्कारणात्तत्पर्याप्तापर्याप्तकालद्वयेन २ ७ । ७ अनेन २ । ७ । ४ यद्येतावंतः सूक्ष्मपृथ्वीकायिका जीवाः ≡ a । १० । ८ लभ्यते तदा एतावदपर्याप्तकालेन २ ७ कियंतः सूक्ष्मपृथ्वीकायिकजीवा लभ्यंते ? इति त्रै-
९ । ९

राशिकेन लब्धः संख्यातैकभागमात्रः तदपर्याप्तजीवराशिर्भवति ≡ a । १० । ८ । १ संख्यातस्य संदृष्टिः पंचांकः । तथा—
९ । ९ । ५

प्र २ ७ । ४ । फ ≡ a । १० । ८ । इ २ ७ । ४ । इति त्रैराशिकेन लब्धस्तत्पर्याप्तजीवराशिर्भवति ≡ a । १० । ८ । ४ एवमुक्तत्रैराशिकद्वय-
९ । ९ ....................................................................................... ९ । ९ । ५

क्रमेण लब्धः सूक्ष्माप्कायिकापर्याप्तराशिः ≡ a । १० । १० । ८ । १ तत्पर्याप्तराशिः ≡ a । १० । १० । ८ । ४ । सूक्ष्मतेजस्कायिकाप-
९ । ९ । ९ । ५ ....................................................................................... ९ । ९ । ९ । ५

र्याप्तराशिः ≡ a । ८ । १ तत्पर्याप्तराशिः । ≡ a । ८ । ४ सूक्ष्मवायुकायिकापर्याप्तराशिः ≡ a । १० । १० । १० । ८ । १ तत्पर्याप्तराशिः—
९ । ५ ....................................................................................... ९ । ५ ....................................................................................... ९ । ९ । ९ । ९ । ५

≡ a । १० । १० । १० । ८ । ४ सूक्ष्मसाधारणपर्याप्तजीवराशिः १३ ≡ । ८ । १ तत्पर्याप्तराशिः १३ ≡ । ८ । ४ ॥ २०८ ॥
९ । ९ । ९ । ९ । ५ ....................................................................................... ९ । ५ ....................................................................................... ९ । ५

म० प्र०—पृथिव्यप्तेजोवायुसाधारणवनस्पतिकायिकानां ये सूक्ष्मकायाः प्रागुक्तसंख्यास्तेषु अपर्याप्ताः तत्संख्यातैकभागमात्रा भवंति । पर्याप्ताः तत्संख्यातबहुभागमात्रा भवंति। अत्र कारणमुच्यते-यस्मात्कारणात् अंतर्मुहूर्तमात्रापर्याप्ताद्धातः संख्यातगुणितक्रमा पर्याप्ताद्धा भवति तद्यथा शुद्धपृथ्वीकायिकस्य उत्कृष्टायुर्वर्षाणि द्वादशसहस्राणि, खरपृथ्वीकायिकस्य द्वाविंशतिसहस्राणि, अप्कायिकस्य सप्तसहस्राणि, तेजस्कायिकस्य दिनानि त्रीणि, वायुकायिकस्य वर्षाणि त्रीणि सहस्राणि, वनस्पतिकायिकस्य दशसहस्राणीति परमागमोक्तपंचस्थावरोत्कृष्टस्थितीनां पर्याप्तकालानां अंतर्मुहूर्तमात्रापर्याप्तकालात्संख्येयगु-

---

१ पर्याप्तकालोऽयं २ ७ । ७ अपर्याप्तकालोऽयं २ ७ द्वावपि मिलित्वा २ ७ । ७ एवं जातं। अस्य संदृष्टिः । २ ७ । ४ । रूपाधिकसंख्यातस्य रूपाधिकचतुरंकत्वं कृत्वमित्यर्थः

पत्वं सुप्रसिद्धं तस्मात्कारणात्कालसंचयमाश्रित्य प्रवृत्तं त्रैराशिकमिदं- पर्याप्तापर्याप्तकालद्वये एतावति प्र २ ७ ४ । यद्येतावंतः सूक्ष्मपृथ्वीकायिका लभ्यंते फ ≡ ə १० । ८ । तदा एतावत्पर्याप्तकाले । इ २ ७ कियंतो लभ्यंते इति त्रैराशिकेन लब्धं सूक्ष्मपृथ्वीकायिकराशिसंख्यातैकभागमात्रं तदपर्याप्तजीव- ९।९

प्रमाणं भवति ≡ ə १० । ८ । १ तथा एतावति पर्याप्तापर्याप्तकालद्वये प्र २ ७ । ४ । यद्येतावंतः सूक्ष्मपृथ्वीकायिका लभ्यते फ ≡ ə १० । ८ तदा ९।९।५ ९।९

एतावति पर्याप्तकाले इ २ ७ । ४ कियंतो लभ्यते इति त्रैराशिकविधानेन लब्धं सूक्ष्मपृथ्वीकायिकराशिसंख्यातबहुभागमात्रं ≡ ə १० । ८ । ४ तत्प- ९। ९।५

र्याप्तजीवप्रमाणं भवंति एवं सूक्ष्माप्कायिकादीनामपि पर्याप्तापर्याप्तपरिमाणमानेतव्यं । कालसंचयाश्रितसंख्यानयनमनेनैव विधानेनोत्तरत्रापि ज्ञातव्यं ॥२०८॥

सं० च०—पृथ्वी अप तेज वायु साधारण वनस्पती इनिका पूर्वं जो सूक्ष्म जीवनिका परिमाण कह्या तीं- हिविषैं अपने अपने सूक्ष्म जीवनिका परिमाणकौं संख्यातका भाग दीजिए तहां एक भागप्रमाण तौ अपर्याप्त है बहुरि अवशेष बहुभाग प्रमाण पर्याप्त हैं। सूक्ष्म जीवनिविषैं अपर्याप्त राशितैं पर्याप्तराशिका प्रमाण बहुत जा- नना। सो कारण कहैं हैं जातैं अपर्याप्त अवस्थाका काल अंतर्मुहूर्त मात्र है। इस कालतैं पर्याप्त अवस्थाका काल संख्यातगुणा है। सो दिखाइए है-कोमल पृथ्वीकायिकका उत्कृष्ट आयु बारह हजार वर्ष प्रमाण है। बहुरि कठिन पृथ्वी कायिकका वाईस हजार वर्ष प्रमाण है। जलकायिकका सात हजार वर्ष प्रमाण है। तेजकायिकका तीनदिन प्रमाण है। वातकायिकका तीन हजार वर्ष प्रमाण है। वनस्पती कायिकका दश हजार वर्ष प्रमाण है। इहां प्रसंग पाइ विकलत्रयविषैं बेंद्रीका बारा वर्ष तेंद्रीका गुणचास दिन चौंद्रीका छह महिना प्रमाण है ऐसैं उ- त्कृष्ट आयु बलका परिमाण कह्या तींहिविषैं अंतर्मुहूर्तकालविषैं तौ अपर्याप्त अवस्था है अवशेष कालविषैं पर्याप्त अवस्था है तातैं अपर्याप्त अवस्थाका कालतैं पर्याप्त अवस्थाका काल संख्यातगुणा जानना। तहां पृथ्वी कायि- कका पर्याप्त अपर्याप्त दोऊ कालनिविषैं जो सर्व सूक्ष्म जीव पाइए तौ अंतर्मुहूर्त प्रमाण अपर्याप्तकालविषैं केते पाइए ऐसैं प्रमाणराशि पर्याप्त अपर्याप्त दोऊ कालनिके समयनिका समुदाय, फलराशि सूक्ष्म जीवनिका प्रमाण,

इच्छाराशि अपर्याप्तकालका समयनिका प्रमाण, तहां फलकरि इच्छाकौं गुणि प्रमाणका भाग दीए लब्धिराशिका परिमाण आवै तितने सूक्ष्म पृथ्वीकायिक अपर्याप्त जीव जानने। बहुरि प्रमाण राशि फलराशि पूर्वोक्त इच्छाराशि पर्याप्त काल कीए लब्धिराशिका जो परिमाण आवै तितने सूक्ष्म पृथ्वीकायिक पर्याप्त जीवनिका परिमाण जानना। ताहीतैं संख्यातका भाग दीएं एक भाग प्रमाण अपर्याप्त कहे अवशेष बहु भागप्रमाण पर्याप्त कहे हैं ऐसैंही सूक्ष्म अप्कायिक तेज कायिक वातकायिक साधारण वनस्पतीकायिकविषैं अपना अपना सर्वकालकौं प्रमाणराशिकरि अपने अपने प्रमाणकौं फलराशिकरि अपर्याप्त वा पर्याप्त कालकौं इच्छाराशिकरि लब्धराशि प्रमाण पर्याप्त वा अपर्याप्त जीवनिका प्रमाण जानना। इहां पर्याप्त वा अपर्याप्त कालकी अपेक्षा जीवनिका परिमाण सिद्ध हूवा है॥ २०८ ॥

**पल्लासंखेज्जवहिदपदरंगुलभाजिदे जगप्पदरे।**
**जलभूणिपवादरया पुण्णा आवलिअसंखभजिदकमा॥२०९॥**

पल्यासंख्यावहितप्रतरांगुलभाजिते जगत्प्रतरे।
जलभूनिपवादरकाः पूर्णा आवल्यसंख्यभाजितक्रमाः॥ २०९ ॥

जी० प्र०—पल्यासंख्येयभागहतप्रतरांगुलेन जगत्प्रतरे भाजिते यल्लब्धं तद्बादराप्कायिकपर्याप्तजीवराशिप्रमाणं भवति $\frac{\overline{\overline{४}}}{प\ \frac{}{a}}$ अस्मिन् राशौ आवल्यसंख्येयभागेन भक्ते यल्लब्धं तद्बादरपृथ्वीकायिकपर्याप्तजीवराशिप्रमाणं भवति $\frac{\overline{\overline{४}}}{प\ \frac{}{a}}$ । ९ । पुनः अस्मिन् राशौ आवल्यसंख्येयभागेन भक्ते यल्लब्धं

तत्प्रतिष्ठितप्रत्येकजीवराशिप्रमाणं भवति $\frac{\overline{\overline{४}}}{प\ a}$ । ९ ९ पुनः अस्मिन् राशौ आवल्यसंख्येयभागेन भक्ते यल्लब्धं तदप्रतिष्ठितप्रत्येकपर्याप्त-

राशिप्रमाणं भवति । $\frac{\overline{\overline{४}}}{प\ a}$ । ९ । ९ । ९ निगोदशब्देन अत्र निगोदाश्रिताः प्रतिष्ठितप्रत्येका एव गृह्यंते न साधारणाः तेषामग्रे व्यक्तं क-

थितत्वात् । अत्र आवल्यसंख्येयभागस्य संदृष्टिर्नवांकः ९ ॥ २०९ ॥

म० प्र०-पल्यासंख्यातभागापहतेन प्रतरांगुलेन जगत्प्रतरे भाजिते सति यल्लब्धं तावंतः बादराप्कायिकपर्याप्तजीवा भवंति । तद्राशौ पुनः आवल्यसंख्यातभागेन भक्ते सति यल्लब्ध तत्प्रमाणा' बादरपृथ्वीकायिकपर्याप्तजीवा भवति। तद्राशौ पुनरप्यावल्यसख्येयभागेन भक्ते सति यल्लब्धं तत्प्रमिताः प्रतिष्ठितप्रत्येकपर्याप्तजीवा भवति । तद्राशौ पुनरप्यावल्यसंख्येभागेन भक्ते सति यल्लब्ध तावतः अप्रतिष्ठितप्रत्येकजीवा भवति । निगोदशब्देनात्र निगोदाश्रिताः प्रतिष्ठितप्रत्येका गृह्यंते न तु साधारणा. तेषामुत्तरत्र सुव्यक्ताभिधानात् । अत्रावल्यसंख्यातभागस्य सदृष्टिर्नवांकः ॥ २०९ ॥

सं० च०—पल्यके असंख्यातवां भागका भाग प्रतरांगुलकौं दीयें जो परिमाण होवे ताका भाग जगत्प्रतरकौं दीएं जो परिमाण आवै तितना बादर अप्कायिक पर्याप्त जीवनिका प्रमाण जानना । बहुरि इस राशिकौं आवलीका असंख्यातवां भागका भाग दीएं जो परिमाण आवै तितना बादर पृथ्वीकायिक पर्याप्त जीवनिका प्रमाण जानना । बहुरि इस राशिकौं भी आवलीका असंख्यातवां भागका भाग दीएं जो परिमाण आवै तितना बादर प्रतिष्ठित प्रत्येक वनस्पती पर्याप्त जीवनिका प्रमाण जानना। बहुरि इस राशिकौं भी आवलीका असंख्यातवां भागका भाग दीएं जो परिमाण आवै तितना बादर अप्रतिष्ठित प्रत्येक वनस्पती पर्याप्त जीवनिका प्रमाण जानना। इहां 'णि' इस आदि अक्षरतैं निगोद शब्दकरि प्रतिष्ठित प्रत्येक जानने जातैं साधारणका कथन आगैं प्रगट कहै हैं ॥ २०९ ॥

**विंदावलिलोगाणमसंखं संखं च तेउवाऊणं ।**
**पज्जत्ताण पमाणं तेहिं विहीणा अपज्जत्ता ॥ २१० ॥**

वृंदावलिलोकानामसंख्यं संख्यं च तेजोवायूनां ।
पर्याप्तानां प्रमाणं तैर्विहीना अपर्याप्ताः ॥ २१० ॥

जी० प्र०- वृंदावलेरसंख्यातैकभागमात्राः बादरतेजस्कायिकपर्याप्तजीवा भवंति ≡ तथा लोकस्य संख्यातभक्तैकभागप्रमिता बादरवायुकायिकपर्याप्तजीवा भवंति ७ सूक्ष्माणां तु प्राक्कथितत्वात् अत्र बादरा एव गृह्यंते । तैः सूत्रद्वयोक्तबादरजलभूनिपतेजोवायुपर्याप्तजीवराशिभिर्विहीनाः स्वस्वबादरकायिकराशय एव स्वस्वापर्याप्तजीवराशयो भवंति ॥ २१० ॥

मं० प्र०- वृंदावलिलोकयो', यथासंख्यमसंख्यातभागसंख्यातभागमात्रे बादरतेजोवायुकायिकयोः पर्याप्तराशयोः प्रमाणे भवतः—आवलिघनस्यासंख्यातैकभागमात्र बादरतेजस्कायिकपर्याप्तप्रमाणं । लोकस्य संख्यातैकभागमात्रं बादरवायुकायिकपर्याप्तप्रमाण भवतीत्यर्थः । बादरशब्दः पूर्वसूत्रादत्राप्यनुवृत्त इति व्याख्यातः । तैः सूत्रद्वयोक्तैः बादरपृथिव्यप्तेजोवायुप्रतिष्ठिताप्रतिष्ठितप्रत्येकवनस्पतिकायिकपर्याप्तजीवप्रमाणैर्विहीनाः स्वस्वबादरपृथ्वीकायिकादिराशयः स्वस्वापर्याप्तजीवराशयो भवति ॥ २१० ॥

सं० च०—आवलीके जेते समय हैं तिनिका घन कीएं जो प्रमाण होइ ताकौं वृंदावली कहिए ताकौं असंख्यातका भाग दीएं जो परिमाण आवै तितना बादर अग्निकायिक पर्याप्त जीवनिका प्रमाण जानना। बहुरि लोककौं संख्यातका भाग दीएं जो परिमाण आवै तितना बादर वातकायिक पर्याप्त जीवनिका प्रमाण जानना। सूक्ष्म जीवनिका प्रमाण पूर्वैं कह्या है तातैं इहां बादर ही ग्रहण करने। बहुरि पूर्वैं जो पृथ्वी अप तेज वायु प्रतिष्ठित अप्रतिष्ठित प्रत्येक वनस्पतीरूप बादर जीवनिका परिमाण कह्या था तींहिविषैं अपना अपना पर्याप्त जीवनिका परिमाण घटाए अवशेष रहै तितने तितने बादर अपर्याप्त जीव जानने ॥ २१० ॥

**साहारणवादरेसु असंखं भागं असंखगा भागा।**
**पुण्णाणमपुण्णाणं परिमाणं होदि अणुकमसो ॥ २११ ॥**

साधारणवादरेषु असंख्यं भागं संख्यका भागाः।
पूर्णानामपूर्णानां परिमाणं भवत्यनुक्रमशः ॥ २११ ॥

जी० प्र०—साधारणवादरेषु ये पर्याप्तजीवास्तेषां प्रमाणं तद्राशेरसंख्यातैकभागमात्रं भवति । १३ ≡ १ शेषाः असंख्यातबहुभागाः अप-
९ । ७
र्याप्ता भवंति १३ ≡ । ६ अनेन अनुक्रमेण तत्सर्ववादरपर्याप्तभवानां दुर्लभत्वमित्याचार्यसंप्रदायानुक्रममाश्रित्य तदल्पसंख्यत्वमुक्तं । काल-
९ । ७
संचयमाश्रित्य कथनं नास्तीति आचार्यस्य हृदयं ॥ २११ ॥

मं० प्र०--साधारणवादरेषु ये पर्याप्तास्तेषा परिमाण तद्राश्यसंख्यातैकभागमात्रं भवति । अपर्याप्तानां परिमाणं तद्बहुभागमात्रं भवतीत्यनुक्रमशः तेषां सर्ववादरपर्याप्तभवाना दुर्लभत्वमाचार्यसप्रदायानुक्रममाश्रित्य तदल्पसंख्यत्वमुक्त न कालसचयमाश्रित्येत्याचार्यस्य तात्पर्यं ॥ २११ ॥

स० चं०—वादर साधारण वनस्पतीका जो परिमाण कह्या था ताकौं असंख्यातका भाग दीजिए तहां एक भाग प्रमाण तौ वादर निगोद पर्याप्त जीवनिका प्रमाण जानना। वहुरि अवशेष असंख्यात वहुभाग प्रमाण वादर निगोद अपर्याप्त जीवनिका प्रमाण जानना ऐसैं अनुक्रमतैं इहां कालकी अपेक्षा अल्प वहुत्व नाहीं कह्या है। वादरनिविषैं पर्याप्तपना दुर्लभ है तातैं पर्याप्त थोरे अपर्याप्त घने हैं ऐसा आचार्यनिका अनुक्रम जानि कथन कीया है ऐसा आचार्यनिका अभिप्राय जानना ॥ २११ ॥

**आवलिअसंखसंखेणवहिदपदरंगुलेण हिदपदरं।**
**कमसो तसतप्पुण्णा पुण्णूणतसा अपुण्णा हु ॥ २१२ ॥**

आवल्यसंख्यसंख्येनावहितप्रतरांगुलेन हितप्रतरं।
क्रमशस्त्रसतत्पूर्णाः पूर्णोनत्रसा अपूर्णा हि ॥ २१२ ॥

जी० प्र०—आवल्यसंख्यातभागभक्तप्रतरांगुलेन भाजितजगत्प्रतरमात्रं सामान्यत्रसराशिप्रमाणं भवति। $\frac{\overset{=}{4}}{2}$ तथा संख्यातभक्तप्रतरांगुलेन भक्तजगत्प्रतरमात्रं तत्पर्याप्तराशिप्रमाणं भवति $\frac{\overset{=}{4}}{5}$। पूर्णत्रसराशिरहितः सामान्यत्रसराशिरेव अपूर्णत्रसराशिप्रमाणं भवति[1] $\overset{=}{4}$ a—५ अत्र-पर्याप्तभवानां दुर्लभत्वमेव पर्याप्तजीवसंख्याल्पत्वकारणं ॥ २१२ ॥ अथ वादरतेजस्कायिकादिषड्राशीनां संख्याविशेषनिर्णयार्थं गाथाद्वयमाह—

मं० प्र०—आवल्यसंख्यातभागेन संख्यातेन च अवहृतप्रतरांगुलेन हतजगत्प्रतरमात्राः क्रमशः यथासंख्यं त्रसास्तत्पर्याप्ताश्च भवंति। आवल्यसंख्यातभागापहृतप्रतरांगुलविभक्तजगत्प्रतरमात्रं त्रसजीवप्रमाणं संख्यातरूपावहृतप्रतरांगुलविभक्तजगत्प्रतरमात्र त्रसपर्याप्तजीवप्रमाणं भवतीत्यर्थः। त्रसपर्याप्तराशिना ऊनत्रसराशिस्त्रसापर्याप्तराशिर्भवति, खलु स्फुटं, अत्रापि पर्याप्तभवाना दुर्लभत्वमेव पर्याप्तसंख्याल्पत्वकारणं ॥ २१२ ॥ अथ वादरतेजस्कायिकादिराशीना षण्णां संख्याविशेषनिर्णयार्थं गाथाद्वय प्ररूपयंति—

सं० च०—आवलीका असंख्यातवां भागका भाग प्रतरांगुलकौं दीएं जो परिमाण आवै ताका भाग जगत्प्रतरकौं दीएं जो परिमाण आवै तितना सर्व त्रस राशिका प्रमाण जानना। बहुरि संख्यातका भाग प्रतरांगुलकौं दीएं जो परिमाण आवै ताका भाग जगत्प्रतरकौं दीएं जो परिमाण आवै तितना पर्याप्त त्रस जीव-

1 विरलतवात् $\frac{\overset{=}{4}}{2}$ a $\frac{=}{4}$ एवं भवति।

निका प्रमाण जानना। बहुरि सामान्य त्रस जीवनिका परिमाणमैंस्यों पर्याप्त त्रसनिका परिमाण घटाएं जो परिमाण अवशेष रहै तितना अपर्याप्त त्रस जीवनिका प्रमाण जानना। इहां भी पर्याप्तपनां दुर्लभ है तातैं पर्याप्त त्रस थोरे हैं। अपर्याप्त त्रस बहुत हैं ऐसा जानना॥ २१२॥ आगैं बादर अग्निकायिक आदि छहप्रकार जीवनिका परिमाणका विशेष निर्णय करनेके निमित्त दोय गाथा कहै हैं---

**आवलिअसंखभागेणवहिदपल्लूणसायरद्धछिदा।**
**वादरतेपणिभूजलवादाणं चरिमसायरं पुण्णं॥ २१३॥**

आवल्यसंख्यभागेनावहितपल्योनसागरार्धच्छेदाः।
वादरतेपनिभूजलवातानां चरमः सागरः पूर्णः॥ २१३॥

जी० प्र०---अर्धच्छेदाः खलु वादरतेजस्कायिकजीवराशेः आवल्यसंख्येयभागभक्तपल्यन्यूनसागरोपमप्रमिता भवंति सा—प/९। अप्रतिष्ठितप्रत्येकजीवराशेः पुनःएकवारावल्यसंख्येयभागभक्तपल्यन्यूनसागरोपममात्रा भवंति सा-प/९।९। प्रतिष्ठितप्रत्येकजीवराशेः पुनरेकवारावल्यसंख्येयभागापहृतपल्यरहितसागरोपमसंख्या भवंति। सा—प/९।९।९। वादरभूकायिकजीवराशेः पुनरेकवारावल्यसंख्येयभागभक्तपल्यहीनसागरोपमप्रमाणा भवंति। सा — प/९।९।९।९ वादरापकायिकजीवराशेः पुनरेकवारावल्यसंख्येयभागाभाजितपल्यविहीनसागरोपममात्रा भवंति। सा — प/९।९।९।९।९ वादरवायुकायिकजीवराशेः संपूर्णसागरोपमप्रमिता भवंति। सा। चरिमसायरं पुण्णमिति वचनात्॥ २१३॥

मं० प्र०-- वादरतेजस्कायिकाप्रतिष्ठितप्रतिष्ठितभूजलवातकायिकजीवराशीनामर्धच्छेदप्रमाणं प्रथममुच्यते--आवल्यसंख्यातभागावहतपल्यस्य तदेकभागेन हीनसागरोपममात्राः वादरतेजस्कायिकराशेरर्धच्छेदा भवंति। पुनस्तदेकभागस्य पुनरप्यावल्यसंख्यातभागभक्तस्य तदेकभागहीनसागरोपमात्राः अप्रतिष्ठितप्रत्येकराशेरर्धच्छेदा', पुनस्तदेकभागस्य पुनरप्यावल्यसंख्यातभागभक्तस्य तदेकभागेन हीनसागरोपममात्राः प्रतिष्ठितप्रत्येकराशेरर्धच्छेदाः, पुनस्तदेक-

भागस्यापरावल्यसंख्यातभागभक्तस्य तदेकभागेन हीनसागरोपममात्राः बादरभूमिकायिकराशेरर्धच्छेदाः पुनस्तदेकभागस्यापरावल्यसंख्यातभागभक्तस्य तदेकभागेन हीनसागरोपममात्राः बादराप्कायिकराशेरर्धच्छेदाः, पुनः संपूर्णसागरोपममात्राः बादरवातकायिकराशेरर्धच्छेदाः, चरमसागरोपममित्यनेन वातकायिकराश्यर्धच्छेदा उक्ताः अंतः कारणात् ॥ २१३ ॥

सं० च०—बादर अग्निकायिक अप्रतिष्ठित प्रतिष्ठित प्रत्येक वनस्पती पृथ्वी अप् वायु इन छहौं राशिके अर्धच्छेदोंका परिमाण प्रथम कहिए है। अर्धच्छेदका स्वरूप पूर्वैं धारानिका कथनविषैं कह्या ही था सो इहां एकबार आवलीका असंख्यातवां भागका भाग पल्यकौं दीएं जो एक भागका परिमाण आवै तितनां सागरमेंसौं घटाइए तब बादर अग्निकायिक जीवनिका जो परिमाण ताके अर्धच्छेदनिका परिमाण होइ। बहुरि दोयवार आवलीका असंख्यातवां भागका भाग पल्यकौं दीए जो परिमाण आवै तितनां सागरमेंसौं घटाइए तब बादर अप्रतिष्ठित प्रत्येक राशिके अर्धच्छेदनिका परिमाण होइ। बहुरि तीन वार आवलीका असंख्यातवां भागका भाग पल्यकौं दीए जो परिमाण आवै तितनां सागरमेंसौं घटाइए तब बादर प्रतिष्ठित प्रत्येक राशिके अर्धच्छेदनिका परिमाण होइ। बहुरि च्यारिवार आवलीका असंख्यातवां भागका भाग पल्यकौं दीए जो परिमाण आवै तितना सागरमेंसौं घटाएं पृथ्वीकायिक राशिके अर्धच्छेदनिका परिमाण होइ। बहुरि पांच वार आवलीका असंख्यातवां भागका भाग पल्यकौं दीएं जो परिमाण आवै तितनां सागरमेंसौं घटाए अप्कायिक राशिके अर्धच्छेदनिका परिमाण होइ। बहुरि वातकायिक राशिके अर्धच्छेदनिका परिमाण संपूर्ण सागरप्रमाण जानना। जातैं सूत्रविषैं ऐसा कह्या है 'अंतविषैं संपूर्ण सागर है' ॥ २१३ ॥

## तेवि विसेसेणहिया पल्लासंखेज्जभागमेत्तेण।
## तम्हा ते रासीओ असंखलोगेण गुणिदकमा ॥ २१४ ॥

**तेऽपि विशेषेणाधिकाः पल्यासंख्यातभागमात्रेण ।**
**तस्माच्चे राशयोऽसंख्यलोकेन गुणितक्रमाः ॥ २१४ ॥**

जी० प्र०—यतः कारणात् ते उक्तार्धच्छेदराशयः बादरतेजस्कायिकोक्तार्धच्छेदराशितः अप्रतिष्ठितप्रत्येकादीनामुक्तार्धच्छेदराशयः पंचापि आवल्यसंख्येयभागभक्तपल्यासंख्येयभागमात्रेण स्वस्वैकैकविशेषेण क्रमशः एवंविधेन—

| अ प ८ ९ । ९ | णि प ८ ९ । ९ । ९ | भू प ८ ९ । ९ । ९ । ९ | ज प ८ ९ । ९ । ९ । ९ । ९ | वा प १ ९ । ९ । ९ । ९ । ९ |
|---|---|---|---|---|

अधिकाः संति ततः कारणात् तत्तदधिकप्रमितद्विकान्योन्याभ्याससंभूतासंख्यातलोकेन ते जीवराशयो गुणितक्रमा भवंति । तदसंख्यातलोकोत्पत्तिक्रमः अंकसंदृष्ट्यर्थसंदृष्टिभ्यां दर्श्यते-तत्रांकसंदृष्ट्या यथा-षोडशद्विकान्योन्याभ्यासे यदि पणट्ठिराशिर्लभ्यते तदा चतुःषष्टिद्विकान्योन्याभ्यासे को राशिर्लभ्यते इति प्रमाणफलेच्छाराशीन् कृत्वा—

प्र । वि १६ । फ ६५ = । इ वि ६४ (दे २ … दे २) | लब्धानयने करणसूत्रमाह—

मं० प्र०—तेप्यर्धच्छेदाः पूर्वपूर्वतः उत्तरोत्तरे पल्यासंख्येयभागमात्रेण द्वितीयादिषु पल्यासंख्यातैकभागस्य बहुभागमात्रेण वातकायिकेषु चरमपल्यासंख्यातैकभागमात्रेण विशेषेणाधिका भवंति तस्मात्कारणात् अधिकपल्यासंख्यातभागमात्रार्धच्छेदपरिमिताद्विकान्योन्यगुणनसंभूतेन असंख्यातलोकेन गुणितक्रमास्ते बादरतेजस्कायिकादिराशयो भवंति । अत्र तेजस्कायिकार्धच्छेदेभ्यः अप्रतिष्ठितप्रत्येकानामधिकार्धच्छेदाः प ८ / ९ । ९ एतेभ्यः प्रतिष्ठितप्रत्येकानामधिकार्धच्छेदाः प ८ / ९९९ एतेभ्यः बादरपृथ्वीकायिकानामधिकार्धच्छेदाः प ८ / ९९९९ एतेभ्यः बादराप्कायिकानामधिकार्धच्छेदाः प ८ / ९९९९९ एतेभ्यः बादरवातकायिकानामधिकार्धच्छेदा. प १ / ९९९९९ एतेषामधिकार्धच्छेदाना रूपं रूपं प्रति द्विकान्योन्यगुणने असंख्यातलोकोत्पत्तिक्रमो दर्श्यते तद्यथा—अंकसंदृष्ट्या एतावद्रूपमात्रद्विकान्योन्यगुणने प्र—दे २ / वि १६ यद्ययं राशिरुत्पद्यते फ इष्ट ६५ = तदा एतावद्रूपमात्रद्विकान्योन्यगुणने को राशिरुत्पद्यते इ दे २ / वि ६४ लब्धराशिः १८ = अत्र त्रैराशिकविशेषकारणसूत्रमिदं ॥ २१४ ॥

सं० च०—जा कारणतैं कहे जे अर्धच्छेद राशि ते वादर तेज कायिक राशिके अर्धच्छेद राशितैं लगाइ अप्रतिष्ठित प्रत्येक आदि राशिनिके अर्धच्छेद पांचौ आवलीके असंख्यातवें भागमात्र अपना अपना एक एक विशेष करि क्रमतैं अधिक हैं। तहां अग्निकायिक राशिनिके अर्धच्छेदनितैं अप्रतिष्ठित प्रत्येक राशिके अर्धच्छेद पल्यकौं एक घाटि आवलीका असंख्यातवां भागकरि गुणिए अर दोय वार आवलीका असंख्यातवां भागका भाग दीजिए जो प्रमाण होइ तितने अधिक हैं। बहुरि अप्रतिष्ठित प्रत्येक राशिके अर्धच्छेदनितैं प्रतिष्ठित प्रत्येक राशिके अर्धच्छेद पल्यकौं एक घाटि आवलीका असंख्यातवां भागकरि गुणिए अर तीन वार आवलीका असंख्यातवां भागका भाग दीएं जो प्रमाण होइ तितने अधिक हैं। बहुरि प्रतिष्ठित प्रत्येक राशिके अर्धच्छेदनितैं वादर पृथ्वी कायिक राशिके अर्धच्छेद पल्यकौं एक घाटि आवलीका असंख्यातवां भागकरि गुणिए अर च्यारि वार आवलीका असंख्यातवां भागका भाग दीजिए जो प्रमाण होइ तितने अधिक हैं। बहुरि वादर पृथ्वीकायिक राशिके अर्धच्छेदनितैं बादर जल कायिक राशिके अर्धच्छेद पल्यकौं एक घाटि आवलीका असंख्यातवां भागकरि गुणिए अर पांच वार आवलीका असंख्यातवां भागका भाग दीजिए जो प्रमाण होइ तितने अधिक हैं। बहुरि वादर जलकायिकराशिके अर्धच्छेदनितैं वादर वातकायिक राशिके अर्धच्छेद पल्यकौं एक करि गुणिए अर पांचवार आवलीका असंख्यातवां भागका भाग दीजिये जो प्रमाण आवै तितने अधिक हैं ऐसें अधिक अधिक अर्धच्छेद जानने। अब इस कथनकौं अंकसंदृष्टिकरि दिखाइए है-पल्यका प्रमाण पैसाठि हजार पाचसै छत्तीस ६५५३६ आवलीका असंख्यातवां भागका प्रमाण आठ, सागरका प्रमाण छह लाख पचपन हजार तीनसै साठि ६५५३६० तहां एक वार दोयवार तीनवार च्यारिवार पांचवार आठका भाग पणट्ठीकौं दीएं इक्यासीसै वाणवै, एक हजार चौबीस, एकसौ अठाईस, सोलह, दोय ८१९२।१०२४।१२८।१६।२। इतने पाइए सो ए क्रमतैं आठ आठ गुणे घाटि हैं बहुरि इतने इतने छह लाख पचावन हजार तीनसै साठिविषैं घटाएं अंतविषैं संपूर्ण हैं तातैं किछू भी न घटाएं अग्निकायिकादि राशिके अर्धच्छेदनिका प्रमाण होइ ६४७१६८। ६५४३३६। ६५५२-

३२ । ६५५३४४ । ६५५३५८ । ६५५३६० । इहां अधिक प्रमाण ल्यावनेकौं पणट्ठीकौं सातकरि गुणैं दोय तीन च्यारि पांचवार आठका भाग दीएं अंतविषैं एककरि गुणि पांचवार आठका भाग दीएं इकहत्तरिसै अडसठ, आठसै छिनवै, एकसौ बारह, चौदह, दोय ७१६८ । ८९६ । ११२ । १४ । २ । अनुक्रमतैं अधिकका प्रमाण आवै है । ऐसैं ही पूर्वोक्त कथनका भावार्थ जानना । बहुरि इहां जितना जितना अर्धच्छेदनिका अधिक प्रमाण कह्या तितना तितना दूवा माडि परस्पर गुणैं जो जो यथासंभव असंख्यात लोकमात्र प्रमाण होइ तींहि तींहिकरि गुण्या हूवा अनुक्रमतैं अग्निकायिकादितैं अप्रतिष्ठित प्रत्येकादि राशि जानने । जातैं ऐसैं सूत्र पूर्वै गणित कथनविषैं कह्या है—

विरलिदरासीदो पुण जेत्तियमेत्ताणि अहियरूवाणि ।
तेसिं, अण्णोण्णहदी गुणयारो लद्धरासिस्स ॥

इस सूत्रके अभिप्रायतैं जेते जेते पूर्वराशिके अर्धच्छेदनितैं उत्तर राशिके अर्धच्छेद अधिक कहे तितने तितने दूवे मांडि परस्पर गुणैं जो जो प्रमाण होइ तितने तितने प्रमाणकरि पूर्वराशिकौं गुणैं उत्तर राशिका प्रमाण होइ सो इहां सामान्यपनैं गुणकारका प्रमाण सर्वत्र असंख्यात लोकमात्र है । इहां पूर्वोक्तप्रमाण दूवानिकौं परस्पर गुणैं असंख्यात लोक कैसे होइ ? सो इस कथनकौं प्रकट अंक संदृष्टिकरि अर अर्थसंदृष्टिकरि दिखाइए है जैसे सोलह दूवानिकौं परस्पर गुणैं पणट्ठी होइ तौ चौसठि दूवानिकौं परस्पर गुणैं कितने होइ ऐसैं त्रैराशिक करिए तहां प्रमाण राशिविषैं देय राशि दोय, विरलनराशि सोलह फलराशिविषैं इष्टराशी पणट्ठी ६५५३६ इच्छाराशिविषै देयराशि दोय विरलनराशि चौसठि ॥ २१४ ॥ अब इहां लब्धराशिका प्रमाण ल्यावनेकौं करण सूत्र कहै हैं—

## दिण्णच्छेदेणवहिदइट्ठच्छेदेहिं पयदविरलणं भजिदे ।

**लद्धमिदइट्ठरासीणण्णोण्णहदीए होदि पयदधणं ॥२१५॥**

देयच्छेदेनावहितेष्टच्छेदः प्रकृतविरलनं भाजिते ।
लब्धमितेष्टराश्यन्योन्यहत्या भवति प्रकृतधनं ॥ २१५ ॥

जी० प्र०—देयराश्यर्धच्छेदेन १ फलभूतेष्ट६५= राश्यर्धच्छेदान् १६ भक्त्वा १६/१ तल्लब्धेन साध्यभूतप्रकृतराशेः १८= विरलनराशिं ६४ भक्त्वा ६४/१६ तल्लब्ध ४ प्रमितेष्टराशि ६५=/१ । ६५=/१ । ६५=/१ । ६५=/१ अन्योन्याभ्यासेन साध्यभूतप्रकृतधनमे- कट्ठराशिर्भवति १८= एवमर्थसंदृष्टयापि—एतावतां द्विकानामभ्यासे यदि लोको जायते तदा एतावतां द्विकानामभ्यासे को राशिर्जायते इति त्रैराशिकं रचयित्वा प्र दे २ / वि छे छे छे ९ । फ इष्टराशिः । ≡a प्रकृतस्य दे २ / वि सा--प / ९ प्रकृतधनमानीयते— a

देयस्य रूपद्वयस्य अर्धच्छेदेनैकेन फलभूतेष्टराशेर्लोकस्यार्धच्छेदान् भक्त्वा तेन लब्धेनेच्छाराशिभूतप्रकृतधनार्धच्छेदे विरलनराशौ भक्ते सति सा — प / छे छे छे ९ । ९ / a यल्लब्धं लोकार्धच्छेदभक्त किंचिन्न्यूनसंख्यातपल्यप्रमितं प ९— / छे छे छे ९ / a एतावतां लोकानामभ्यासे कृते यो लब्धराशिः सो-ऽसंख्यातलोकमात्रो भवति— ≡a । अस्य च लोकच्छेदभक्तन्यूनप्रमाण प / a छे छे छे ९ / a मात्रलोकानामन्योन्याभ्यासेन समुत्पन्नासंख्यात- लोकं स्तोकत्वात् सदृष्टया नवांकं कृत्वा न्यूनराशिमात्रद्विकैर्जनितत्वात् वारं कुर्यात् । सोयमसंख्यातलोको वादरतेजस्कायिकराशिर्भवति ≡a/९ । अस्य च भागहारः अप्रतनाप्रतिष्ठितप्रत्येकादिजीवराशीनां सर्वभागहारेभ्योऽसंख्यातलोकगुणितः तत्तन्न्यूनराशीनामावल्य-

संख्येयगुणहीनक्रमेण सद्भावात् । तत एव प्रागुक्तत्रैराशिकक्रमेणागता अप्रतिष्ठितादिराशयोऽसंख्यातलोकमात्रा अपि उत्तरोत्तरे असंख्यातलोकगुणितक्रमा भवंति । अत्रासंख्यातलोकस्यावल्यसंख्येभागस्य च संदृष्टिभूतो नवांको भाज्याहारबहुत्वं ज्ञात्वा विवेचनीयः ॥ २१५ ॥

इत्याचार्यश्रीनेमिचंद्रविरचितायां गोम्मटसारापरनामपंचसंग्रहवृत्तौ जीवतत्त्वप्रदीपिकाख्यायां जीवकांडे विंशतिप्ररूपणासु कायप्ररूपणानामाष्टमोऽधिकारः ॥ ८ ॥

---

मं० प्र०—देयराश्यर्धच्छेदैः १ फल ६५ = भूतेष्टराश्यर्धच्छेदान् १६ भक्त्वा तल्लब्धेन १६ साध्यभूत १८ = प्रकृतराशेर्विरलनराशिं ६४ भक्त्वा तल्लब्धमितेष्ट ६५ = राश्यन्योन्यगुणकारे उत्पन्नः १८ = प्रकृतराशिर्भवति एवमर्थसंदृष्टया एतावद्रूपमात्रद्विकान्योन्यगुणने प्र

दे २
वि छे छे छे ९
a

यद्ययं राशिरुत्पद्यते फ तदा एतावद्रूपमात्रद्विकान्योन्यगुणने को राशिरुत्पद्यते इ त्रैराशिकं कृत्वा दिण्णच्छेदेण इत्यादि करणसूत्रो-
इष्ट ≡
दे २
वि. स. प १
९

क्तविधानेन लब्धः लोकार्धच्छेदविभक्तकिंचिदूनसंख्यातपल्यस्य प १- । यावंति रूपाणि तावतो वारान् लोकानां परस्परगुणकारे सति उत्पन्नः असंख्या-
छे छे छे ९
a

तलोकमात्रः बादरतेजस्कायिकजीवराशिर्भवति ≡a लोकच्छेदभक्तमूनप्रमाणं विरलयित्वा तद्रूपमात्रान् वारान् लोके अन्योन्यसंगुणिते यः असंख्यातलो-
९

क उत्पन्नः तत्प्रमाणो भागहार इति ज्ञातव्यं । स च सर्वभागहारेभ्योऽधिकः । एवमप्रतिष्ठितप्रत्येकादिराशीनामर्धच्छेदान् ऊनप्रमाणानि च ज्ञात्वा उक्तत्रैराशिकविधानेन असंख्यातलोकमात्रा अपि उत्तरोत्तरमसंख्यातलोकगुणिताः तत्तद्राशयस्तत्तद्भागहाराश्च असंख्यातलोकमात्रा अपि उत्तरोत्तरमसंख्यातलोकगुणहीना आनेतव्याः । अत्रासंख्यातलोकस्य आवल्यसंख्यातभागस्यापि सदृष्टिर्नवाकः तथापि तयोर्भाज्यराश्यल्पबहुत्वे वीक्ष्य विवेचनीयः ॥ २१५ ॥

इतिश्रीमदभयचन्द्रसूरिसिद्धांतचक्रवर्तिकृतौ गोम्मटसारपंचसंग्रहवृत्तौ कायमार्गणाप्ररूपणानामाष्टमोऽधिकारः ॥८॥

---

स. चं.—देय राशिके अर्धच्छेदका प्रमाण करि जे फलराशिके अर्धच्छेद प्रमाण राशिविषैं विरलन राशि रूप कहे तिनिका भाग दीएं जो प्रमाण आवै तीहि करि इच्छाराशिरूप प्रकृतराशिविषैं जो विरलन राशिका प्रमाण कह्या ताकौं भाग दीएं जो प्रमाण आवै तितना जायगा फल राशिरूप जो इष्ट राशि ताकौं मांडि परस्पर गुणें जो प्रमाण आवैं तितनां लब्धराशिरूप प्रकृतिधनका प्रमाण हो है सो इहां देय राशि दोय ताका अर्धच्छेद एक तीहिंका जे फलराशि पणट्ठीके अर्धच्छेद प्रमाण राशिविषै विरलन राशिरूप कहे सोलह तिनिकौं भाग दीए सोलह ही पाए इनिका साध्यभूत राशिका इच्छाराशिविषैं कह्या जो विरलन राशि चौंसठि ताकौं भाग दीए च्यारि पाए सो च्यारि जायगा फलराशिरूप पणट्ठी मांडि ६५५३६। ६५५३६। ६५५३६। ६५५३६। परस्पर गुणें लब्धराशि एकट्ठी प्रमाण हो है ऐसैं ही यथार्थ कथन जानना। जो पूर्वे गणित कथनविषैं लोकके अर्धच्छेदनिका जेता परिमाण कह्या है तितने दूवे मांडि परस्पर गुणें लोक होइ तौ इहां अग्निकायिक राशिके अर्धच्छेद प्रमाण दूवे मांडि परस्पर गुणे कितने लोक होंहि? ऐसैं त्रैराशिककरि इहां प्रमाण राशिविषैं देय राशि दोय, विरलन राशि लोकका अर्धच्छेदराशि, अर फलराशि लोक अर इच्छाराशि विषै देय राशि दोय, विरलन राशि अग्निकायिक राशिके अर्धच्छेद प्रमाण जानना। तहां लब्धराशि ल्यावनेकौं देय राशि दोय ताका अर्धच्छेद एक ताका भाग फलराशि जो लोक ताका अर्धच्छेदरूप प्रमाण राशिविषैं विरलन राशि है ताकौं भाग दीएं लोकका अर्धच्छेद मात्र पाए। इनका साध्यभूत अग्निकायिक राशिका अर्धच्छेदरूप जो इच्छाराशि ताविषै विरलनराशि अग्निकायिक राशिके अर्धच्छेद तिनिकौं भाग दीएं जो प्रमाण आया सो किछू घाटि संख्यात पल्यकौं लोकका अर्धच्छेदराशिका भाग दीएं जो प्रमाण होइ तितना यहु प्रमाण आया सो इतने लोक मांडि परस्पर गुणें जो असंख्यात लोकमात्र परिमाण भया सोई लब्धिराशिरूप वादर अग्निकायिक राशिका प्रमाण इहां जानना। इहां किंचिदून संख्यात पल्य प्रमाण लोकनिकौं परस्पर गुणें जो महत असंख्यात लोक मात्र परिमाण आया सो तौ भाज्य राशि जानना। अर लोकका अर्धच्छेद प्रमाण

लोकनिकौं परस्पर गुणें जो छोटा असंख्यात लोकमात्र परिमाण आया सो भागहार जानना। भागहारका भाग भाज्यकौं दीएं जो प्रमाण होइ तितना बादर अग्निकायिक जीवनिका प्रमाण जानना। बहुरि इहां अग्निकायिक राशिविषैं जो भागहार कह्या सो अगले अप्रतिष्ठित प्रत्येक आदि राशिनिविषैं जो भागहारका प्रमाण पूर्वोक्त प्रकार कीएं आवै तिनि सबनितैं असंख्यात लोक गुणा जानना। जातैं सागरमेंस्यों जो जो राशि घटाया सो सो क्रमतैं आवलीका असंख्यातवां भाग गुणा घाटि है तातैं प्रमाण राशि फलराशि पूर्वोक्तवत् स्थापि अर इच्छाराशिविषैं विरलन राशि अपने अपने अर्धच्छेद प्रमाण स्थापि पूर्वोक्त प्रकार त्रैराशिककरि अप्रतिष्ठित प्रत्येक आदि राशि भी सामान्यपनैं असंख्यात लोकमात्र हैं तथापि उत्तर उत्तर राशि असंख्यात लोक गुणा जानना। भागहार जहां घटता होइ तहां राशि वधता होइ सो इहां भागहार असंख्यात लोक गुणा घटता क्रमतैं भया तातैं राशि असंख्यात लोक गुणा भया इहां असंख्यात लोक वा आवलीका असंख्यातवां भागकी संदृष्टि स्थापि अर्थ संदृष्टिका स्थापन है। सो आगैं संदृष्टि अधिकारविषै लिखेंगे ॥ २१५ ॥

इति आचार्य श्रीनेमिचंद्रविरचितगोम्मटसारद्वितीयनाम पंचसंग्रह ग्रन्थकी जीवतत्त्वप्रदीपिका नाम संस्कृतटीका अनुसारि सम्यग्ज्ञान चंद्रिका नामा इस भाषा टीकाविषैं जीवकांडविषैं प्ररूपित जे वीस प्ररूपणा तिनिविषैं कायप्ररूपणा नामा आठवां अधिकार संपूर्ण भया ॥ ८ ॥

जी० प्र०—

## अथ योगमार्गणाप्ररूणाधिकार ॥ ९ ॥

कल्याणैः पंचभिर्भांतं नवकेवललब्धिभिः।
शतेंद्रपूज्यपादाब्जं पुष्पदंतं नमाम्यहं ॥ ९ ॥

अथ शास्त्रकारो योगमार्गणां प्रक्रममाणस्तदादौ योगस्य साधारणलक्षणमाह—

म० प्र०—

श्रीपुष्पदंततीर्थेश कुंदपुष्पाभदंतकं।
वंदेहं पुष्पदंतौघप्रभाभ्यर्धिवपुःप्रभं ॥ ९ ॥

अथ शास्त्रकारो योगमार्गणां प्रक्रममाणस्तावद्योगस्य सामान्यलक्षणमाह—

स० चं०—

कुंदकुसुमसम दंतजुत पुष्पदंत जिनराय।
वंदौ ज्योति अनंतमय पुष्पदंतवतकाय ॥ ९ ॥

आगैं शास्त्रकर्ता योगमार्गणाका निरूपण करैं हैं तहां प्रथम ही योगका सामान्य लक्षण कहै हैं—

**पुग्गलविवाइदेहोदयेण मणवयणकायजुत्तस्य।**
**जीवस्स जा हु सत्ती कम्मागमकारणं जोगो ॥ २१६ ॥**

पुद्गलविपाकिदेहोदयेन मनोवचनकाययुक्तस्य।
जीवस्य या हि शक्तिः कर्मागमकारणं योगः ॥ २१६ ॥

जी० प्र०—पुद्गलविपाकिनः अंगोपांगनामकर्मणः, देहस्य च शरीरनामकर्मणः, उदयेन मनोवचनकायपर्याप्तिपरिणतस्य कायवाग्मनोवर्गणावलंबिनः संसारिजीवस्य लोकमात्रप्रदेशगता कर्मादानकारणं या शक्तिः सा भावयोगः। तद्विशिष्टात्मप्रदेशेषु यः किंचिचलनरूपपरिस्पंदः स द्रव्ययोगः। कर्मेतिलक्षणेन कर्मनोकर्मवर्गणारूपपुद्गलस्कंधस्य ज्ञानावरणादिकर्मौदारिकादिनोकर्मभावेन परिणमनहेतुर्यत्सामर्थ्यं आत्मप्रदेशपरिस्पंदश्च योग इत्युच्यते। अंगोपांगशरीरनामकर्मोदयेन मनोवर्गणागतपुद्गलस्कंधानां आहारवर्गणायातनोकर्मपुद्गलस्कंधानां च संबंधेन जीवप्रदेशानामग्निसंयोगेन लोहस्य दहनशक्तिवत् कर्मनोकर्मादानशक्तिः सामर्थ्यमुत्पद्यते इति भावार्थः ॥२१६॥ अथ योगविशेषमाह—

११९

म.प्र. संसारिणो जीवस्य कर्मागमकारणं कर्मेत्युपलक्षणात् कर्मनोकर्मवर्गणारूपपुद्गलस्कंधस्य ज्ञानावरणादिकर्मभावेन औदारिकशरीरादिनोकर्मभावेन च परिणमनहेतुर्या शक्तिः--सामर्थ्यं तद्विशिष्टात्मप्रदेशपरिस्पंदश्च स योग इत्युच्यते। किंविशिष्टस्य जीवस्य ? मनोवचनकाययुक्तस्य मनोभाषाशरीरपर्याप्तिपरिणतस्य मनोवाक्कायवर्गणासहितस्य च। केन हेतुना ? पुद्गलविपाकिदेहोदयेन हेतुना, पुद्गलविपाकिनः यथसंभवमंगोपांगनामकर्मणः, देहस्य--औदारिकादिशरीरनामकर्मणश्च, उदयेन--फलदानपरिणत्या, अंगोपांगशरीरनामकर्मोदयागतपुद्गलस्कंधकर्मनोकर्मतापरिणमनहेतुः शरीरभाषामनःपर्याप्तिपरिणतस्य कायवाग्मनोवर्गणावलंबिनः संसारिजीवस्य लोकमात्रप्रदेशगता या शक्तिः स भावयोगः तद्विशिष्टात्मप्रदेशानां यः परिस्पंदः किंचिच्चलनरूपः स द्रव्ययोग इति तात्पर्यार्थः॥२१६॥

अथ योगविशेषलक्षणमाह---

सं० च०---संसारी जीवकैं कर्म जो ज्ञानावरणादिक कर्म अर उपलक्षणतैं औदारिकादिक नोकर्म तिनिका आगम कहिए कर्म नोकर्म वर्गणारूप पुद्गलस्कंधनिका कर्म नोकर्मरूप परिणमना ताकौं कारणभूत जो शक्ति बहुरि उस शक्तिका धारी जो आत्मा ताके प्रदेशनिका चंचलरूप होना सो योग कहिए है। कैसा है जीव ? पुद्गलविपाकी जो यथासंभव अंगोपांग नाम प्रकृति वा देह जो शरीर नाम प्रकृति ताका उदय जो फल देना रूप परिणमना ताकरि मन वा भाषा वा शरीररूप जे पर्याप्ति तिनिकौं धरै है। मनोवर्गणा भाषावर्गणा कायवर्गणाका अवलंबनकरि संयुक्त है। इहां अंगोपांग वा शरीर नामा नामकर्मके उदयतैं शरीर भाषा मनःपर्याप्तिरूप परिणम्या काय भाषा मन वर्गणाका अवलंबनयुक्त आत्मा ताकौं लोकमात्र सर्व प्रदेशनिविषैं प्राप्त जो पुद्गलस्कंधनिकौं कर्म नोकर्मरूप परिणमावनेकौ कारणभूत शक्ति समर्थता सो भाव योग है। बहुरि उस शक्तिका धारी आत्माके प्रदेशनिविषैं किछू चलनरूप सकंप होना सो द्रव्य योग है। इहां यहु अर्थ जानना जैसैं अग्निके संयोगकरि लोहके जलावनेकी शक्ति हो है तैसै अंगोपांग शरीर नामा नामकर्मके उदयकरि मन वर्गणा वा भाषा वर्गणाका आए पुद्गल स्कंध अर आहार वर्गणाका आए नोकर्म पुद्गलस्कंध तिनिका संबंधकरि जीवके प्रदेशनिके कर्म नोकर्म ग्रहणकी शक्ति समर्थता हो है॥ २१६॥ आगैं योगानिका विशेष लक्षण कहै हैं--

**मणवयणाण पउत्ती सच्चासच्चुभयअणुभयत्थेसु।**

## तण्णामं होदि तदा तेहिं दु जोगा हु तज्जोगा ॥२१७॥

मनोवचनयोः प्रवृत्तयः सत्यासत्योभयानुभयार्थेषु ।
तन्नाम भवति तदा तैस्तु योगाद्धि तद्योगाः ॥ २१७ ॥

जी० प्र०—सत्यासत्योभयानुभयार्थेषु याः प्रवृत्तयः मनोवचनयोः तदा ज्ञानवाक्प्रयोगजनने जीवप्रयत्नरूपप्रवृत्तीनां सत्यादि तन्नाम भवति सत्यमन इत्यादि । तु–पुनः तैः सत्याद्यर्थैः सद्योगात्–संबधात्, खलु- स्फुटं, ताः मनोवचनप्रवृत्तयः, तद्योगाः--सत्यादिविशेषणविशिष्टाः, चत्वारो मनोयोगाश्चत्वारो वाग्योगाश्च भवंति । सम्यग्ज्ञानविषयोर्थः सत्य यथा जलज्ञानविषयो जल स्नानपानाद्यर्थक्रियासद्भावात् । मिथ्याज्ञानविषयोर्थः असत्यः यथा जलज्ञानविषयो मरीचिकाचक्रे जलं स्नानपानाद्यर्थक्रियाविरहात् । सत्यासत्यज्ञानविषयोर्थः उभयः सत्यासत्य इत्यर्थः यथा जलज्ञानविषयः कमंडलुनि घटः । अत्र जलधारणार्थक्रियायाः सद्भावात् सत्यतायाः घटाकारविकलत्वादसत्यतायाश्च प्रतीतेः । अयं गौणार्थः अग्निर्माणवक इत्यादिवत् । अनुभयज्ञानविषयोर्थः अनुभयः सत्यासत्यार्थद्वयेनावक्तव्यः यथा किंचित्प्रतिभासते । सामान्येन प्रतिभासमानोऽर्थः स्वार्थक्रियाकारिविशेषनिर्णयाभावात् सत्य इति वक्तुं न शक्यते । सामान्यप्रतिभासात् असत्य इत्यपि वक्तुं न शक्यते इति जात्यंतरं अनुभयार्थः स्फुटं चतुर्थो भवति । एव घटे घटविकल्पः सत्यः, घटे पटविकल्पोऽसत्यः, कुंडिकायां जलधारणे घटविकल्पः उभयः, आमंत्रणादिषु अहो देवदत्त इति विकल्पः अनुभयः । कालेनैव गृहीता सा कन्या किं मृत्युना अथवा धर्मणा इत्यनुभयः ॥ २१७ ॥ सत्यार्थविषयो मनोयोग इत्यादिविशेषलक्षणं गाथाचतुष्टयेन कथयति–

मं० प्र०—सत्यासत्योभयानुभयार्थेषु मनोवचनयोः याः प्रवृत्तयः तत्तज्ज्ञानवाक्प्रयोगजनने आत्मनः प्रयत्नास्तासां प्रवृत्तीनां तन्नाम भवति तु-पुनः, तैर्योगात्--सत्याद्यर्थैः सबंधात्, खलु - स्फुटं, ता. मनोवचनप्रवृत्तयः, तद्योगाः- सत्यादिविशेषणविशिष्टाश्चत्वारो मनोयोगाश्चत्वारो वाग्योगाश्च भवति । सम्यग्ज्ञानविषयोर्थः सत्यः, यथा जलज्ञानविषयो जलं स्नानपानाद्यर्थक्रियासद्भावात् । मिथ्याज्ञानविषयोऽर्थः असत्यः यथा जलज्ञानविषयो मरीचिकाचक्रे जलं स्नानपानाद्यर्थक्रियाविरहात् । सत्यासत्यज्ञानविषयोर्थः उभयः सत्यासत्यरूपः यथा घटज्ञानविषयः कमंडलुनि घटः अत्र जलधारणार्थक्रियासद्भावात् सत्यता, घटाकारविकलत्वात् असत्यता च प्रतीयते इति अयमेव गौणार्थः । अग्निर्माणवक इत्यादिरूपः अनुभयज्ञानविषयोर्थः अनुभयः सत्यासत्यत्वाभ्यामवक्तव्यः यथा किंचित्प्रतिभासत इति सामान्येन प्रतिभासमानोऽर्थः स्वार्थक्रियाकारिविशेषनिर्णयाभावात् सत्य इति वक्तु न शक्यते सामान्यप्रतिभासादसत्य इति वक्तुं न शक्यते इति जात्यंतरमनुभयार्थो नाम चतुर्थो भेद इति ॥ २१७ ॥ सत्यार्थविषयो मनोयोगः सत्यमनोयोग इत्यादिविशेषलक्षणं प्ररूपयितुं गाथाचतुष्टयमाह–

**सं० च०—सत्य असत्य उभय अनुभय रूप जे पदार्थ तिनिविषैं जो मन वचनकी प्रवृत्ति होइ उनके जा-**

ननेकौं वा कहनेकौं जीवका प्रयत्नरूप प्रवृत्ति होइ सो सत्यादिक पदार्थका संबंधतैं सो सत्य असत्य उभय अनुभय है विशेषण जिनिका ऐसे च्यारि प्रकार मनोयोग अर च्यारिप्रकार वचनयोग जानने । तहां यथार्थ जैसाका तैसा सांचा ज्ञानगोचर जो पदार्थ होइ ताकौं सत्य कहिए जैसैं जलका जाननाके गोचर जल होइ जातैं स्नान पानादिक जल संबंधी क्रिया उसतैं सिद्ध हो है तातैं सत्य कहिए । बहुरि अयथार्थ अन्यथारूप पदार्थ जो मिथ्याज्ञानके गोचर होइ ताकौं असत्य कहिए जैसैं जलका जाननाके गोचर भाडली होइ जातैं स्नान पानादिक जल संबंधी क्रिया भाडलीस्यों सिद्ध न हो हैं तातैं असत्य कहिए । बहुरि यथार्थ वा अयथार्थ रूप पदार्थ जो उभय ज्ञान गोचर होइ ताकौं उभय कहिए जैसैं कमंडलु विषैं घटका ज्ञान होइ जातैं घटकी ज्यों जलधारणादि क्रिया कमंडलुस्यों सिद्ध हो है तातैं सत्य है । बहुरि घटकासा आकार नाहीं है तातैं असत्य है ऐसैं यहु उभय जानना । बहुरि जो यथार्थ अयथार्थका निर्णय करि रहित पदार्थ सो अनुभय गोचर होइ ताकौं अनुभय कहिए । सत्य असत्यरूप कहने योग्य नांहीं जैसैं यह किछू प्रतिभासै है ऐसैं सामान्यरूप पदार्थ प्रतिभास्या तहां उस पदार्थकरि कौन क्रिया सिद्ध हो है ऐसा विशेष निर्णय न भया तातैं सत्य भी न कह्या जाय बहुरि सामान्यपनैं प्रतिभास्या तातैं असत्य भी न कह्या जाय तातैं याकौं अनुभय कहिए । ऐसैं च्यारि प्रकार पदार्थनिविषैं मनकी वा वचनकी प्रवृत्ति होइ सो च्यारि प्रकार मनोयोग वा च्यारि प्रकार वचनयोग जानने । इहां घटविषैं घटकौ विकल्प सो सत्य अर घटविषैं पटका विकल्प सो असत्य, अर कुंडीविषैं जलधारन करि घटका विकल्प सो उभय अर संबोधन आदिविषैं हे देवदत्त इत्यादि विकल्प सो अनुभय जानना ॥ २१७ ॥
आगैं सत्य पदार्थ हैं गोचर जाकैं ऐसा मनोयोग सो सत्य मनोयोग इत्यादिक विशेष लक्षण च्यारि गाथानि करि कहैं हैं—

## सब्भावमणो सच्चो जो जोगो तेण सच्चमणजोगो ।

**तव्विवरीओ मोसो जाणुभयं सच्चमोसोत्ति ॥ २१८ ॥**

सद्भावमनः सत्यं यो योगः स तु सत्यमनोयोगः।
तद्विपरीतो मृषा जानीहि उभयं सत्यमृषेति ॥ २१८ ॥

जी० प्र०—सद्भावः सत्यार्थः, तद्विषयं मनः सत्यमनः, सत्यार्थज्ञानजननशक्तिरूपं भावमन इत्यर्थः। तेन सत्यमनसा जनितो योगः–प्रयत्नविशेषः स सत्यमनोयोगः। तद्विपरीतः असत्यार्थविषयज्ञानजनितशक्तिरूपभावमनसा जनितप्रयत्नविशेषः मृषा–असत्यमनोयोगः। उभय–सत्यमृषार्थज्ञानजननशक्तिरूपभावमनोजनितप्रयत्नविशेषः उभयमनोयोगः इति हे भव्य! त्वं जानीहि ॥ २१८ ॥

म० प्र०—सद्भावः–सत्यार्थः तद्विषयं मनः–सत्यमनः सत्यार्थज्ञानजननशक्तिरूपं भावमन इत्यर्थः तेन जनितो यो योगः–प्रयत्नविशेषः स सत्यमनोयोगः। तद्विपरीतः असत्यार्थविषयज्ञानजननशक्तिरूपभावमनसा जनित प्रयत्नविशेषः मृषा- असत्यमनोयोगः। उभयः सत्यमृषार्थज्ञानजननशक्तिरूपभावमनोजनितप्रयत्नविशेषः उभयमनोयोग इति हे भव्य? जनीहि ॥ २१८॥

सं० च०—'सद्भावः' कहिए सत्पदार्थ सो है गोचर जाका अैसा जो मन सत्य पदार्थके ज्ञान उपजावनेकी शक्ति लीएं भाव मन होइ तींहि सत्यमनकरि निपज्या जो चेष्टा प्रवर्त्तन रूप योग सो सत्यमनोयोग कहिये। बहुरि अैसैं ही विपरीत असत्य पदार्थरूप विषयके ज्ञान उपजावनेकी शक्ति रूप जो भावमन ताकरि जो चेष्टा प्रवर्तन रूप योग होइ सो असत्य मनोयोग कहिए बहुरि युगपत् सत्य असत्य रूप पदार्थके ज्ञान उपजावनेकी शक्तिरूप जो भावमन ताकरि जो प्रवर्तन रूप योग होइ सो उभय मनोयोग कहिये अैसैं हे भव्य! तू जानि।

**ण य सच्चमोसजुत्तो जो दु मणो सो असच्चमोसमणो।**
**जो जोगो तेण हवे असच्चमोसो दु मणजोगो ॥ २१९ ॥**

न च सत्यमृषायुक्तं यत्तु मनस्तदसत्यमृषामनः।
यो योगस्तेन भवेत् असत्यमृषा तु मनोयोगः ॥ २१९ ॥

जी० प्र०—यन्मनः सत्यमृषायुक्तं न च भवति तु-पुनः, तदसत्यमृषामनः, अनुभयार्थज्ञानजननशक्तिरूपं भावमन इत्यर्थः । तेन भावमनसा जनितो यो योग.--प्रयत्नविशेष. स तु पुनः असत्यमृषामनोयोगो भवेत् अनुभयमनोयोग इत्यर्थः । इति चत्वारो मनोयोगाः कथिताः ॥ २१९ ॥

म० प्र०---यन्मनः सत्यमृषायुक्तं न च नैव भवति तु--पुनः असत्यमृषामनः अनुभयार्थज्ञानजननशक्तिरूपभावमनः इत्यर्थः । तेन जनितो यो योगः प्रयत्नविशेषः स तु पुनः असत्यमृषामनोयोगो भवेत् अनुभयमनोयोग इत्यर्थः एवं चत्वारो मनोयोगाः कथिताः ॥ २१९ ॥

सं० च०—जो मन सत्य अर मृषा कहिए असत्य तींहिकरि युक्त न होइ बहुरि सत्य असत्य निर्णयकरि रहित जो अनुभय पदार्थ ताके ज्ञान उपजावनेकी शक्तिरूप जो भाव मन तींहिकरि निपज्या जो प्रवर्तनरूप योग सो सत्य असत्यरहित अनुभय मनोयोग कहिए ऐसै च्यारि प्रकार मनोयोग कह्या ॥ २१९ ॥

**दसविहसच्चे वयणे जो जोगो सो दु सच्चवचिजोगो ।**
**तव्विवरीओ मोसो जाणुभयं सच्चमोसोत्ति ॥ २२० ॥**

दशविधसत्ये वचने यो योगः स तु सत्यवचोयोगः ।
तद्विपरीतो मृषा जानीहि उभयं सत्यमृषेति ॥ २२० ॥

जी० प्र०—सत्यार्थवाचकं वचनं सत्यवचनं जनपदादिदशविधसत्यार्थविषयवाग्व्यापारजननसमर्थः, स्वरनामकर्मोदयापादितभाषापर्याप्तिजनितभाषावर्गणालम्बनात्मप्रदेशशक्तिरूपो यो भाववचनजनितो योगः प्रयत्नविशेषः स सत्यवचोयोगो भवति । तद्विपरीतो मृषा असत्यार्थविषयवाग्व्यापारप्रयत्नः असत्यवचोयोगः असत्यवाग्योगो भवति । कमंडलु ने घट इत्यादिसत्यमृषार्थवाग्व्यापारप्रयत्नतः स उभयवाग्योग इति भव्य! त्वं जानीहि ॥ २२० ॥

मं० प्र०—जनपदादिदशविधसत्यार्थविषयवाग्व्यापारजननसमर्थं स्वरनामकर्मोदयापादितभाषापर्याप्तिजनितभाषावर्गणालम्बनात्मप्रदेशशक्तिरूपं यद्भाववचः तेन जनितो यो योगः-प्रयत्नविशेषः स सत्यवचोयोगः । तद्विपरीतो मृषा असत्यार्थविषयो वाग्व्यापारप्रयत्नः असत्यवचोयोगः । कमण्डलुनि घटोयमित्यादिसत्यमृषार्थवाग्व्यापारप्रयत्न उभयवचोयोग इति जानीहि ॥ २२० ॥

सं० च०—सत्य अर्थका कहनहारा सो सत्य वचन है। जनपदनै आदि देकरि दसप्रकार सत्यरूप जो पदार्थ तींहिविषैं वचन प्रवृत्ति करनेकौं समर्थ स्वरनामा नामकर्मके उदयतैं भया भाषा पर्याप्तिकरि निपज्या जो भाषा वर्गणा आलंबन लीएं आत्माके प्रदेशनिविषैं शक्तिरूप भाव वचनकरि उत्पन्न भया जो प्रवृत्तिरूप विशेष सो सत्यवचन योग कहिए। बहुरि तीहिस्यों विपरीत असत्य पदार्थविषैं वचन प्रवृत्तिकौं कारण जो भाव वचन तींहिकरि जो प्रवर्तनरूप योग होइ सो असत्य वचन कहिए। बहुरि कमंडलुविषैं यहु घट है इत्यादिक सत्य असत्य पदार्थविषैं वचन प्रवृत्तिकौं कारण जो भाव वचन तींहिकरि जो प्रवर्तनरूप योग होइ सो उभय वचन योग कहिए ऐसा हे भव्य! तू जानि ॥ २२० ॥

**जो णेव सच्चमोसो सो जाण असच्चमोसवचिजोगो।**
**अमणाणं जा भासा सण्णीणामंतणी आदी ॥ २२१ ॥**

यो नैव सत्यमृषा स जानीहि असत्यमृषावचोयोगः।
अमनसां या भाषा संज्ञिनामामंत्रण्यादिः ॥ २२१ ॥

जी० प्र०---यः सत्यमृषार्थविषयो नैव भवति स असत्यमृषार्थविषयवाग्व्यापारप्रयत्नविशेषः अनुभयवचोयोग इति हे भव्य! त्वं जानीहि। स कः? उत्तरार्धेन तमेवोदाहरति—अमनसां द्वींद्रियाद्यसंज्ञिपचेंद्रियपर्यंतजीवानां या अनक्षरात्मिका भाषाः संज्ञिनां च आमंत्रण्याद्यक्षरात्मिकाभाषास्ताः सर्वाः अनुभयवचोयोग इत्युच्यते ॥ २२१ ॥ अथ जनपदादिदशविधसत्यमुदाहरणपूर्वकं गाथात्रयेणाह—

म० प्र०-- यः सत्यमृषार्थविषयो नैव भवति स असत्यमृषार्थविषयवाग्व्यापारप्रयत्नविशेषः अनुभयवचोयोग इति जानीहि। उत्तरार्धेन तमेवोदाहरति अमनसा--द्वींद्रियादीनामसंज्ञिपचेंद्रियपर्यंताना या अनक्षरात्मिका भाषा या च संज्ञिनामामंत्रण्यादिभाषा अक्षरात्मिका स सर्वोऽपि अनुभयवचोयोग इत्युच्यते ॥ २२१ ॥ अथ जनपदादिदशविधसत्यमुदाहरणपूर्वकं गाथात्रयेणाह---

सं० च०—जो सत्य असत्यरूप न होइ ऐसा पदार्थविषैं वचन प्रवृत्तिकौं कारण जो भाव वचन तींहिकरि

जो प्रवर्तनरूप योग होइ सो सत्य असत्य निर्णयरहित अनुभय वचन योग जानना। ताका उदाहरण उत्तर आधा सूत्रकरि कहै हैं—जो वेइंद्रियादिक असैनी पंचेंद्रिय पर्यंत जीवनिकैं केवल अनक्षररूप भाषा है सो अनुभय वचन योग जानना। वा सैनी पंचेंद्रिय जीवनिके आगै कहिए है जो आमंत्रणी आदि अक्षररूप भाषा सो सर्व अनुभय वचन योग जानना ॥ २२१ ॥ आगैं जनपद आदि दशप्रकार सत्यकौं उदाहरण पूर्वक तीनि गाथानिकरि कहै हैं—

**जणवदसम्मदिठवणाणामे रूवे पडुच्चववहारे।**
**संभावणे य भावे उवमाए दसविहं सच्चं ॥ २२२ ॥**

जनपदसम्मतिस्थापनानाम्नि रूपे प्रतीत्यव्यवहारयोः।
संभावनायां च भावे उपमायां दशविधं सत्यं ॥ २२२ ॥

जी० प्र०—जनपदे संवृतौ सम्मतौ वा स्थापनायां नाम्नि रूपे प्रतीत्ये व्यवहारे संभावनायां भावे उपमायां चेति दशस्थानेषु सत्यं दशविधं भवति ॥ २२२ ॥

म० प्र०—जनपदे संवृतौ सम्मतौ वा स्थापनायां नाम्नि रूपे प्रतीत्ये-व्यवहारे समावनायां भावे उपमाया च एषु दशसु विषयेषु रूढं यद् वच. तद्दशविध सत्यं ॥ २२२ ॥

सं० च०—जनपदविषैं संवृति वा सम्मितिविषैं स्थापनाविषैं नामविषै रूपविषै प्रतीत्य विषै व्यवहार विषै संभावनाविषै भावविषै उपमाविषै ऐसैं दश स्थानानिविषै दश प्रकार सत्य जानना ॥ २२२ ॥

**भत्तं देवी चंदप्पहपडिमा तह य होदि जिणदत्तो।**
**सेदो दिग्घो रज्झदि कूरोत्ति य जं हवे वयणं ॥ २२३ ॥**

भक्तं देवी चंद्रप्रभप्रतिमा तथा च भवति जिनदत्तः।
श्वेतो दीर्घो रध्यते कूरमिति च यद्वद्वचनं ॥ २२३ ॥

जी०प्र०--जनपदेषु तत्रतत्रतनव्यवहर्तृजनानां रूढं यद्वचनं तज्जनपदसत्यं यथा महाराष्ट्रदेशे भातु भेट्ट, अंध्रदेशे वंटक मुकुडु, कर्णाटदेशे कूळु, द्रविडदेशे चोरु। तथा संवृत्त्या कल्पनया सम्मत्या वा बहुजनाभ्युपगमेन सर्वदेशसाधारणं यन्नाम रूढं तत् संवृतिसत्यं सम्मतिसत्यं वा, यथा अग्रमहिषीत्वाभावेऽपि कस्याश्चिद्देवीति नाम। अन्यत्रान्यवस्तुनः समारोपः स्थापना तदाश्रितं मुख्यवस्तुनो नाम स्थापनासत्यं यथा चंद्रप्रभप्रतिमा चंद्रप्रभ इति। तथा च यथा भातु इत्यादि नाम देशाद्यपेक्षया सत्यं तथा अन्यनिरपेक्षतयैव संव्यवहारार्थं कस्यचित्प्रयुक्तं संज्ञाकर्म नामसत्यं यथा कश्चित् पुरुषो जिनदत्त इति। अत्र जिनैर्दत्त इति दानक्रियानिरपेक्षमेव प्रयुक्तमिदं। चक्षुर्व्यवहारप्रचुरत्वेन रूपादिपुद्गलगुणेषु रूपप्राधान्येन तदाश्रितं वचनं रूपसत्यं यथा कश्चित् पुरुषः श्वेत इति। अत्र केशादीनां नीलादिवर्णांतररसादिगुणांतरसद्भावेप्यविवक्षितत्वात्। प्रतीत्य विवक्षितादितरदुद्दिश्य विवक्षितस्यैव स्वरूपकथनं प्रतीत्यसत्यं आपेक्षिकसत्यमित्यर्थः। यथा कश्चिद्दीर्घ इति अन्यस्य ह्रस्वत्वमपेक्ष्य प्रकृतस्य दीर्घत्वकथनात्। एवं स्थूलसूक्ष्मादिवचनान्यपि प्रतीत्यसत्यानि ज्ञातव्यानि। नैगमादिनयप्राधान्यमाश्रित्य प्रवृत्तं वचनं व्यवहारसत्यं। अत्र नैगमनयप्राधान्येन यथा रध्यते कूरः पच्यते ओदनः इति। इतिशब्दः संग्रहनयादिव्यवहारप्रकारदर्शनार्थः। नयव्यवहाराश्रित यद्वचनं -स्यात्सर्वं सत् स्यात् सर्वमसत् इत्यादिवाक्यं व्यवहारसत्यं भवति। चशब्दः अर्थांतरसमुच्चयार्थः। पच्यते ओदन इत्यत्र पाकसमाप्त्यनंतरकालभावी ओदनपर्यायः पाककाले यद्यपि नास्ति तथापि तंडुलानामोदनपर्यायप्रत्यासत्तिप्ररूपकनैगमनयविवक्षया ओदनपर्यायपरिणामिद्रव्यापेक्षया तद्वाक्यस्य सत्यत्वसिद्धिः ॥ २२३ ॥

मं० प्र०---अनंतरगाथोक्तदशविधसत्यानां यथासंख्यमुदाहरणानि दश वक्ष्यमाणानि ज्ञातव्यानि तद्यथा--जनपदे- तत्र तत्र देशे व्यवहर्तृजनानां रूढ यद्वचः तज्जनपदसत्यं यथा महाराष्ट्रदेशे भातु, भेट्ट। अंध्रदेशे वंटक मुकुडु। कर्णाटदेशे कूळु। द्रविडदेशे चोरु इत्यादि। संवृत्या कल्पनया संमत्या वा बहुजनाभ्युपगमेन सर्वदेशसाधारण यन्नाम रूढं तत्संवृतिसत्य संमतिसत्य च। यथा अग्रमहिषीत्वाभावे सति कस्याश्चिद्देवीति नाम। अन्यत्रान्यवस्तुनः समारोपः स्थापना तदाश्रित मुख्यवस्तुनाम संस्थापनासत्य यथा चद्रप्रभप्रतिमा चद्रप्रभ इति। तथा च यथा भक्तादिनामदेशाद्यपेक्षया सत्यं भवति तथा पुनरप्यानिरपेक्षतयैव सव्यवहारार्थं कस्यचित्प्रयुक्त सज्ञाकर्म नाम सत्य यथा कश्चित्पुरुषो जिनदत्त इति अत्र जिनैर्दत्त इति दानक्रियानिरपेक्षमेव प्रयुक्तमिदं। चक्षुर्व्यवहारस्य प्रचुरत्वात् रूपादिपुद्गलगुणानां मध्ये रूपप्राधान्येन तदाश्रितं वचः रूपसत्य। यथा कश्चित्पुरुष श्वेत इति तत्र केशनीलादिवर्णांतराणां रसादिगुणातराणा च सद्भावेप्यविवक्षितत्वात्। प्रतीत्य- विवक्षितादितरदुद्दिश्य विवक्षितस्यैव स्वरूपकथनं प्रतीत्यसत्यं आपेक्षिकसत्यमित्यर्थः यथा कश्चिद्दीर्घ इति अन्यस्य कस्यचित् ह्रस्वत्वमपेक्ष्य प्रकृतस्य दीर्घत्वाभिधानात् एव स्थूलसूक्ष्मादिवचनानि प्रतीत्यसत्यानि ज्ञातव्यानि। व्यवहारं नैगमादिनयप्राधान्यमा-

श्रित्य प्रवृत्तं यद्वचः तद् व्यवहारसत्यं तत्र नैगमनयप्राधान्येन यथा रध्यते कूरमिति पच्यते ओदन इति । इति शब्दः संग्रहनयादिव्यवहारप्रकारप्रदर्शनार्थः एवंविधनयव्यवहाराश्रितं यद्वचन स्यात्सर्वं सत्, स्यात्सर्वमसदित्यादिवाक्यं तद्व्यवहारसत्यं भवेत् चशब्दः सर्वनयसमुच्चयार्थः । पच्यते ओदन इत्यत्र पाकसमाप्त्यनंतरकालभावी ओदनपर्यायः पाककाले यद्यपि नास्ति तथापि तंडुलानां ओदनपर्यायप्रत्यासत्तिप्ररूपकनैगमनयविवक्षया ओदनपर्यायपरिणामिद्रव्यापेक्षया तद्वाक्यस्य सत्यत्वसिद्धिः ॥ २२३॥

सं० च०—दश प्रकार सत्य कह्या ताका उदाहरण अनुक्रमतैं कहिए है--देशनिविषै व्यवहारी मनुष्यनिविषै प्रवृत्तिरूप वचन सो जनपद सत्य कहिए जैसैं ओदनकौं महाराष्ट्रदेशविषै भातू वा भेटू कहिए। अंध्रदेशविषै वंटक वा मुकूडु कहिए । कर्णाटदेशविषै कूलु कहिए । द्राविडदेश विषैं चोरु कहिए इत्यादिक जानना । बहुरि जो संवृति कहिए कल्पना वा सम्मति कहिए बहुत जीवनिकरि तैसैं ही मानना सर्व देशनिविषैं समान रूढरूप नाम सो संवृति सत्य कहिए वा इसहीकौं सम्मति सत्य कहिए जैसैं किसीविषैं पटरानीपना न पाइए अर वाकौं देवी कहिए । बहुरि जो अन्यविषैं अन्यका स्थापन करि तिस मुख्य वस्तुका नाम कहना सो स्थापना सत्य कहिए जैसैं रत्नादिककरि निर्मापित चंद्रप्रभ तीर्थंकरकी प्रतिमाकौं चंद्रप्रभ कहिए । बहुरि देशादिककी अपेक्षा भातु इत्यादिक नामसत्य है तैसैं अन्य अपेक्षारहित केवल व्यवहार निमित्त जिसका जो नाम होइ सो कहना सो नामसत्य कहिए । जैसैं किसीका नाम जिनदत्त है सो जिनभगवान करि दीया होइ ताकौं जिनदत्त कहिए सो इहां दानक्रियाकी अपेक्षा विना ही जिनदत्त नाम कहिए । बहुरि जो पुद्गलके अनेक गुण होतसंतें रूपकी मुख्यता लीएं वचन कहिए सो रूपसत्य कहिए जैसैं यहु पुरुष सुपेद है ऐसा कहिए तहां वाके केशादिक श्याम वा रसादिक अन्य गुण वाकैं पाइए है परि उनकी मुख्यता न करी । बहुरि जो विवक्षित वस्तुतैं अन्य वस्तुकी अपेक्षाकरि तिस विवक्षित वस्तुकौं हीनाधिक मान वचन कहिए सो प्रतीत्यसत्य कहिए याहीका नाम आपेक्षिक सत्य है । जैसैं यहु दीर्घ है ऐसा कहिए सो तहां किसी छोटेकी अपेक्षा याकौं दीर्घ कह्या बहुरि यातैं दीर्घकी अपेक्षा छोटा है परंतु वाकी विवक्षा न लीन्ही । ऐसैं ही स्थूल सूक्ष्मादिक कहना सो

प्रतीत्य सत्य जानना। बहुरि जो नैगमादि नयकी अपेक्षा प्रधानता लीए वचन कहिए सो व्यवहार सत्य जानना। जैसे नैगम नयकी अपेक्षाकरि ऐसा कहिए कि 'भात पचै है' सो भात तौ पचै पीछै होगा अब तौ चावल ही हैं तथापि थोरे ही कालमें भात होना है तातैं नैगम नयकी विवक्षाकरि भात पर्याय परिणमने योग्य द्रव्य अपेक्षा सत्य कहिए। इति शब्दकरि संग्रहनयादिकका भी व्यवहार विधान जानना। नयनिका व्यवहार की अपेक्षा जैसे सर्व पदार्थ सत्त्व रूप हैं वा असत्त्व रूप हैं इत्यादिक वचन सो व्यवहार सत्य है। नैगमादि नयतैं संग्रह नयादिकका व्यवहार हो है जातैं याकौं व्यवहार सत्य कहिए ॥ २२३ ॥

## सक्को जंबूदीवं पल्लट्टदि पाववज्जवयणं च।
## पल्लोवमं च कमसो जणपदसच्चादिदिट्ठंता ॥ २२४ ॥

शक्रो जंबूद्वीपं परिवर्तयति पापवर्जवचनं च।
पल्योपमं च क्रमशो जनपदसत्यादिदृष्टांताः ॥ २२४ ॥

जी० प्र०——संभावनया असंभवपरिहारपूर्वकं वस्तुधर्मविधिलक्षणया यत्प्रवृत्तं वचनं तत्संभावनासत्यं यथा शक्रो जंबूद्वीपं परावर्तयेत् परिवर्तयितुं शक्नोतीत्यर्थः जंबूद्वीपपरिवर्तनशक्त्यसंभवपरिहारेण तच्छक्तिविधानवचनं तत्क्रियानिरपेक्ष सत्यमिति बीजे अंकुरजननादिशक्तिवचनवत्। असंभवपरिहारेण वस्तुधर्मविधिरूपसंभावनाया नियमेन तत्क्रियापेक्षा न घटते। क्रियाया बाह्यकारणकलापव्यापारप्रभवत्वात्। अतींद्रियार्थेषु प्रवचनोक्तविधिनिषेधसंकल्पपरिणामो भावः। तदाश्रितं वचनं भावसत्यं। यथा शुष्कपक्वध्वस्ताम्ललवणसंमिश्रदग्धादिद्रव्यं प्रासुकं ततस्तत्सेवने पापबंधो नास्तीति पापवर्जनवचनं। अत्र सूक्ष्मप्राणिनामिंद्रियागोचरत्वेऽपि प्रवचनप्रामाण्येन प्रासुकाप्रासुकसंकल्परूपभावाश्रितवचनस्य सत्यत्वात्। समस्तातींद्रियार्थज्ञानिप्रणीतप्रवचनस्य सत्यत्वादेव कारणात्। चशब्दः एवंविधमुक्तभावसत्यसमुच्चयार्थः। प्रसिद्धार्थसादृश्यं उपमासत्यं यथा पल्योपम पल्येन धान्याधारकुशूलेन सह उपमासदृशत्वं रोमखंडाधारतया यस्यास्ति तत्संख्यानं पल्योपममिति असंख्यातासंख्यातरोमखंडाश्रयस्य तत्प्रमाणसमयाश्रयस्य वा संख्यानविशेषस्य यथाकथंचित्पल्यसादृश्यमाश्रित्य प्रवृत्तस्य पल्योपमवचनस्य उपमासत्यत्वसिद्धेः। तथा सागरोपमाद्युपमासत्यविशेषसमुच्चयार्थश्चशब्दः। एवं यथाक्रम भक्तादयो जनपदसत्यादिदृष्टांता उदाहरणान्युक्तानि ॥ २२४ ॥ अथानुभयवचनभेदान् गाथाद्वयेनाह——

नैव स्त्री नैव पुमान् नपुंसक उभयलिंगव्यतिरिक्तः ।

इष्टापाकाग्निसमानकवेदनागुरुकः कलुषचित्तः ॥ २७५ ॥

जी०प्र०—यो जीवो नैव पुमान्–पूर्वोक्तपुरुषलक्षणाभावात् पुरुषो न भवति, नैव स्त्री–उक्तस्त्रीलक्षणाभावात् स्त्री अपि न भवति ततः कारण त् उभयलिंगव्यतिरिक्तः श्मश्रुस्तनादिपुंस्त्रीद्रव्यलिंगरहितः इष्टिकापाकाग्निसमानतीव्रकामवेदनागुरुकः,कलुषचित्तः सर्वदा तद्वेदनया कलंकितहृदयः स जीवो नपुंकमिति परमागमे वर्णितः कथितः, तथापि स्त्रीपुरुषाभिलाषरूपतीव्रकामवेदनालक्षणो भावनपुंसकवेदोऽस्तीति आचार्यस्य तात्पर्यं ज्ञातव्यं ॥ २७५ ॥

म० प्र०—यो जीव. नैव पुमान् उक्तपुंलक्षणाभावात, नैव स्त्रीं उक्तस्त्रीलक्षणाभावात् ततः उभयलिंगव्यतिरिक्त'—स्मश्रुस्तनादिपुंस्त्रीद्रव्यलिंगरहितः, इष्टिकापाकाग्निसमानतीव्रकामवेदनागुरुकः, कलुषचित्तः—सदा तद्वेदनया कलंकितहृदय. स जीवः नपुंसकमिति परमागमे वर्ण्यते तथापि स्त्रीपुरुषाभिलाषरूपतीव्रकामवेदनालक्षणो भावनपुसकवेदोस्तीति आचार्यस्य तात्पर्यं ज्ञातव्यं ॥ २७५ ॥

सं० च०—जो जीव पूर्वोक्त पुरुष वा स्त्रीनिके लक्षणके अभावतैं पुरुष नाहीं वा स्त्री नाहीं तातैं दोऊही वेदनिके डाढी मूंछ वा स्तन योनि इत्यादि चिह्न तिनिकरि रहित है बहुरि इष्टका पाक जो ईंट पचावनेका पंजावा ताकी अग्नि समान तीव्र काम पीडा करि गरवा भऱ्या है । बहुरि स्त्री वा पुरुष दोऊनिका अभिलाषरूप मैथुन संज्ञाकरि मैला है चित्त जाका ऐसा जीव नपुंमक आगम विषैं कह्या है यहु नपुंसक शब्दकी निरुक्तिकरि वर्णन कीया। स्त्री पुरुषका अभिलाषरूप तीव्र कामवेदना लक्षण धरैं भावनपुंसक है ऐसा तात्पर्य जानना ॥ २७५ ॥

तिणकारिसिट्ठपागग्गिसरिसपरिणामवेयणुम्मुक्का ।

अवगयवेदा जीवा सगसंभवणंतवरसोक्खा ॥ २७६ ॥

तृणकारीषेष्टपाकाग्निसदृशपरिणामवेदनोन्मुक्ताः ।

स्त्रीगुणकारेण गुणिते लब्धप्रमाणा देवेषु महिला देव्यो भवंति =$\overset{१\ \text{॥}}{\text{७}}$ । ३२ देवदेवीभेदमकृत्वा सामान्यापेक्षया स्वकगुणकारेणेति सूत्रकारेणोक्तं तदेव
४ । ६५ = ७ । ३३

मया भेदेनोक्तं ॥ २७८ ॥

स० चं०—देवगतिविषैं एक पुरुषके बत्तीस देवांगना होंइ। कोई ही देवकैं बत्तीससौं घाटि देवांगना नाहीं अर इंद्रादिकनिके देवांगना तिनतैं संख्यातगुणी बहुत हैं तथापि जिनके बहुत देवांगना हैं ऐसे देव तौ थोरे हैं अर बत्तीस देवांगना जिनके हैं ऐसैं प्रकीर्णकादिक देव घने तिनतैं असंख्यात गुणे हैं। तातैं एक एक देवकैं बत्तीस बत्तीस देवांगनाकी विवक्षाकरि अधिककी न करि कही। सो बत्तीस देवांगना अर एक देव मिलाएं तैंतीस भए सो पूर्वै जो देवनिका परिमाण कह्या था ताकौं तेतीसका भाग दीएं जो एक भागका परिमाण आवै ताकौं एक करि गुणैं तितना ही रह्या सो इतने तौ देवगतिविषैं पुरुष जानने अर याकौं बत्तीस गुणां कीएं जो परिमाण होइ तितनी देवांगना जाननी। भावार्थ—देवराशिका तेतीस भागमें एकभाग प्रमाण देव है बत्तीस भाग प्रमाण देवांगना हैं॥ २७८ ॥

**देवेहिं सादिरेया पुरिसा देवीहिं साहिया इत्थी।**
**तेहिं विहीण सवेदो रासी संढाण परिमाणं ॥ २७९ ॥**

देवैः सातिरेकाः पुरुषाः देवीभिः साधिकाः स्त्रियः।
तैर्विहीनः सवेदो राशिः षंढानां परिमाणं ॥ २७९ ॥

जी० प्र०—तिर्यग्मनुष्यपुरुषराशिभ्यां अधिको देवपुरुषराशिः स सामान्यपुरुषराशिर्भवति = $\frac{\text{७}\,\text{॥}\ ।\ १\,\text{॥}\ ।}{४\ ।\ ६५ = \text{७}\ ।\ ३३\ ।}$ मनुष्यतिर्यक्-

स्त्रीराशिभ्यामधिको देवीराशिः स सामान्यस्त्रीराशिर्भवति = ७ । ३२ / ४ । ६५ = ७ । ३३ । एतत्पुरुषस्त्रीराशिद्वयविहीनसवेदराशिनपुंसकवेदराशिर्भवति १३ ≡ सवेदराशिस्तु अवेदानिवृत्तिकरणाद्ययोगकेवल्यंतानां संख्यया हीनसंसारराशिः १३–॥ २७०॥

मं० प्र०—देवेभ्यः पुरुषदेवराशेः सातिरेकाः–तिर्यग्मनुष्यपुरुषराशिना साधिकाः सामान्यतः पुरुषाः पुंवेदिप्रमाण भवति = ७ । १ / ४ । ६५=७ । ३३ । देवीभ्यः प्रागानीतदेवीराशेः सातिरेकाः–तिर्यग्मनुष्यपुरुषराशिना साधिकाः सामान्यतः स्त्रियः स्त्रीवेदिप्रमाण भवंतीत्यर्थः = ७ । ३२ / ४ । ६५=७ । ३३ ताभ्यां–सामान्यपुवेदिस्त्रीवेदिराशिभ्यां विहीनः सवेदराशिः षढानां–नपुंसकादिनां परिमाणं भवंति । १३ ≡ । अपगतवेदानिवृत्तिकरणसूक्ष्मसांपरायोपशांतकषायक्षीणकषायसयोगायोगकेवलिसंख्यारहितः ससारिजीवराशिः ।१३ –। सवेदराशिरित्यर्थः ॥ २७९ ॥

स० चं०—पुरुषवेदी देवनिका जो परिमाण कह्या तींहिविषैं पुरुषवेदी तिर्यंच मनुष्यनिका परिमाण मिलाएं सर्व पुरुषवेदी जीवनिका परिमाण हो है। बहुरि देवांगनाका जो परिमाण कह्या तींहिविषैं तिर्यंचणी वा मनुष्यणीका परिमाण मिलाएं सर्वस्त्रीवेदी जीवनिका परिमाण हो है। बहुरि नवमा गुणस्थानका वेदरहित भागतैं लगाइ अयोगकेवली पर्यंत जीवनिका संख्यारहित सर्वसंसारी जीवनिका परिमाणमें पुरुषवेदी अर स्त्रीवेदी जीवनिका परिमाण घटाएं जो अवशेष प्रमाण रहै तितने नपुंसकवेदी जीव जानने ॥ २७९ ॥

**गब्भणपुइत्थिसण्णी सम्मुच्छणसण्णिपुण्णगा इदरा ।**
**कुरुजा असण्णिगब्भजणपुइत्थीवाणजोइसिया ॥ २८० ॥**

**थोवा तिसु संखगुणा तत्तो आवलिअसंखभागगुणा ।**
**पल्लासंखेज्जगुणा तत्तो सव्वत्थ संखगुणा ॥ २८१ ॥**

गर्भनपुंस्त्रीसंज्ञिनः सम्मूर्छनसंज्ञिपूर्णका इतरे ।
कुरुजा असंज्ञिगर्भजनपुंस्त्रीवानज्योतिष्काः ॥ २८० ॥
स्तोकाः त्रिषु संख्यगुणाः तत आवल्यसंख्यभागगुणाः ।
पल्यासंख्येयगुणाः ततः सर्वत्र संख्यगुणाः ॥ २८१ ॥

जी० प्र०–संज्ञिपंचेंद्रियगर्भजनपुंसकवेदिनः, संज्ञिपंचेंद्रियगर्भजपुंवेदिनः, संज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः, सम्मूर्छिमसंज्ञिपंचेंद्रियपर्याप्ताः, संमूर्छिमसंज्ञिपंचेंद्रियापर्याप्ताः, अस्मिन् स्थानद्वये नपुंसकवेदिन एव कुरुजा भोगभूमिजाः ते च गर्भजसंज्ञिपंचेंद्रियपर्याप्ताः स्त्रीपुंवेदिन एव असंज्ञिपंचेंद्रियगर्भजनपुंसकवेदिनः, असंज्ञिपंचेंद्रियगर्भजपुंवेदिनः असंज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः व्यंतरदेवाः ज्योतिष्काश्च इत्येकादश जीवराशयः उक्तक्रमेण उपर्युपरि रचयितव्याः। तत्र सर्वाधस्तनराशिः सर्वतः स्तोकः अष्टवारसंख्यातरूपैः आवल्यसंख्येयभागेन पल्यासंख्येयभागेन पणट्ठिगुणितप्रतरांगुलैश्च जगत्प्रतरे भक्ते यल्लब्धं तत्प्रमाणं भवति। ४ । ६५ = १११११ प ८ ११११ (a a) । ततः उपरि त्रिषु स्थानेषु द्वितीय– ४ । ६५ = ११११११ प ८ १११ (a a)

तृतीय—४ । ६५ = १ १ १ १ १ प ८ १ (a a) चतुर्थ—४ । ६५ १ १ १ १ १ प ८ (a a) राशयः संख्यातगुणितक्रमा भवंति। तत उपरि

स्थितः पंचमराशिः आवल्यसंख्येयभागगुणितः ४ । ६५ = १ १ १ १ १ प (a) अत उपरि स्थितः षष्ठराशिः पल्यासंख्येयभागगुणितः—

४ । ६५ = ११११ अतः उपरि स्थानेषु सर्वेषु सप्तम—४ । ६५ = १११ अष्टम ४ । ६५ = ११ नवम ४।६५ = ११

दशम ४ । ६५ = १ एकादश ४ । ६५ = राशयः पंचापि संख्यातगुणितक्रमा भवंति ॥ २८०–२८१ ॥

इति श्रीनेमिचंद्रविरचितायां गोम्मटसारापरनाम पंचसंग्रहवृत्तौ जीवतत्त्वप्रदीपिकाख्यायां जीवकांडे विंशतिप्ररूपणासु वेदमार्गणाप्ररूपणो नाम दशमोऽधिकारः॥ १०॥

---

मं० प्र०—संज्ञिपंचेंद्रियगर्भजनपुंसकवेदिनः, संज्ञिपंचेंद्रियगर्भजपुंवेदिनः, संज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः, संमूर्छिमसंज्ञिपंचेंद्रियपर्याप्ताः, संमूर्छिमसंज्ञिपंचेंद्रियापर्याप्ताः, अस्मिन् स्थ नद्वये नपुंसकवेदिन एव, कुरुजा भोगभूमिजाः ते च गर्भजसंज्ञिपंचेंद्रियपर्याप्ताः स्त्रीपुंसवेदिन एव, असंज्ञिपंचेंद्रियगर्भजनपुंसकवेदिन, असंज्ञिपंचेंद्रियगर्भजपुंवेदिनः, असंज्ञिपंचेंद्रियगर्भजस्त्रीवेदिनः, वानाः व्यंतरदेवाः, ज्योतिषिका इत्येते एकादशजीवराशयः उक्तक्रमेण उपर्युपरि रचयितव्याः ॥ २८० ॥

मं० प्र०—तेषु सर्वाधस्तनप्रथमराशिः सर्वतः स्तोकः अष्टवारसंख्यातरूपैः आवल्यसंख्येयभागेन पल्यासंख्येयभागेन पणट्ठिना प्रतरांगुलेन च जगत्प्रतरे भक्ते सति यल्लब्धं तत्प्रमाणो भवति । तत उपरि त्रिषु स्थानेषु द्वितीयतृतीयचतुर्थराशयः संख्येयगुणाः। तत उपरिस्थित पंचमराशिः आवल्यसंख्येयभागगुणः। तत उपरिस्थितः षष्ठराशिः पल्यासंख्येयभागगुणः । तत उपरिस्थानेषु सर्वेषु सप्तमाष्टमनवमदशमैकादशराशयः पंचापि संख्येयगुणाः ॥ २८१ ॥

इति श्रीमदभयचंद्रसूरिसिद्धांतचक्रवर्तिकृतौ गोम्मटसारपंचसंग्रहवृत्तौ वेदमार्गणाप्ररूपणनामा दशमोऽधिकार ॥ १० ॥

---

स० चं०—सैनी पंचेंद्री गर्भज नपुंसकवेदी १ बहुरि सैनी पंचेंद्री गर्भज पुरुषवेदी २ बहुरि सैनी पंचेंद्री गर्भज स्त्रीवेदी ३ बहुरि सम्मूर्छन सैनी पंचेंद्रिय पर्याप्त नपुंसकवेदी ४ बहुरि सम्मूर्छन सैनी पंचेंद्री अपर्याप्त नपुंसकवेदी ५ बहुरि भोगभूमियां गर्भज सैनी पंचेंद्री पर्याप्त पुरुषवेदी वा स्त्रीवेदी ६ बहुरि असैनी पंचेंद्री गर्भज नपुंसकवेदी ७ बहुरि असैनी पंचेंद्री गर्भज पुरुषवेदी ८ बहुरि असैनी पंचेंद्री गर्भज स्त्रीवेदी ९ बहुरि व्यंतरदेव १० अर ज्योतिषदेव ११ ए ग्यारा जीवराशि अनुक्रमतें ऊपरि ऊपरि लिखनी ॥ २८०॥

सो खेतविषैं बोया हूवा बीज जैसैं बहुत फलकौं प्राप्त होइ वा बहुत सींव पर्यंत होइ तैसैं हलादिकतैं धरतीका फाडना इत्यादिक कृषिकर्मकौं करै हैं तैसैं संसारी जीवका किंकर क्रोधादि कषाय नामा पालती सो प्रकृति प्रदेश स्थिति अनुभाग रूप कर्मका बंध सोही भया खेत तींहिं विषै मिथ्यात्वादिक परिणाम रूप बीज जैसैं कालादिककी सामग्री पाइ अनेक प्रकार सुख दुःख रूप बहुत फलकौं प्राप्त होइ वा अनंत समय पर्यंत फलकौं प्राप्त होइ तैसैं कार्यकौ करैं तातैं इन क्रोधादिकनिका कषाय ऐसा नाम कह्या 'कृषि विलेखने' इस धातुका अर्थकरि कषाय शब्दका निरुक्तिपूर्वक निरूपण आचार्यकरि कीया है ॥ २८२ ॥

**सम्मत्तदेससयलचरित्तजहक्खादचरणपरिणामे ।**
**घादंति वा कषाया चउसोलअसंखलोगमिदा ॥ २८३ ॥**

सम्यक्त्वदेशसकलचरित्रयथाख्यातचरणपारिणामान् ।
घातयंति वा कषायाः चतुःषोडशासंख्यलोकमिताः ॥ २८३ ॥

जी० प्र०---वा अथवा सम्यक्त्वं तत्त्वार्थश्रद्धानं, देशचारित्रं-अणुव्रतं, सकलचारित्रं-महाव्रतं, यथाख्यातचरणं-यथाख्यातचारित्रं एवंविधान् आत्मविशुद्धिपरिणामान् कषंति हिंसंति घ्नंतीति कषाया इति निर्वचनीयं। तद्यथा-अनंतानुबंधिक्रोधमानमायालोभकषाया आत्मनः सम्यक्त्वपरिणामं कषंति अनंतसंसारकारणत्वात्, अनंतं-मिथ्यात्वं, अनंतभवसंस्कारकालं वा अनुबध्नंति संघटयंतीत्यनंतानुबंधिन इति निरुक्तिसामर्थ्यात् । अप्रत्याख्यानावरणाः अणुव्रतपरिणामं कषंते । अप्रत्याख्यानं ईषत् प्रत्याख्यानं अणुव्रतं आवृण्वंति घ्नंतीति निरुक्तिसिद्धत्वात् । प्रत्याख्यानावरणाः सकलचारित्रं महाव्रतपरिणामं कषंति प्रत्याख्यानं-सकलसंयमं आवृण्वंति घ्नंतीति निरुक्तिसिद्धत्वात् । संज्वलनास्ते यथाख्यातचारित्रपरिणामं कषंति, सं समीचीनं, विशुद्धं संयमं यथाख्यातचारित्रनामधेयं ज्वलंति दहंति इति संज्वलनाः इति निरुक्तिबलेन तदुदये सत्यपि सामायिकादीतरसंयमाविरोधः सिद्धः। एवंविधः कषायः सामान्येन एकः, विशेषविवक्षायां तु अनंतानुबंध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनभेदाश्चत्वारः । पुनस्ते चत्वारोऽपि प्रत्येकं क्रोधमानमायालोभा इति षोडश १६ । तद्यथा—अनंतानुबंधिक्रोधमानमायालोभाः अप्रत्याख्यानावरणक्रोधमानमायालोभाः प्रत्याख्यानावरणक्रोधमानमायालोभाः संज्वलनक्रोधमानमायालोभाः इति पुनः सर्वेपि उदयस्थानविशेषापेक्षया असंख्यातलोकप्रमिता भवंति । कुतः ? तत्कारणचारित्रमोहनीयोत्तरोत्तरप्रकृतिविकल्पानां असंख्यातलोकमात्रत्वात् ≡ ə ॥ २८३ ॥

स० चं०—पूर्वे जो ग्यारा राशि कहे तिनिविषै नीचला राशि सैनी पंचेंद्री गर्भज नपुंसकवेदी सो सर्वतैं स्तोक है। आठवार संख्यात अर आवलीका असंख्यातवां भाग अर पल्यका असंख्यातवां भाग अर पैंसठि हजार पांचसै छत्तीस प्रतरांगुल इनिका भाग जगत्प्रतरकौं दीएं जो परिमाण आवै तितने जानने। वहुरि याके ऊपरि सैनी पंचेंद्री गर्भज पुरुष वेदीस्यों लगाइ तीन राशि अनुक्रमतें संख्यातगुणा जानना। वहुरि चौथी राशितैं पंचम राशि संमूर्छन सैनी पंचेंद्री अपर्याप्त नपुंसकवेदी आवलीका असंख्यातवां भागगुणा जानना। वहुरि इस पंचम राशितैं षष्ठराशि पल्यका असंख्यातवां भागगुणा जानना। वहुरि यातें असैनी पंचेंद्री गर्भज नपुंसक वेदीस्यों लगाइ ज्योतिषी पर्यंत सप्तम अष्टम नवम दशम एकादशम राशि अनुक्रमतैं संख्यातगुणा जानना। ऐसैं वेदमार्गणाविषैं जीवनिकी संख्या कही ॥ २८१ ॥

इति आचार्य श्रीनेमिचंद्रसिद्धांतचक्रवर्तिविरचित गोम्मटसार द्वितीयनाम पंचसंग्रह ग्रंथकी जीवतत्त्वप्रदीपिका नाम संस्कृत टीकाके अनुसारि सम्यग्ज्ञानचंद्रिका नामा भाषाटीकाकेविषैं जीवकांडविषैं प्ररूपित जे वीसप्ररूपणा तिनिविषैं वेदमार्गणा प्ररूपणा नामा दशमां अधिकार समाप्त भया ॥ १० ॥

मं.प्र.-वा--अथवा, सम्यक्त्वं--तत्त्वार्थश्रद्धानं, देशचारित्रं--अणुव्रतं, सकलचारित्रं-महाव्रतं, यथाख्यातचरणं यथाख्यातचारित्रं, एवं रूपान् आत्मनो विशुद्धपरिणामान्, कषंति हिंसति घ्नंति इति कषाया इति निरुक्तेः। तद्यथा-अनंतानुबंधिनः क्रोधमानमायालोभाः कषाया आत्मनः सम्यक्त्वपरिणामं कषंति। अनंतसंसारकारणत्वादनंतं मिथ्यात्वं अनंतभवसंस्कारकालं वा अनुबध्नंति संघटयंति इत्यनंतानुबंधिनः इति निरुक्तिसामर्थ्यात्। अप्रत्याख्यानावरणास्ते अणुव्रतपरिणामं कषंति, अप्रत्याख्यानं ईषत्प्रत्याख्यानमणुव्रतमावृण्वंति घ्नंतीति निरुक्तिसिद्धत्वात्। प्रत्याख्यानावरणास्ते सकलचारित्रं-महाव्रतपरिणामं कषंति, प्रत्याख्यानं सकलसंयममावृण्वंति घ्नंतीति प्रत्याख्यानावरणाः इति निरुक्तिवशात्। संज्वलनास्ते यथाख्यातचारित्रपरिणामं कषंति, सं--समीचीन, विशुद्धं संयमं यथाख्यातचारित्रनामधेयं ज्वलंति दहति इति संज्वलनाः इति निरुक्तिबलात् उदये5पि सामायिकादीतरसंयमाविरोधः सिद्धः, एवंविधः कषायः सामान्यादेकः, विशेषविवक्षायां चत्वारः-अनंतानुबंध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनभेदात्, पुनस्ते षोडश भवंति एतेषां चतुर्णां प्रत्येकं क्रोधमानमायालोभभेदात्। तद्यथा-अनंतानुबंधिनः क्रोधमानमायालोभाः, अप्रत्याख्यानावरणाः क्रोधमानमायालोभाः, प्रत्याख्यानावरणाः क्रोधमानमायालोभाः, संज्वलनाः क्रोधमानमायालोभाः। इति पुनस्ते सर्वेप्युदयस्थानविशेषापेक्षया असंख्यातलोकप्रमिता भवंति। तत्कारणचारित्रमोहनीयोत्तरोत्तरप्रकृतिविकल्पानामसंख्यातलोकमात्रत्वात् ॥ २८३ ॥

स० चं०--अथवा 'कषंतीति कषायाः' जे हैं घात करैं तिनिकौं कषाय कहिए। सो ए क्रोधादिक हैं ते सम्यक्त्व वा देश चारित्र वा सकल चारित्र वा यथाख्यात चारित्र रूप आत्माके विशुद्ध परिणामनिकौं घातैं हैं तातैं इनिका कषाय ऐसा नाम है। यहु कषाय शब्दका दूसरा अर्थ अपेक्षा लक्षण कह्या तहां अनंतानुबंधी क्रोधादिक हैं ते तत्त्वार्थ श्रद्धानरूप सम्यक्त्वकौं घातैं हैं जातैं अनंत कहिए अनंत संसारका कारण मिथ्यात्व वा अनंत संसार अवस्थारूप काल ताहि अनुबध्नंति कहिए संबंधरूप करैं तिनिकौं अनंतानुबंधी कहिए। बहुरि अप्रत्याख्यानावरण क्रोधादिक कहे ते अणुव्रतरूप देश चारित्रकौं घातैं हैं जातैं अप्रत्याख्यान कहिए ईषत् प्रत्याख्यान किंचित् त्यागरूप अणुव्रत ताकौं आवृण्वंति कहिए आवरैं नष्ट करैं ताकौं अप्रत्याख्यानावरण कहिए। बहुरि प्रत्याख्यानावरण क्रोधादिक हैं ते महाव्रतरूप सकल चारित्रकौं घातैं हैं जातैं प्रत्याख्यान कहिए सकल त्यागरूप महाव्रत ताकौं आवृण्वंति कहिए आवरैं नष्ट करैं ताकौं प्रत्याख्यानावरण कहिए। बहुरि संज्वलन क्रोधादिक हैं ते सकल कषायका अभावरूप यथाख्यात चारित्रकौं घातैं हैं जातैं 'सं' कहिए समीचीन निर्मल यथाख्यात चारित्र ताकौं 'ज्वलंति' कहिए दहन करैं

तिनकौं संज्वलन कहिए इस निरुक्तितैं संज्वलनका उदय होते संतेभी सामायिकादि अन्य चारित्र होनेका अविरोध सिद्ध हो है। ऐसा यह कषाय सामान्यपनैं एक प्रकार है विशेषपनैं अनंतानुबंधी १ अप्रत्याख्यानावरण२ प्रत्याख्यानावरण ३ संज्वलन ४ भेदतैं च्यारि प्रकार है बहुरि इनके एक एकके क्रोध मान माया लोभकरि च्यारि च्यारि भेद कीजिए तब सोलह प्रकार हो हैं। अनंतानुबंधी क्रोध १ मान २ माया ३ लोभ ४। अप्रत्याख्यानावरण क्रोध १ मान २ माया ३ लोभ ४। प्रत्याख्यानावरण क्रोध १ मान २ माया ३ लोभ ४। संज्वलन क्रोध १ मान २ माया ३ लोभ ४। ऐसैं सोलह भेद भए। बहुरि उदय स्थानकोंके विशेषकी अपेक्षा असंख्यात लोक प्रमाण है जातैं कषायनिका कारणभूत जो चारित्रमोह ताकी प्रकृतिके भेद असंख्यात लोक प्रमाण हैं ॥ २८३ ॥

**सिलपुढविभेदधूलीजलराइसमाणओ हवे कोहो।**
**णारयतिरियणरामरगईसु उप्पायओ कमसो ॥ २८४ ॥**

शिलापृथ्वीभेदधूलिजलराशिसमानको भवेत् क्रोधः।
नारकतिर्यग्नरामरगतिषूत्पादकः क्रमशः ॥ २८४ ॥

जी० प्र —शिलाभेदपृथ्वीभेदधूलीरेखाजलरेखासमानः उत्कृष्टानुत्कृष्टाजघन्यजघन्यशक्तिविशिष्टक्रोधकषायः भवेत् स नारकतिर्यग्नरामरगतिषु क्रमशः यथाक्रमं उत्पादयति जीवं। तद्यथा—शिलाभेदसमानोत्कृष्टशक्तिविशिष्टक्रोधकषायः जीवं नरकगतावुत्पादयति। पृथ्वीभेदसमानानुत्कृष्टशक्तिविशिष्टः क्रोधः तिर्यग्गतौ जीवमुत्पादयति। धूलीरेखासमानाजघन्यशक्तियुक्तः क्रोधः जीवं मनुष्यगतावुत्पादयति। जलरेखासमानजघन्यशक्तियुक्तः क्रोधः जीवं देवगतावुत्पादयति। तत्तच्छक्तियुक्तक्रोधकषायपरिणतो जीवः तत्तद्गत्युत्पत्तिकारणतत्तदायुर्गत्यानुपूर्व्यादिप्रकृतीर्बध्नातीत्यर्थः। अत्र राजिशब्दो रेखार्थवाची न तु पंक्तिवाची। यथा शिलादिभेदानां चिरतरचिरशीघ्रशीघ्रतरकालैर्विना अनुसंधानं न घटते तथोत्कृष्टादिशक्तियुक्तक्रोधपरिणतो जीवोऽपि तथाविधकालैर्विना क्षमालक्षणसंधानार्हो न स्यात् इत्युपमानोपमेययोः सादृश्यं संभवतीति तात्पर्यार्थः ॥ २८४ ॥

मं० प्र०---शिलाभेदपृथ्वीभेदधूलीरेखाजलरेखासमानः उत्कृष्टानुत्कृष्टाजघन्यजघन्यशक्तिविशिष्टः क्रोधकषायो भवेत् स नारकतिर्यग्नरामरगतिषु क्रमशः यथाक्रमं जीवस्योत्पादको भवति । तद्यथा–शिलाभेदसमानोत्कृष्टशक्तिविशिष्टः क्रोधः-कोपः जीवं नारकगतौ व्युत्पादयति । पृथ्वीभेदसमानानुत्कृष्टशक्तिविशिष्टः क्रोधस्तिर्यग्गतौ जीवमुत्पादयति । धूलिरेखासमानाजघन्यशक्तिविशिष्टः क्रोधः मनुष्यगतौ जीवमुत्पादयति, जलरेखासमानजघन्यशक्तिविशिष्टः क्रोधः देवगतौ जीवमुत्पादयति । अत्र राजिशब्दो रेखावाची न तु पंक्तिवाची । तत्तच्छक्तियुक्तक्रोधकषायपरिणतो जीवः तत्तद्गत्युत्पत्तिकारणतत्तदायुर्गत्यानुपूर्वीनामादिप्रकृतीर्बध्नाति इत्यर्थः । यथा शिलादिभेदाना चिरतरचिरशीघ्रशीघ्रतरकालैर्विना संधानं न घटते तथा उत्कृष्टादिशक्तियुक्तक्रोधपरिणतो जीवोऽपि तथाविधकालैर्विना क्षमालक्षणसंधानार्हो न भवतीत्युपमानोपमेययोः सादृश्यं संभवतीति तात्पर्यार्थः ॥ २८४ ॥

स०चं०--शिलाभेद १ पृथ्वीभेद २ धूलिरेखा ३ जलरेखा ४ समान क्रोध कषाय सो अनुक्रमतैं नारक तिर्यंच मनुष्य देवगतिविषैं जीवकौं उपजावन हारा है। सोई कहिए हैं-जैसैं शिला जो पाषाणका भेद खंड होना सो बहुत घने काल गए बिना मिलै नाहीं तैसैं बहुत घने काल गए बिना क्षमारूप मिलनकौं न प्राप्त होइ ऐसा जो उत्कृष्ट शक्ति लीएं क्रोध सो जीवकौं नरकगति विषैं उपजावै है। बहुरि जैसैं पृथ्वीका भेद खंड होना सो घने काल गएं बिना मिलै नाहीं तैसैं घने काल गए बिना जो क्षमारूप मिलनेकौं न प्राप्त होइ ऐसा जो अनुत्कृष्ट शक्ति लीएं क्रोध सो जीवकौं तिर्यंचगतिविषैं उपजावै है । बहुरि जैसैं धूलिविषैं करी लीक सो थोरा काल गएं बिना मिलै नाहीं तैसैं थोरा काल गएं बिना जो क्षमारूप मिलनकौं प्राप्त न होइ ऐसा अजघन्य शक्ति लीएं क्रोध सो जीवकौं मनुष्यगतिविषैं उपजावै है। बहुरि जैसैं जलविषैं करीहुई लीक बहुत थोरा काल गएं विना मिलै नाहीं तैसैं बहुत थोरा काल गएं विना जो क्षमारूप मिलनको प्राप्त न होइ ऐसा जो जघन्यशक्ति लीएं क्रोध सो जीवकौं देवगतिविषैं उपजावै है। तिस तिस उत्कृष्टादि शक्तियुक्त क्रोधरूप परिणम्या जीव सो तिस तिस नरक आदि गतिविषैं उपजनेकौं कारण आयुगति आनुपूर्वी आदि प्रकृतिनिकौं बांधै है ऐसा अर्थ जानना । इहां राजि शब्द रेखावाचक जानना, पंक्तिवाचक न जानना। बहुरि इहां शिलाभेद आदि उपमान अर उत्कृष्टशक्तियुक्त आदि क्रोधादिक उपमेय ताका समानपना अतिघना कालादि गएं विना मिलना न होनेकी अपेक्षा जानना ॥२८४॥

## सेलट्ठिकट्ठवेत्ते णियभेएणणुहरंतओ माणो ।
## णारयतिरियणरामरगईसु उप्पायओ कमसो ॥ २८५ ॥

शैलास्थिकाष्ठवेत्रान् निजभेदेनानुहरन् मानः ।
नारकतिर्यग्नरामरगतिषूत्पादकः क्रमशः ॥ २८५ ॥

जी० प्र०—शैलास्थिकाष्ठवेत्रान् निजोत्कृष्टादिशक्तिभेदैः नुहरन् उपमीयमानो मानकषायः क्रमशः—क्रमेण नारकतिर्यग्नरामरगतिषु जीवमुत्पादयति । तद्यथा— शिलास्तंभसमानोत्कृष्टशक्तियुक्तमानकषायः जीवं नारकगतावुत्पादयति । अस्थिसमानानुत्कृष्टशक्तियुक्तमानकषायः जीवं तिर्यग्गतावुत्पादयति । काष्ठसमानाजघन्यशक्तियुक्तमानकषायः मनुष्यगतौ जीवमुत्पादयति । वेत्रसमानजघन्यशक्तियुक्तमानकषायः जीवं देवगतावुत्पादयति । यथा हि चिरतरादिकालैर्विना शैलास्थिकाष्ठवेत्राः नामयितुं न शक्यंते तथोत्कृष्टादिशक्तियुक्तमानपरिणतो जीवोऽपि तथाविधकालैर्विना मानं परिहृत्य विनयरूपनमनं कर्तुं न शक्नोतीति सादृश्यसंभवोऽत्र ज्ञातव्यः । तत्तच्छक्तियुक्तमानकषायपरिणतो जीवः तत्तद्गत्युत्पत्तिहेतुतत्तदायुर्गत्यानुपूर्वीनामादिकर्म बध्नातीति तात्पर्यं ॥ २८५ ॥

मं० प्र०—शैलास्थिकाष्ठवेत्रान्निजोत्कृष्टादिशक्तिभेदेन अनुहरन्नुपमीयमानो मानः—अभिमानः कषायः क्रमशः नारकतिर्यग्नरामरगतिषु जीवस्योत्पादको भवेत् । तथाहि शैलसमानोत्कृष्टशक्तियुक्तो मानो नरकगतौ जीवमुत्पादयति । अस्थिसमानानुत्कृष्टशक्तियुक्तो मानस्तिर्यग्गतौ जीवमुत्पादयति । काष्ठसमानाजघन्यशक्तियुक्तो मानो मनुष्यगतौ जीवमुत्पादयति । वेत्रसमानजघन्यशक्तियुक्तो मानो देवगतौ जीवमुत्पादयति । यथा चिरतरादिकालैर्विना शैलास्थिकाष्ठवेत्रा नामयितुं न शक्यंते तथा उत्कृष्टादिशक्तियुक्तमानपरिणतो जीवोऽपि तथाविधकालैर्विना मानमपाकृत्य विनयरूपनाम प्रापयितुं न शक्यते इति सादृश्यसंभवः । तत्तच्छक्तियुक्तमानपरिणतो जीवस्तत्तद्गत्युत्पत्तिहेतुतत्तदायुर्गत्यानुपूर्वीनामादिकर्मबंधको भवतीति तात्पर्यार्थः ॥ २८५ ॥

स० चं०—शैल १ अस्थि २ काष्ठ ३ वेंत ४ समान जो अपने भेदनिकरि उपमीयमान च्यारि प्रकार मान कषाय सो क्रमतैं नारक तिर्यंच मनुष्य देवगतिविषैं जीवकौं उपजावै है । सो कहिए है—जैसैं शैल जो पाषाण सो बहुत घने काल विना नमावने योग्य न होइ तैसैं बहुत घनेकाल विना जो विनयरूप नमनकौं प्राप्त न होइ ऐसा जो उत्कृष्टशक्तिलीएं मान सो जीवनिकौं नरक गतिविषैं उपजावै है । बहुरि जैसैं अस्थि जो हाड सो घने काल

विना नमावने योग्य न होइ तैसैं घने काल विना जो विनयरूप नमनकौं प्राप्त न होइ ऐसा जो अनुत्कृष्टशक्ति
लीएं मान सो जीवकौं तिर्यंच गतिविषैं उपजावै है। बहुरि जैसैं काठ थोरा कालविषैं नमावने योग्य न होइ तैसैं
थोरा काल विना जो विनयरूप नमनकौं प्राप्त न होइ ऐसा जो अजघन्यशक्ति लीएं मान सो जीवकौं मनुष्यग-
तिविषैं उपजावै है। बहुरि जैसें वैंतकी लकडी बहुत थोरे काल विना नमावने योग्य न होइ तैसैं बहुत थोरा
काल विना जो विनयरूप नमनका प्राप्त न होइ ऐसा जो जघन्यशक्ति लीएं मान सो जीवकौं देवगतिविषैं उप-
जावै है। इहां भी पूर्वोक्त प्रकार प्रकृतिबंध होना वा उपमा उपमेयका समानपना जानना ॥ २८५ ॥

## वेणूवमूलोरब्भयसिंगे गोमुत्तए य खोरप्पे ।
## सरिसी माया णारयतिरियणरामरगईसु खिवदि जियं॥२८६॥

वेणूपमूलोरभ्रकशृंगेण गोमूत्रेण च क्षुरप्रेण ।
सदृशी माया नारकतिर्यग्नरामरगतिषु क्षिपति जीवं ॥ २८६ ॥

जी० प्र०—वेणूपमूलोरभ्रकशृंगगोमूत्रक्षुरप्रसदृशोत्कृष्टादिशक्तियुक्ता माया—वंचना यथाक्रमं नारकतिर्यग्नरामरगतिषु जीवं निक्षिपति। त-
था—वेणू मूलं वेणुमूलग्रंथिः तेन समानोत्कृष्टशक्तियुक्तमायाकषायः जीवं नरकगतौ निक्षिपति। उरभ्रकः—मेष, तच्छृंगसदृशानुत्कृष्ट-
शक्तियुक्तमायाकषायः जीवं तिर्यग्गतौ निक्षिपति। गोमूत्रसमानजघन्यशक्तियुक्तमायाकषायः जीवं मनुष्यगतौ निक्षिपति। यथा वेणू मूला-
दयः चिरतरादिकालं विना स्वस्ववक्रतां परिहृत्य ऋजुत्वं न प्राप्नुवंति तथा जीवोऽपि उत्कृष्टादिशक्तियुक्तमायाकषायपरिणतः तथाविधकाले-
विना स्वस्ववक्रतां परिहृत्य ऋजुपरिणामो न स्यात् इति सादृश्यं युक्तं। "तत्तदुत्कृष्टादिशक्तियुक्तमायाकषायपरिणतजीवः तत्तद्गतिक्षेपकारणं
तत्तदायुर्गत्यानुपूर्व्यादिकर्म बध्नाति।" इति तात्पर्यार्थः ॥ २८६ ॥

मं० प्र०—वेणूपमूलोरभ्रकशृंगगोमूत्रक्षुरप्रसदृशोत्कृष्टादिशक्तियुक्ता माया-वंचना, यथाक्रमं नारकतिर्यग्नरामरगतिषु जीवं क्षिपति। तद्यथा-वेणूपमूलं
वेणुमूलग्रंथिः, तेन सदृशोत्कृष्टशक्तियुक्ता माया नारकगतौ जीवं क्षिपति पातयति। उरभ्रकः—मेषः तच्छृंगसदृशानुत्कृष्टशक्तियुक्ता माया तिर्यग्गतौ जीवं
क्षिपति। गोमूत्रसदृशाऽजघन्यशक्तियुक्ता माया मनुष्यगतौ जीवं क्षिपति। क्षुरप्रसमानजघन्यशक्तियुक्ता माया देवगतौ जीवं क्षिपति। यथा वेणूपमूला-

दयश्चिरतरादिकालैर्विना स्वस्ववक्रतां त्यक्त्वा ऋजुत्वं न गच्छंति तथा उत्कृष्टादिशक्तियुक्तमायापरिणतो जीवोऽपि तथाविधकालैर्विना मायां त्यक्त्वा ऋजुपरिणामो न भवति इति सादृश्यं युक्तं । तत्तदुत्कृष्टादिशक्तियुक्तमायापरिणतो जीवः तत्तद्गतिक्षेपकारणात्तत्तदायुर्गत्यानुपूर्व्यानामादिकर्मबंधको भवतीति तात्पर्यार्थः ॥ २८६ ॥

स० चं०—वेणूपमूल १ उरभ्रकशृंग २ गोमूत्र ३ क्षुर समान माया ठिगनेरूप परिणति सो क्रमतैं नारक तिर्यंच मनुष्य देवगतिविषैं जीवकौं उपजावै है। सोई कहिए है-जैसैं वेणूपमूल जो वांसकी लकडीकी जड सो बहुत घने काल विना सरल न होइ तैसैं बहुत घने काल विना जो सरल न होइ ऐसा जो उत्कृष्ट शक्तिकौं लीएं माया सो जीवकौं नरकगतिविषैं उपजावै है। बहुरि जैसैं उरभ्रकशृंग जो मींढेका सींग सो घने काल विना सरल न होइ तैसैं घने काल विना जो सरल न होइ ऐसा जो अनुत्कृष्ट शक्ति लीएं माया सो जीवकौं तिर्यंच गतिविषैं उपजावै है। बहुरि जैसैं गोमूत्र जो गायमूत्रकी धारा सो थोरा कालविना सरल न होइ तैसैं थोरा कालविना सरल न होइ ऐसा अजघन्य शक्तिलीएं माया सो जीवकौं मनुष्यगतिविषैं उपजावै है। बहुरि जैसैं खुर जो पृथ्वी ऊपरि वृषभादिकका खोज सो बहुत थोरा कालविना सरल न होइ तैसैं बहुत थोरा काल विना जो सरल न होइ ऐसी जो जघन्यशक्ति लीएं माया सो जीवकौं देवगतिविषैं उपजावै है। इहां भी पूर्वोक्तप्रकार प्रकृतिबंध होना वा उपमा उपमेयका समानपना जानना ॥ २८६ ॥

**किमिरायचक्कतणुमलहरिद्दराएण सरिसओ लोहो ।**
**णारयतिरिक्खमाणुसदेवेसुप्पायओ कमसो ॥ २८७ ॥**

क्रिमिरागचक्रतनुमलहरिद्रारागेण सदृशो लोभः ।
नारकतिर्यग्मानुषदेवेषु उत्पादकः क्रमशः ॥ २८७ ॥

जी० प्र०—क्रिमिरागचक्रमलतनुमलहरिद्रारागवंधसमानोत्कृष्टादिशक्तियुक्तो लोभकषायो विषयाभिलाषरूपः क्रमशो—यथासंख्यं नार-

कतिर्यग्मानुषदेवगतिषु जीवमुत्पादयति । तद्यथा—क्रिमिरागेण कंबलादिरंजनेन समानोत्कृष्टशक्तियुक्तलोभकषायः जीवं नारकगतौ उत्पादयति । चक्रमलः-रथांगमलं, तेन समानानुत्कृष्टशक्तियुक्तलोभकषायः जीवं तिर्यग्गतौ उत्पादयति । तनुमलः शरीरमलः बहिर्गतः जल्लमल्लं, तद्वद्धचसदृशाजघन्यशक्तियुक्तलोभकषायः जीवं मनुष्यगतावुत्पादयति । हरिद्राराग:, अंगवस्त्रादिरंजनद्रव्यरागः—तद्वत्सदृशजघन्यशक्तियुक्तलोभकषाय. जीवं देवगतावुत्पादयति । क्रिमिरागादिसदृशतच्चदुत्कृष्टादिशक्तियुक्तलोभपरिणामेन परिणतो जीवः तन्नारकादिभवोत्पत्तिकारणतत्तदायुर्गत्यानुपूर्व्यादि कर्म बध्नातीति भावार्थः ॥ २८७ ॥

मं० प्र०— क्रिमिरागचक्रमलतनुमलहरिद्रारागबंधनमानोत्कृष्टादिशक्तियुक्तो लोभः- विषयाभिलाषरूपः, क्रमशः—यथासंख्यं नारकतिर्यग्मानुषदेवगतिषु जीवस्योत्पादको भवति। तद्यथा क्रिमिरागेण -कंबलादिरंजनेन सदृशोत्कृष्टशक्तियुक्तो लोभो नारकगतौ जीवमुत्पादयति । चक्रस्य-रथांगस्य मल -अक्षम्रक्षणस्नेहः, तत्सदृशानुत्कृष्टशक्तियुक्तो लोभास्तिर्यग्गतौ जीवमुत्पादयति । तनोः-शरीरस्य, मलं -बहिर्गतं जल्लमलं, तद्वद्यसदृशाजघन्यशक्तियुक्तो लोभो मानुषगतौ जीवमुत्पादयति । हरिद्रारागः--अंगवस्त्रादिरंजनद्रव्यरागस्तद्वत्सदृशजघन्यशक्तियुक्तो लोभो देवगतौ जीवमुत्पादयति । क्रिमिरागादिसदृशतत्तदुत्कृष्टादिशक्तियुक्तलोभपरिणतो जीवस्तत्तन्नारकादिभवोत्पत्तिकारणतदायुर्गत्यानुपूर्वीनामादिकर्मबंधको भवतीति तात्पर्यार्थः ॥ २८७ ॥

स० चं०----क्रिमिराग १ चक्रमल २ तनुमल ३ हरिद्राराग ४ समान जो लोभ विषयाभिलाषरूप परिणाम सो क्रमतैं नरक तिर्यंच मनुष्य देवगतिविषैं उपजावै है । सोई कहिए है--जैसैं क्रिमिराग कहिए किरमिची रंग सो बहुत घने काल गये विना नष्ट न होइ तैसैं जो बहुत घने काल विना नष्ट न होइ ऐसा जो उत्कृष्ट शक्तिलीएं लोभ सो जीवकौं नरकगतिविषैं उपजावै है । बहुरि जैसैं चक्रमल जो पहेका मैल सो घने काल विना नष्ट न होइ तैसैं घने काल विना नष्ट न होइ ऐसा जो अनुत्कृष्ट शक्तिलीएं लोभ सो जीवकौं तिर्यंच गतिविषैं उपजावै है । बहुरि जैसैं तनुमल जो शरीरका मैल सो थोरा कालविना नष्ट न होइ तैसैं थोरा काल विना नष्ट न होइ ऐसा जो अजघन्य शक्तिलीएं लोभ सो जीवकौं मनुष्यगतिविषैं उपजावै है बहुरि जैसैं हरिद्राराग कहिए हलदका रंग सो बहुत थोरा काल विना नष्ट न होइ तैसैं बहुत थोरे काल विना नष्ट न होइ ऐसा जो जघन्य शक्तिलीएं लोभ सो जीवकौं देवगतिविषैं उपजावै है । ऐसैं जिन जिन कषायनितैं जो जो गतिका उपजना कह्या तिन तिन कषायनितैं तिस ही तिस गति संबंधी आयु वा आनुपूर्वी इत्यादिकका बंध जानना ॥ २८७ ॥

णारयतिरिक्खणरसुरगईसु उप्पण्णपढमकालम्हि ।
कोहो माया माणो लोहुदओ अणियमो वापि ॥२८८॥

नारकतिर्यग्नरसुरगतिषूत्पन्नप्रथमकाले ।
क्रोधो माया मानः लोभोदयः अनियमो वापि ॥ २८८ ॥

जी० प्र०—नारकतिर्यग्नरसुरगत्युत्पन्नजीवस्य तद्भवप्रथमकाले-प्रथमसमये यथासंख्यं क्रोधमायामानलोभकषायाणामुदयः स्यादिति नियमवचनं कषायप्राभृतद्वितीयसिद्धांतव्याख्यातुर्यतिवृषभाचार्यस्य अभिप्रायमाश्रित्योक्तं । वा-अथवा महाकर्मप्रकृतिप्राभृतप्रथमसिद्धांतकर्तुः भूतबल्याचार्यस्य अभिप्रायेणाऽनियमो ज्ञातव्यः । प्रागुक्तनियमं विना यथासंभवं कषायोदयोऽस्तीत्यर्थः । अपिशब्दः समुच्चयार्थः, ततः कारणादुभयसंप्रदायोऽपि अस्माकं संशयाविरुद्ध एवास्ति एकतरावधारणे शक्तिराहित्यात् अस्ति न भरतक्षेत्रे केवलिद्वयाभावात् । आरातीयाचार्याणां सिद्धांतद्वयकर्तृभ्यो ज्ञानातिशयवत्त्वाभावात् । यद्यपि विदेहे गत्वा तीर्थकरादिसन्निधौ कस्यचिदाचार्यस्य सकलश्रुतार्थेषु संशयविपर्यासानध्यवसायव्यवच्छेदेन वस्तुनिर्णयो भवेत् तदा सिद्धांतद्वयकर्तृविप्रतिपत्तिस्तथैवास्तीति तत्प्रेक्षावान् कः श्रद्धीते ॥ २८८ ॥

मं० प्र० -- नारकतिर्यग्नरसुरगतिषूत्पन्नस्य जीवस्य तद्भवप्रथमसमये यथासंख्यं क्रो मानमायालोभानां कषायाणामुदयो भवति । इदं नियमवचनं कषायप्राभृतस्य द्वितीयसिद्धांतस्य व्याख्यातृणां यतिवृषभाचार्याणामभिप्रायमाश्रित्योक्तं । वा-अथवा महाकर्मप्रकृतिप्राभृतस्य प्रथमसिद्धांतस्य कर्तृणा भूतबल्याचार्याणामभिप्रायेण अनियमः--प्रागुक्तनियम विना यथासंभवं कषायोदयो भवतीत्यर्थः । अपिशब्दः समुच्चयार्थः । तेनोभयसंप्रदायोऽप्यस्माकं संशयाविरुद्धो नैकतरावधारणे शक्तिरस्ति । अस्मिन् भरते तीर्थकरश्रुतकेवल्यभावात् । आरातीयाचार्याणां सिद्धांतद्वयकर्तृभ्यो ज्ञानातिशयवत्त्वाभावाच्च । यद्यपि विदेहे गत्वा तीर्थकरादिसन्निधौ कस्यचिदाचार्यस्य सकलश्रुतार्थेषु संशयविपर्यासानध्यवसायव्यवच्छेदेन वस्तुनिर्णयो भवेत् तदा सिद्धांतद्वयकर्तृविप्रतिपत्तिस्तथैवास्तीति कः प्रेक्षावान् श्रद्दधीत ॥ २८८ ॥

स० चं०---नरक तिर्यंच मनुष्य देवविषैं उत्पन्न भया जीवकैं पहिला समयविषैं क्रमतैं क्रोध मान माया लोभका उदय हो है। नारकी उपजे तहां उपजते ही पहले समय क्रोध कषायका उदय होइ । ऐसैं तिर्यंचकैं मायाका, मनुष्यकैं मानका, देवकैं लोभका उदय जानना । सो ऐसा नियम कषायप्राभृत दूसरा सिद्धांतका कर्ता यतिवृषभ नामा आचार्य ताके अभिप्रायकरि जानना । बहुरि महाकर्म प्रकृति प्राभृत प्रथमसिद्धांतका कर्ता

भूतवलि नामा आचार्य ताके अभिप्रायकरि पूर्वोक्त नियम नाही। जिस तिस कोई एक कषायका उदय हो है। ऐसें दोऊ आचार्यनिका अभिप्रायविषैं हमारैं संदेह है सो इस भरतक्षेत्रविषैं केवली श्रुतकेवली नाही वा समीपवर्ती आचार्यनिकैं उन आचार्यनितैं अधिक ज्ञान नाहीं तातैं जो विदेहविषैं गये तीर्थंकरादिकके निकटि शास्त्रार्थविषैं संशय विपर्यय अनध्यवसायका दूर होनेकरि निर्णय होइ तब एक अर्थका निश्चय होइ तातैं हमोनै दोऊ कथन कीए हैं ॥ २८८ ॥

**अप्परोभयबाधणबंधासंजमणिमित्तकोहादी।**
**जेसिं णत्थि कसाया अमला अकसाइणो जीवा ॥२८९॥**

आत्मपरोभयबाधनबंधासंयमनिमित्तक्रोधादयः।
येषां न संति कषाया अमला अकषायिणो जीवाः ॥ २८९ ॥

जी० प्र०—स्वस्मिन् परस्मिन् उभयस्मिन् इति स्थानत्रयेऽपि प्रत्येकं बंधनबाधनासंयमानां त्रयाणामपि निमित्तभूताः क्रोधादयः कषायाः, पुंवेदादयो नोकषायाश्च येषां जीवानां न संति ते अकषायाः, अमलाः द्रव्यभावनोकर्ममलरहिताः सिद्धपरमेष्ठिनः संतीति ज्ञातव्यं। यद्यपि उपशांतकषायादिचतुर्गुणस्थानवर्तिनोऽपि अकषाया अमलाश्च यथासंभवं द्रव्यभावमलरहिताः संति तथापि तेषां गुणस्थानप्ररूपणयैव अकषायत्वसिद्धिरस्तीति ज्ञातव्य। तद्यथा—कस्यचिज्जीवस्य क्रोधादिकषायः स्वस्यैव बंधनहेतुः स्वशिरोऽभिघातादिबाधाहेतुः हिंसाद्यसंयमहेतुश्च भवति। कस्यचिज्जीवस्य क्रोधादिकषायः परस्य स्वशत्र्वादेर्बाधनबंधनासंयमहेतुर्भवति। कस्यचित्कामुकादिजीवस्य क्रोधादिकषायः स्वपरयोरपि यथासंभवं बाधनबंधनासंयमहेतुर्भवति इति विभागः लोकानुसारेण आगमानुसारेण च द्रष्टव्यः ॥ २८९ ॥

मं० प्र०—आत्मपरोभयबंधनबाधासंयमनिमित्तानि क्रोधादयः कषायाः येषां जीवानां न संति ते अकषायाः, अमलाः—द्रव्यभावनोकर्मरूपमलरहिताः सिद्धपरमेष्ठिनः संतीति ज्ञातव्यं। यद्यप्युपशांतकषायादिचतुर्गुणस्थानवर्तिनोऽप्यकषायाः अमलाश्च यथासंभवद्रव्यभावमलरहिताः, तथापि तेषां गुणस्थानप्ररूपणयैवाकषायत्वसिद्धेः। तद्यथा—कस्यचिज्जीवस्य क्रोधादिकषायः आत्मन एव स्वस्यैव, बंधनहेतुः—शिरोऽभिघातादिबाधाहेतुः हिंसाद्यसंयमहेतुश्च भवति

कस्यचित् क्रोधादिः परस्य शब्वादेर्बंधनादिहेतुः, कस्याचित्तु कामुकादेः क्रोधादिः--उभयस्य--स्वपरद्वयस्य यथासंभवं बंधनादिहेतुर्भवतीति विभागो लोकानुसारेण आगमानुसारेण च द्रष्टव्यः ॥ २८९ ॥

स० चं०—आपकौं वा परकौं वा दोऊकौं बंधनके वा बाधाके वा असंयमके कारणभूत ऐसे क्रोधादिक कषाय वा पुरुष वेदादिरूप नोकषाय ते जिनके न पाइये ते द्रव्यकर्म भावकर्म नोकर्ममलकरि रहित सिद्ध भगवान अकषाय जानने। उपशांत कषायसे लेकर च्यारि गुणस्थानवर्ती जीव भी अकषाय निर्मल हैं तिनकैं गुणस्थान प्ररूपणा ही करि अकषायपनाकी सिद्धि जाननी। तहां कोऊ जीवकैं तौ क्रोधादि कषाय ऐसें हो हैं जिनतैं आपतैं आपको बांधे आप ही आपके मस्तकादिकका घात करै आपही आपकैं हिंसादि रूप असंयम परिणाम करै। बहुरि कोई जीवकैं क्रोधादि कषाय ऐसें हो हैं जिनतैं और जीवनिकौं बांधे मारै उनके असंयम परिणाम करावै। बहुरि कोई जीवकैं क्रोधादि कषाय ऐसे हो हैं जिनतैं आपका वा और जीवनिका बांधना घात करना असंयम होना होइ सो ऐसे ए कषाय अनर्थके मूल हैं॥ २८९ ॥

**कोहादिकसायाणं चउचउदसवीस होंति पदसंखा।**
**सत्तीलेस्साआउगबंधाबंधगदभेदेहिं ॥ २९० ॥**

क्रोधादिकषायाणां चत्वारः चतुर्दश विंशतिः भवंति पदसंख्याः।
शक्तिलेश्यायुष्कबंधाबंधगतभेदैः ॥ २९० ॥

जी० प्र०—क्रोधादिकषायाणां शक्तिलेश्यायुर्बंधाबंधगतभेदैर्यथाक्रमं चतुश्चतुर्दशविंशतिप्रमितपदानां स्थानानां संख्या भवति। तद्यथा शक्तिस्थानानि चत्वारि ४ लेश्यास्थानानि चतुर्दश १४ आयुर्बंधस्थानानि विंशतिः २० इत्यर्थः ॥ २९० ॥ तानि स्थानान्याह—

म० प्र०—क्रोधादीनां–क्रोधमानमायालोभाना कषायाणा शक्तिलेश्यायुर्बंधाबंधगतभेदैः, यथाक्रम चतुश्चतुर्दशविंशतिप्रमिताः पदाना स्थानानां संख्या भवति। तद्यथा--शक्तिस्थानानि चत्वारि, लेश्यास्थानानि चतुर्दश, आयुर्बंधाबंधस्थानानि विंशतिरित्यर्थः ॥ २९० ॥

सं० च०—क्रोध मान माया लोभ कषाय तिनकी शक्तिस्थानके भेदकरि च्यारि संख्या हैं। लेश्या स्थानके भेदकरि चौदह हैं। आयुर्वलके बंधनेके अबंधनेके स्थान भेदकरि बीस संख्या हैं ॥२९०॥ ते स्थान आगैं कहिए है

**सिलसेलवेणुमूलक्किमिरायादी कमेण चत्तारि।**
**कोहादिकसायाणं सत्तिं पडि होंति णियमेण ॥ २९१ ॥**

शिलाशैलवेणुमूलक्रिमिरागादीनि क्रमेण चत्वारि।
क्रोधादिकषायाणां शक्तिं प्रति भवंति नियमेन ॥ २९१ ॥

जी० प्र०—क्रोधादिचतुःकषायाणां शक्तिं प्रति स्वफलदानसामर्थ्यमुद्दिश्य तीव्रतरतीव्रमंदमदतरानुभागरूपाणि उत्कृष्टानुत्कृष्टाजघन्यजघन्यानुभागरूपाणि वा स्थानानि चत्वारि नियमेन, शिलाभेदशैलवेणुमूलक्रिमिरागा तीव्रतरानुभागोदाहरणानि आदयो येषां पृथ्वीभेदादीनां तीव्रानुभागाद्युदाहरणानां तानि शिलाशैलवेणुमूलक्रिमिरागादीनि भवंति इति शिलाभेदादिदृष्टांता स्फुटं व्यवहारावधारणेन भवंति। परमागमव्यवहारिभिराचार्यैः अव्युत्पन्नमंदप्रज्ञशिष्यप्रतिबोधनार्थं व्यवहर्तव्यानि भवंति। दृष्टांतप्रदर्शनबलेनैव हि अव्युत्पन्नमंदप्रज्ञाः शिष्याः प्रतिबोधयितुं शक्यते। अतो दृष्टांतनामान्येव शिलाभेदादिशक्तीनां नामानीति रूढानि ॥ २९१ ॥

म० प्र०—क्रोधादीनां चतुर्णां कषायाणा शक्तिं प्रति स्वफलदानसामर्थ्यमुद्दिश्य तीव्रतरतीव्रमंदमंदतरानुभागरूपाणि उत्कृष्टानुत्कृष्टाजघन्यजघन्यानुभागरूपाणि वा स्थानानि चत्वारि नियमेन, शिलाभेदशैलवेणुमूलक्रिमिरागाः तीव्रतरानुभागोदाहरणानि आदयो येषां पृथ्वीभेदादीना तीव्रानुभागाद्युदाहरणाना तानि तथोक्तानि इति शिलाभेदादिदृष्टाता नामव्यवहारावधारणेन भवंति—परमागमव्यवहारिभिराचार्यैरव्युत्पन्नमंदप्रज्ञस्वशिष्यप्रतिबोधनार्थं व्यवहर्तव्यानि भवंति। दृष्टातप्रदर्शनबलेनैव हि अव्युत्पन्नमंदप्रज्ञाः शिष्याः प्रतिपादयितुं शक्यंते अतो दृष्टांतनामान्येव शिलाभेदादीनि शक्तीनां नामानीति वा रूढानि ॥ २९१ ॥

सं० च०—क्रोधादिक जे कषाय तिनिकैं शक्ति कहिए अपना फल देनेकी सामर्थ्य ताकी अपेक्षातैं निश्चय करि च्यारि स्थान हैं। ते अनुक्रमतैं तीव्रतर, तीव्र, मंद, मंदतर, अनुभागरूप वा उत्कृष्ट अनुत्कृष्ट अजघन्य जघन्य अनुभाग रूप जानने। तहां शिलाभेद, शैल, वेणुमूल, क्रिमिराग ए तौ उत्कृष्ट शक्तिके उदाहरण जानने।

आदि शब्दतें पूर्वोक्त अनुत्कृष्टादि शक्तिके उदाहरण जो दृष्टांतमात्र कहे हैं ते सर्व जानने। ए दृष्टांत प्रगट व्यवहारका अवधारण करि हैं अर परमागमका व्यवहारी आचार्यनिकरि मंदबुद्धी शिष्य समझावनेके अर्थि व्यवहार रूप कीएं हैं जातैं दृष्टांतके बलकरि ही मंदबुद्धी समझै हैं तातैं दृष्टांतकी मुख्यताकरि जे दृष्टांतके नाम तेई शक्तिनिके नाम प्रसिद्ध कीएं हैं ॥ २११ ॥

## किण्हं सिलासमाणे किण्हादी छक्कमेण भूमिम्हि ।
## छक्कादी सुक्कोत्ति य धूलिम्मि जलम्मि सुक्केक्का ॥२९२॥

कृष्णा शिलासमाने कृष्णादयः षट् क्रमेण भूमौ ।
षट्कादिः शुक्लेति च धूलौ जले शुक्लैका ॥ २९२ ॥

जी० प्र०—शिलाभेदसमाने क्रोधोत्कृष्टशक्तिस्थाने एकैव कृष्णलेश्या भवति । यद्यपि तत्र असंख्यातलोकमात्राणि षट्स्थानपतितसंक्लेशहानिविशिष्टानि कषायोदयस्थानानि संति तथापि तानि सर्वाण्यपि कृष्णलेश्याया एव संक्लेशहानिस्थानानि नान्यलेश्याया इत्यभिप्रायेण शिलाभेदसमानोत्कृष्टस्थाने कृष्णलेश्यैव इत्याचार्येण कथितं । नियमेन इत्यनुवर्तमानेन नियमशब्देन अत्राप्यवधारणार्थः सूच्यते । स कः ? तच्चरमस्थाने उत्कृष्टशक्तिर्व्युच्छिद्यते इति भूमिभेदसमाने क्रोधानुत्कृष्टशक्तिस्थाने क्रमेण कृष्णादयः षडपि लेश्या भवंति । तद्यथा—तत्र सर्वोग्रमध्यमकृष्णलेश्यास्थानं भूमेदसमानक्रोधानुत्कृष्टशक्तिप्रथमोदयस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्येयलोकमात्रेष्वपि कृष्णैव लेश्या भवति नीलाद्यन्यलेश्यालक्षणस्य तत्रासंभवात् । ततः षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्येयलोकमात्रेषु उदयस्थानेषु मध्यमकृष्णलेश्या उत्कृष्टनीललेश्या च वर्तेते तत्र तल्लेश्याद्वयलक्षणस्यैव संभवात् । तत उपरि षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णलेश्या मध्यमनीललेश्या उत्कृष्टकपोतलेश्याश्च वर्तंते । तत्र तल्लेश्यात्रयलक्षणसंभवात् । ततः उपरि षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णलेश्या मध्यमनीललेश्या मध्यमकपोतलेश्या जघन्यतेजोलेश्या च वर्तंते । तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात् । तत उपरि षट्स्थानपतितसंक्लेशहानियुक्तस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णनीलकपोततेजोलेश्याः जघन्यपद्मलेश्या च वर्तंते । तत्र तल्लेश्यापंचकलक्षणसद्भावात् । तत उपरि षट्स्थानपतित-

संक्लेशहानिस्थानेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमकृष्णनीलकपोततेजःपद्मलेश्या जघन्यशुक्ललेश्या च वर्तते। तत्र तल्लेश्याषट्कलक्षणसद्भावात्। तत्रैव तच्चरमस्थाने अनुत्कृष्टशक्तिर्व्युच्छिद्यते। ततः उपरि धूलीरेखासमानक्रोधाजघन्यशक्तिस्थाने यथाक्रमं लेश्याषट्कादयः शुक्ललेश्यापर्यंताः एकैकहीना भूत्वा गच्छंति। तद्यथा—धूलीरेखासमानक्रोधाजघन्यशक्तियुक्तप्रथमस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु जघन्यकृष्णलेश्या मध्यमनीलकपोततेज पद्मशुक्ललेश्याश्च वर्तते। तत्र तल्लेश्याषट्कलक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने कृष्णलेश्या व्युच्छिद्यते तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु जघन्यनीललेश्या मध्यमाः कपोततेजःपद्मशुक्लेश्याश्च वर्तते। तत्र तल्लेश्यापञ्चकलक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने नीललेश्या व्युच्छिद्यते। तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थाने जघन्यकपोतलेश्या मध्यमाः तेजःपद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात्। तत्रैव चरमस्थाने कपोतलेश्या व्युच्छिद्यते। तदनन्तरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितविशुद्धिवृद्धियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु उत्कृष्टा तेजोलेश्या मध्यमे पद्मशुक्ललेश्ये च वर्तते। तत्र तल्लेश्यात्रयलक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने उत्कृष्टतेजोलेश्या व्युच्छिद्यते। तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितविशुद्धिवृद्धियुक्तेषु संख्यातलोकमात्रेष्वपि कषायोदयस्थानेषूत्कृष्टपद्मलेश्या जघन्यशुक्ललेश्या च वर्तते। तत्र तद्द्वयलेश्यालक्षणसद्भावात्। तत्रैव चरमोदयस्थान एव उत्कृष्टपद्मलेश्या व्युच्छिद्यते तदनंतरोदयस्थाने तल्लेश्यालक्षणाभावात्। तत उपरि षट्स्थानपतितविशुद्धिवृद्धियुक्तेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमा शुक्ललेश्यैव वर्तते तत्र तल्लेश्यालक्षणसद्भावात्। तत्रैव तच्चरमोदयस्थाने अजघन्यशक्तिर्व्युच्छिद्यते। तत उपरि जलरेखासमानक्रोधजघन्यशक्तियुक्तेषु षट्स्थानपतितविशुद्धिवृद्धिविशिष्टेषु असंख्यातलोकमात्रेष्वपि कषायोदयस्थानेषु मध्यमा शुक्ललेश्यैव वर्तते तत्रैव तच्चरमोदयस्थाने उत्कृष्टा शुक्ललेश्यैव स्यात्। एवं चतुःशक्तियुक्तानि क्रोधस्य लेश्याश्रयेण चतुर्दशस्थानान्युक्तानि। अनेनैव क्रमेण मानादीनामपि चतुर्दशलेश्याश्रितस्थानानि नेतव्यानि ॥ २९२ ॥

मं० प्र०—शिलाभेदसमाने क्रोधोत्कृष्टशक्तिस्थाने एकैव कृष्णलेश्या। यद्यपि तत्र असंख्येयलोकमात्राणि षट्स्थानपतितसंक्लेशहानिविशिष्टानि कषायोदयस्थानानि संति तथापि तानि सर्वाण्यपि कृष्णलेश्याया एव संक्लेशहानिस्थानानि नान्यलेश्याया इत्यभिप्रायेण शिलाभेदसमाने उत्कृष्टस्थाने कृष्णेत्याचार्येणोक्तं। नियमेनेत्यनुवर्तमानेन नियमशब्देनात्रावधारणार्थः सूच्यते। तत्र तच्चरमस्थाने उत्कृष्टशक्तिर्व्युच्छिद्यते। भूमिभेदसमाने क्रोधानुत्कृष्टशक्तिस्थाने क्रमेण कृष्णलेश्यादयः षडपि लेश्या भवंति। तद्यथा—तत्र स्वयोग्यमध्यमकृष्णलेश्यास्थानं भूमिभेदसमानक्रोधानुत्कृष्टशक्तिप्रथमोदयस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानिस्थानेष्वसंख्येयलोकमात्रेषु अपि कृष्णैव लेश्या, नीलाद्यन्यतमलेश्यालक्षणस्य तत्रासंभवात्। ततः षट्स्थानपतितसंक्लेशहानिस्थानेषु असंख्येयलोकमात्रेषु उदयस्थानेषु मध्यमकृष्णलेश्या च उत्कृष्टनीललेश्या च वर्तते। तत्स्थानानां लेश्याद्वयलक्षणसंभवात्। ततः षट्स्थानपतितसंक्लेशहानि-

स्थानेष्वसंख्येयलोकमात्रेषु उदयस्थानेष्वपि मध्यमकृष्णलेश्या मध्यमनीललेश्या उत्कृष्टकपोतलेश्या च वर्तते तत्र तल्लेश्यात्रयलक्षणसद्भावात्, ततः षट्स्थानपतितसंक्लेशहानिस्थानेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमकृष्णलेश्या मध्यमनीललेश्या मध्यमकपोतलेश्या जघन्यतेजोलेश्या च वर्तते। तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात्। ततः षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमाः कृष्णनीलकपोततेजोलेश्याः जघन्यपद्मलेश्या च वर्तते तत्र तल्लेश्यापंचकलक्षणसद्भावात्। ततः षट्स्थानपतितसंक्लेशहानियुक्तेषु असंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमाः कृष्णनीलकपोततेजःपद्मलेश्याः जघन्यशुक्ललेश्या च वर्तते तत्र तल्लेश्याषट्कलक्षणसद्भावात्। तत्रैव चरमस्थाने अनुत्कृष्टशक्तिर्व्युच्छिद्यते ततः धूलीरेखासमानक्रोधाजघन्यशक्तिस्थाने क्रमेण लेश्याषट्कादयः शुक्ललेश्यापर्यंता एकैकहीना भवति। तद्यथा—धूलीरेखासमानक्रोधाजघन्यशक्तियुक्तप्रथमस्थानमादिं कृत्वा षट्स्थानपतितसंक्लेशहानियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि जघन्यकृष्णलेश्या मध्यमा नीलकपोततेजःपद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्याषट्कलक्षणसद्भावात्। तत्रैव चरमोदयस्थाने कृष्णलेश्या व्युच्छिद्यते तदनंतरस्थानेषु तल्लेश्यालक्षणाभावात्। ततः षट्स्थानपतितसंक्लेशहानियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि जघन्यनीललेश्या, मध्यमा कपोततेजःपद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्यापंचकलक्षणसद्भावात्। तत्रैव चरमस्थाने नीललेश्या व्युच्छिद्यते तदनंतरस्थाने तल्लक्षणाभावात्, ततः षट्स्थानपतितसंक्लेशहानियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि जघन्यकपोतलेश्या मध्यमाः तेजःपद्मशुक्ललेश्याश्च वर्तते तत्र तल्लेश्याचतुष्टयलक्षणसद्भावात्। तत्रैव चरमस्थाने कपोतलेश्या व्युच्छिद्यते। तदनंतरस्थाने तल्लेश्यालक्षणाभावात्। ततः षट्स्थानपतितविशुद्धिवृद्धियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि उत्कृष्टा तेजोलेश्या, मध्यमे पद्मशुक्ललेश्ये च वर्तते तत्र तल्लेश्यात्रयलक्षणसंभवात्। तत्रैव चरमस्थाने तेजोलेश्या व्युच्छिद्यते तदनंतरस्थाने तल्लक्षणाभावात्। ततः षट्स्थानपतितविशुद्धिवृद्धियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि उत्कृष्टा पद्मलेश्या, मध्यमा शुक्ललेश्या च वर्तते तत्र तल्लेश्याद्वयलक्षणसद्भावात्, तत्रैव चरमस्थाने पद्मलेश्या व्युच्छिद्यते तदनंतरस्थाने तल्लक्षणाभावात्। ततः षट्स्थानपतितविशुद्धिवृद्धियुक्तेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमा शुक्ललेश्या वर्तते तत्र तल्लक्षणसद्भावात्। तत्रैव चरमस्थाने अजघन्यशक्तिर्व्युच्छिद्यते ततः जलरेखासमानजघन्यशक्तियुक्तेषु षट्स्थानपतितविशुद्धिविशिष्टेष्वसंख्येयलोकमात्रेषूदयस्थानेष्वपि मध्यमा शुक्ललेश्या एकैव वर्तते तत्रैव चरमस्थाने उत्कृष्टा शुक्ललेश्या भवति एवं लेश्याश्रयेण क्रोधस्य चतुःशक्तियुक्तानि चतुर्दशस्थानानि भवति। अनेनैव क्रमेण मानादीनामपि चतुर्दशलेश्याश्रितस्थानानि आनेतव्यानि ॥ २९२ ॥

स० चं०—शिला भेद समान जो क्रोधका उत्कृष्टशक्ति स्थान तींहिविषैं एक कृष्णलेश्या ही है। यद्यपि इस उत्कृष्टशक्तिस्थानविषैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण कषायनिके उदयस्थान हैं बहुरि तथापि ते सर्वस्थान कृष्णलेश्याहीके हैं कृष्णलेश्याहीके उत्कृष्ट मध्यम भेदरूप जानने। षट्स्थानपतित संक्लेशहानिका स्वरूप ऐसा जानना। जेते कषायनिके अविभाग प्रतिच्छेद पहिलै थे तिनसौं घाटि होनेलगे ते अनंतभागहानि असंख्यातभागहानि संख्यातभागहानि संख्यातगुणहानि असंख्यातगुणहानि अनंतगुणहानिरूप

घटे ऐसैं तीव्र कषाय घटनेका नाम षट्स्थानपतितसंक्लेशहानि कहिए। कषायनिके अविभाग प्रतिच्छेद अनंत हैं तिनकी अपेक्षा षट्स्थानपतित हानि संभवै है अर स्थानभेद असंख्यातलोक प्रमाण ही हैं। नियम शब्दकरि ताका अंतस्थानविषैं उत्कृष्ट शक्तिकी व्युच्छित्ति हो है। बहुरि भूमिभेद समान क्रोधका अनुत्कृष्टशक्तिस्थान तीहिंविषैं अनुक्रमतैं छहो लेश्या पाइए है। सो कहिए है--भूमिभेद समान क्रोधका अनुत्कृष्ट शक्तिस्थानका पहिला उदयस्थानतैं लगाइ षट्स्थानपतित संक्लेशहानि लीएं असंख्यात लोक प्रमाण उदयस्थानकनिविषैं तौ केवल कृष्णलेश्या ही है, कृष्णलेश्याहीका मध्यभेद पाइए है जातैं अन्य लेश्याका लक्षण तहां नाहीं। बहुरि इहांतैं आगैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं मध्यम कृष्णलेश्या उत्कृष्ट नील लेश्या पाइए है जातैं इहां तिनि दोऊ लेश्यानिका लक्षण संभवै है। बहुरि इनितैं आगैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यात लोक प्रमाण उदयस्थानकनिविषैं मध्यम कृष्णलेश्या मध्यम नील लेश्या उत्कृष्ट कपोत लेश्या पाइए है जातैं इहां तिनि तीनों लेश्यानिके लक्षण संभवै हैं। बहुरि इनितैं षट्स्थानपतित संक्लेश हानि लीएं असंख्यात लोक प्रमाण उदयस्थानकनिविषैं मध्यम कृष्णलेश्या मध्यम नील लेश्या मध्यम कपोत लेश्या जघन्य पीतलेश्या पाइए है तातैं इहां तिनि च्यारयो लेश्यानिके लक्षण संभवै है। इनितैं बहुरि षट्स्थानपतित संक्लेश हानि लीएं असंख्यातलोक प्रमाण उदयस्थानकनिविषैं मध्यम कृष्ण नील कपोत पीत लेश्या अर जघन्य पद्मलेश्या पाइए है जातैं इहां तिनि पंच लेश्यानिका लक्षण संभवै है। बहुरि इनितैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यात लोक प्रमाण स्थानकनिविषैं मध्य कृष्ण नील कपोत पीत पद्म लेश्या अर जघन्य शुक्ललेश्या पाइए है जातैं इहां तिनि छहो लेश्यानिका लक्षण संभवै है। ऐसैं क्रोधका अनुत्कृष्ट शक्तिस्थानका जे स्थान भेद तिनिविषैं क्रमतैं छहो लेश्याके स्थानक जानने। इहां अंतस्थानविषैं अनुत्कृष्टशक्तिकी व्युच्छित्ति हुई। बहुरि धूलीरेखा समान क्रोधका अजघन्यशक्तिस्थान ताके स्थानकनिविषैं छह लेश्यातैं एक एक घाटि शुक्ल लेश्या पर्यंत लेश्या पाइए है। सोई कहिए है-धूली रेखा समान क्रोधका प्रथम स्थानतैं लगाइ षट्स्थानपतित संक्लेशहानि लीएं असंख्यात-

लोक प्रमाण स्थानकनिविषैं जघन्य कृष्ण लेश्या मध्यम नील कपोत पीत पद्म शुक्ल लेश्या पाइए हैं जातै इहां छहो लेश्यानिके लक्षण संभवै है। इहां अंतस्थानविषैं कृष्णलेश्याका विच्छेद हुवा। बहुरि इहांतैं आगैं इसही शक्तिका षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं जघन्य नील लेश्या मध्यम कपोत पीत पद्म शुक्ललेश्या पाइए है जातैं इहां तिनि पंच लेश्यानिका लक्षण संभवै है। इहां अंतस्थानकनिविषैं नील लेश्याका विच्छेद हुवा। बहुरि इहांतैं आगैं षट्स्थानपतित संक्लेशहानि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं जघन्य कपोत लेश्या मध्यम पीत पद्म शुक्ल लेश्या पाइए है जातैं इहां तिनि च्यारि लेश्यानिके लक्षण संभवै है इहां अंतस्थानविषैं कपोत लेश्याका विच्छेद हुवा ऐसैं संक्लेश परिणामनिकी हानि होते संते जो मंदकषायरूप परिणाम भया ताकौं विशुद्ध परिणाम कहिए ताके अनंते अविभाग प्रतिच्छेद हैं सो तिनकी अनंत भागवृद्धि असंख्यात भागवृद्धि संख्यात भागवृद्धि संख्यात गुणवृद्धि असंख्यात गुणवृद्धि अनंतगुण वृद्धिरूप जो वृद्धि सो षट्स्थानपतित विशुद्धवृद्धि कहिए सो उन च्यारि लेश्याका स्थानतैं आगैं षट्स्थानपतित विशुद्धवृद्धिलीयें असंख्यातलोक प्रमाण स्थानकनिविषैं उत्कृष्ट पीत लेश्या मध्यम पद्म शुक्ललेश्या पाइए है जातैं इहां तीन तिनि लेश्यानिहीका लक्षण संभवै है। इहां अंतस्थानकनिविषैं पीतलेश्याका विच्छेद हुवा। बहुरि इहांतैं षट्स्थानपतित विशुद्ध वृद्धि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं उत्कृष्ट पद्मलेश्या मध्यम शुक्ललेश्या ही पाइए हैं। जातैं इहां तिनि दोय ही लेश्यानिके लक्षण संभवै हैं। इहां अंतस्थानविषैं पद्मलेश्याका विच्छेद हुवा। बहुरि इहांतैं षट्स्थानपतित विशुद्धि वृद्धि लीएं असंख्यातलोक प्रमाण स्थानकनिविषैं मध्यम शुक्ललेश्या ही पाइए है जातैं इहां तिस ही लेश्याके लक्षण पाइए है। ऐसैं धूली रेखा समान क्रोधका अजघन्यशक्तिस्थानके जे उदयरूप स्थानक तिनिविषैं लेश्या कही, इहां अंतस्थानविषैं अजघन्यशक्तिकी व्युच्छित्ति भई। बहुरि इहांतैं आगैं जल रेखा समान क्रोधका जघन्य शक्तिस्थान ताके षट्स्थानपतित विशुद्धि वृद्धिलीएं असंख्यातलोक प्रमाण स्थानकनिविषैं मध्यम शुक्ललेश्या पाइए है। बहुरि याहीके अंतस्थानविषैं उत्कृष्ट शुक्ल

लेश्या पाइए है ऐसैं च्यारिप्रकार शक्तियुक्त क्रोधविषैं लेश्या अपेक्षा चौदह स्थानक कहे। उत्कृष्टशक्तिस्थानविषैं एक, अनुत्कृष्ट शक्तिस्थानकनिविषैं छह, अजघन्य शक्तिस्थानकनिविषैं छह, जघन्यशक्तिस्थानकनिविषैं एक ऐसैं चौदह कहे। इहां किसीकै भ्रम होइगा कि ए च्यारि शक्तिस्थान कहे इनहीका अनंतानुबंधी आदि नाम है? सो नाहीं, जो तैसैं कहिए तौ षष्ठगुणस्थानविषैं संज्वलन नाही है तहां एक शुक्ललेश्या ही संभवै जातैं इहां जघन्यशक्तिस्थानविषैं एक शुक्ललेश्या ही कही है सो षष्ठ गुणस्थानविषैं तौ लेश्या तीन हैं तातैं अनंतानुबंधी इत्यादि भेद सम्यक्त्वादि घातनेकी अपेक्षा हैं ते अन्य जानने। बहुरि ये शक्तिस्थानके भेद तीव्र मंद अपेक्षा हैं ते अन्य जानने। सो जैसैं ए क्रोधके चौदह स्थान लेश्या अपेक्षा कहे तैसैं ही उत्कृष्टादिक शक्तिस्थानकनिविषैं मानके वा मायाके वा लोभके भी जानने ॥ २९२ ॥

**सेलगकिण्हे सुण्णं णिरयं च य भूगएगबिट्ठाणे।**
**णिरयं इगिबितिआऊ तिट्ठाणे चारि सेसपदे ॥ २९३ ॥**

शैलगकृष्णे शून्ये निरयं च च भूगैकद्विस्थाने।
निरयमेकद्वित्र्यायुस्त्रिस्थाने चत्वारि शेषपदे ॥ २९३ ॥

जी० प्र०--शिलाभेदगतकृष्णलेश्यास्थानेषु असंख्यातलोकमात्रेषु केचित् किमप्यायुर्न बध्यते इति शून्यं लिखितं तीव्रतमसंक्लेशस्थानेषु आयुर्बंधाभावात्। पुनस्तत्रैव अग्रतनेषु केषुचित् हीनसंक्लेशस्थानेषु च नरकायुरेकमेव बध्यते इत्येकांको लिखितः। ततोऽनंतगुणहीनसंक्लेशेषु भूभेदगतकृष्णलेश्यास्थानेषु कृष्णनीललेश्याद्वयस्थानेषु च नरकायुरेकमेव बध्यत इति तत्स्थानद्वये एकैकांको लिखितः। पुनः तद्भूभेदगत कृष्णनीलकपोतलेश्यात्रयस्थानेषु केषुचिन्नरकायुरेकमेव बध्यते, अग्रे तत्रैव केषुचित्स्थानेषु नरकतिर्यगायुर्द्वयमेव बध्यते। तत्रैव अग्रे केषुचित्स्थानेषु नरकतिर्यग्मनुष्यायुस्त्रयं बध्यते। इति तद्भूभेदगतत्रिलेश्यास्थानेषु एकद्वित्र्यंका लिखिताः। पुनस्तद्भूभेदगतकृष्णनीलकपोततेजोलेश्याचतुःस्थानेषु पद्मलेश्यासहितलेश्यापंचकस्थानेषु शुक्ललेश्यासहितलेश्यापट्कस्थानेषु च नरकतिर्यग्मनुष्यदेवायूंषि चत्वार्यपि बध्यंते। इति शेषस्थानत्रयेऽपि प्रत्येकं चतुरंको लिखितः ॥ २९३ ॥

म० प्र०—शिलाभेदगतकृष्णलेश्यास्थानेष्वसंख्यातलोकमात्रेषु केषुचित्किमप्यायुर्न बध्यते इति शून्यं लिखितं, तीव्रतमसंक्लेशस्थाने आयुर्बंधाभावात् तत्रैव केषुचित् हीनसंक्लेशस्थानेषु नरकायुरेकमेव बध्यते इत्येकाको लिखितः, ततोऽनतगुणहीनसंक्लेशेषु भूभेदगतकृष्णलेश्यास्थानेषु कृष्णनीललेश्याद्वयस्थानेषु च नरकायुरेकमेव बध्यते इत्येकांको लिखितौ। तत्रैव कृष्णनीलकपोतलेश्यात्रयस्थानेषु केषुचित् नरकायुरेकमेव बध्यते, केषुचित् नरकतिर्यगायुर्द्वयं बध्यते, केषुचिन्नरकतिर्यग्मनुष्यायुस्त्रयं बध्यते, इति एकद्वित्र्यंका लिखिताः। तत्रैम कृष्णनीलकपोततेजोलेश्याचतुष्टयस्थानेषु पद्मलेश्यासहितलेश्यापंचकस्थानेषु शुक्ललेश्यासहितलेश्याषट्कस्थानेषु च नारकतिर्यग्मानुषदेवायूंषि चत्वार्यपि बध्यते इति शेषपदेषु त्रिषु चतुरका लिखिताः॥ २९३॥

स० च०—शिला भेद समान उत्कृष्ट क्रोधका शक्तिस्थानविषैं असंख्यातलोक प्रमाण उदयस्थान कहे तिनिविषैं केई स्थान असे हैं जिनिविषैं कोऊ आयु बंधै नाहीं। सो यंत्रविषैं तहां शून्य लिखना। जातैं जहां अति तीव्र कषाय होइ तहां आयुका बंध होइ नाहीं। बहुरि तहां ही ऊपरिके कहे स्थान थोरे कषाय लीएं हैं तिनिविषैं एक नरकायु ही बंधै है सो इहां एकका अंक लिखना। बहुरि तातैं अनंतगुण घटता संक्लेश लीएं पृथ्वी भेद समान कषायविषैं जे कृष्णलेश्याके स्थान हैं वा कृष्ण वा नील दोय लेश्याके जे स्थान हैं तिनिविषैं एक नरक आयु ही बधै है। सो तिनि दोय स्थाननिविषैं एक एकका अंक लिखना। बहुरि तिसही विषैं केइ अगले स्थान कृष्ण नील कपोत तीन लेश्याके हैं सो तिनिविषैं केई स्थाननिविषैं तौ एक नरकायुहीका बंध हो है। बहुरि केई अगले स्थाननिविषैं नरक वा तिर्यंच दोय आयु बंधै हैं। बहुरि केई अगले स्थाननिविषैं नरक तिर्यंच मनुष्य तीन आयु बंधै हैं। सो तीन लेश्याके स्थानविषैं एक दोय तीनका अंक लिखना। बहुरि तिस ही पृथ्वीके भेद समान शक्तिस्थानविषैं केई कृष्ण नील कपोत पीत इनि च्यारि लेश्याके स्थान हैं केइक कृष्णादि पद्मलेश्यापर्यंत पंच लेश्याके स्थान है। केइक कृष्णादिक शुक्ललेश्या पर्यंत षट्लेश्याके स्थान हैं। सो इन तीनूही जायगा नरक तिर्यंच मनुष्य देव संबधी च्यार्यो ही आयु बधै हैं सो तीनों जायगा च्यारि च्यारिका अंक लिखना॥२९३॥

**धूलिगछक्कट्ठाणे चउराऊतिगदुगं च उवरिल्लं।**
**पणचदुठाणे देवं देवं सुण्णं च तिट्ठाणे॥ २९४॥**

घूलिगषट्कस्थाने चतुरायूंषि त्रिकाद्रिकं चोपरितनं ।
पंचचतुर्थस्थाने देवं देवं शून्यं च तृतीयस्थाने ॥ २९४ ॥

जी० प्र०— धूलीरेखासदृशशक्तियुक्तेषु लेश्याषट्कस्थानेषु केषुचित् भूमेदगतलेश्यापट्कस्थानचरमस्थानशक्तितोऽनंतगुणहीनसंक्लेशयुक्तेषु चत्वार्यायूंषि बध्यंते । तत्रैव नरकायुर्व्युच्छिद्यते । तत्रैव अग्रे केषु चित्स्थानेषु नरकायुर्वर्जितशेषायुस्त्रयं बध्यते । तत्रैव तिर्यगायुर्व्युच्छिद्यते । तत्रैव अग्रे लेश्याषट्कस्थानेषु केषुचित् शेषमनुष्यदेवायुषी बध्येते । तत्रैव मनुष्यायुर्व्युच्छिद्यते इति चतुस्त्रिद्व्यंका लिखिताः । पुनस्तत्रैव कृष्णलेश्यारहितलेश्यापंचकस्थानेषु कृष्णनीललेश्याद्वयरहितलेश्याचतुष्कस्थानेषु च देवायुरेकमेव बध्यते । इत्येकैकोंको लिखितः । पुनस्तत्रैव कृष्णनीलकपोतलेश्यात्रयरहितशुभलेश्यात्रयस्थानेषु केषुचिद्देवायुरेकमेव बध्यते इत्येकांको लिखितः । तत्रैव देवायुर्व्युच्छिद्यते पुनस्तच्छुभलेश्यात्रयस्थानेषु अग्रे केषुचित्तीव्रविशुद्धियुक्तेषु किमप्यायुर्न बध्यते इति शून्यं लिखितं । शुभलेश्यात्रयतीव्रतरविशुद्धिविशिष्टपरिणामस्य आयुर्बंधहेतुत्वासंभवात् ॥ २९४ ॥

म० प्र०—ततोऽनंतगुणहीनसंक्लेशेषु धूलिरेखासदृशशक्तिगतेषु लेश्याषट्कस्थानेषु केषुचित् चत्वार्यायूंषि बध्यते । तत्रैव नरकायुर्विच्छिन्नं । तत्रैव केषुचिदुपरितनशेषायुस्त्रय बध्यते । तत्रैव तिर्यगायुर्विच्छिन्न । तत्रैव लेश्याषट्कस्थानेषु केषुचित् उपरितन शेषायुर्द्वयं बध्यते । तत्रैव मनुष्यायुर्विच्छिन्नं इति चतुस्त्रिद्व्यंका लिखिता । तत्रैव कृष्णलेश्यारहितलेश्यापचकस्थानेषु कृष्णनीललेश्यारहितलेश्याचतुष्कस्थानेषु च देवायुरेकमेव बध्यते इत्यकाकौ लिखितौ । तत्रैव कृष्णनीलकपोतलेश्यारहितशुभलेश्यात्रयस्थानेषु केषुचिद्देवायुरेकमेव बध्यते इत्येकाको लिखितः । तत्रैव देवायुर्बंधो व्युच्छिन्नः । पुनस्तत्रैव केषुचित् तीव्रविशुद्धियुक्तेषु किमप्यायुर्न बध्यते इति शून्यं लिखितं । लेश्यात्रयपरिणामस्यापि तीव्रतरविशुद्धिविशिष्टस्य आयुर्बंधहेतुत्वासभवात् ॥ २९४ ॥

स० चं०—बहुरि पूर्वोक्तस्थाननितैं अनंतानंतगुणा घाटि संक्लेश लीएं धूलिरेखा समान शक्तिस्थानविषैं केई कृष्णादि शुक्ललेश्या पर्यंत षटलेश्याके स्थान हैं। तिनिविषैं केई स्थाननिविषैं तौ नरकादिक च्यार्यो आयु बंधै हैं। केई अगले स्थाननिविषैं नरकायु विना तीन आयु ही बंधैं हैं। केई अगले स्थाननिविषैं मनुष्य देव दोय ही आयु बंधै हैं सो तहां च्यारि तीन दोयके अंक लिखने । बहुरि तिसही धूलिरेखा समान शक्तिस्थानविषैं केई कृष्णलेश्या विना पंच लेश्याके स्थान हैं । केई कृष्ण नील विना च्यारि लेश्याके स्थान हैं। इनि दोऊ जायगा एक देवायु ही बंधै हैं सो दोऊ जायगा एक एकका अंक लिखना। बहुरि तिस ही धूलिरेखा समान शक्तिस्थानविषैं केई पीतादि तीन शुभलेश्या संबंधी स्थान हैं। तिनिविषैं केई स्थाननिविषैं तौ एक देवायु ही

यपंचविंशतितत्त्वब्रह्माद्वैतचतुरार्यसत्यविज्ञानाद्वैतसर्वशून्यत्वादिप्रतिपादकागमाभासजनितं श्रुतज्ञानाभासं तत्तत्सर्वं श्रुताज्ञानमिति निश्चेतव्यं, दृष्टेष्टविरुद्धार्थविषयत्वात् ॥ ३०४ ॥

मं० प्र०—तुच्छाः-परमार्थशून्याः, असाधनीयाः-अत एव सतामनादरणीयाः आभीतासुरक्षभारतरामायणाद्युपदेशास्तत्प्रबंधाः तेषां श्रवणादुत्पन्नं यज्ज्ञानं तदिदं श्रुताज्ञानमिति ब्रुवंत्याचार्याः । आ- समंताद् भीता आभीता --चोराः, तच्छास्त्रमप्याभीतं, असुरक्षाः-चोराद्यपायेभ्यो जीवरक्षाः-तलवरा तेषां शास्त्रमासुरक्षं, कौरवपाडवीयपचभर्तृकैकभार्यावृत्तातयुद्धव्यतिकरादिचर्चाव्याकुलं भारतं, सीताहरणरामरावणीयजातिवानरराक्षसयुद्धव्यतिकरादिस्वेच्छाकल्पनाराचितं रामायणं । आदिशब्देन यदन्मिथ्यादर्शनदूषितसर्वथैकातवादिस्वेच्छाकल्पितकथाप्रबंधप्रतिपादकांशहिंसायागादिगृहस्थकर्मत्रिदंडजटाधारणादितपस्कर्मषोडशपदार्थषट्पदार्थभावनाविधिनियोगभूतचतुष्टयपचविंशतितत्त्वब्रह्माद्वैतचतुरार्यसत्याविज्ञानाद्वैतसर्वशून्यत्वादिप्रतिपादकागमाभासजनितं श्रुतज्ञानाभासं तत्तत्सर्वं श्रुताज्ञानमिति निश्चेतव्यं दृष्टेष्टविरुद्धार्थविषयत्वात् ॥ ३०४ ॥

स० चं०—आभीताः कहिए समस्तपनैं भयवान जे चौरादिक तिनिका शास्त्र सो आभीत हैं। बहुरि असु जे प्राण तिनिकी चौरादिकतैं रक्षा जिनितैं होइ ऐसे कोटपाल राजादिक तिनिका जो शास्त्र सो असुरक्ष है। बहुरि कौरव पांडवोंका युद्धादिक वा एक भार्याके पंचभर्ता इत्यादिक विपरीत कथन जिसविषैं पाइए ऐसा शास्त्र सो भारत है। बहुरि रामचंद्रकैं वानरोंकी सेना रावण राक्षस है तिनिका परस्पर युद्ध होना इत्यादिक अपनी इच्छाकरि रच्या हूवा शास्त्र सो रामायण है आदि शब्दतैं जो एकांत वादकरि दूषित अपनी इच्छाके अनुसारि रच्या हूवा शास्त्र जिनिविषैं हिंसारूप यज्ञादिक गृहस्थका कर्म है जटा धारण त्रिदंडधारणादिरूप तपस्वीका कर्म है सोलह पदार्थ हैं वा छह पदार्थ हैं वा भावनाविधि नियोग भूत ए च्यारि हैं वा पचीस तत्त्व है वा अद्वैत ब्रह्मका स्वरूप है वा सर्व शून्य है इत्यादि वर्णन पाइए है ते शास्त्र 'तुच्छाः' कहिए परमार्थतैं रहित हैं बहुरि 'असाधनीयाः' कहिए प्रमाण करने योग्य नाहीं याहीतैं संत पुरुषनिकौं आदरने योग्य नाहीं ऐसैं शास्त्राभ्यासजनित भया जो श्रुतज्ञानकीसी आभासा लीएं कुज्ञान सो श्रुत अज्ञान कहिए। जातैं प्रमाणीक इष्ट अर्थतैं विपरीत अर्थ याका विषय हो है। इहां मति श्रुत अज्ञानका वर्णन उपदेश लीएं किया है अर सामान्यपनैं तौ स्वपर भेद विज्ञानरहित इंद्रिय मन जनित जानना सो सर्व कुमति कुश्रुत है ॥ ३०४ ॥

**विवरीयमोहिणाणं खओवसमियं च कम्मबीजं च ।**
**वेभंगोत्ति पउच्चइ समत्तणाणीण समयम्हि ॥ ३०५ ॥**

विपरीतमवधिज्ञानं क्षायोपशमिक च कर्मबीजं च ।
विभंग इति प्रोच्यते समाप्तज्ञानिनां समये ॥ ३०५ ॥

जी० प्र०—मिथ्यादर्शनकलंकितस्य जीवस्य अवधिज्ञानावरणीयवीर्यांतरायक्षयोपशमजनितं द्रव्यक्षेत्रकालभावसीमाश्रितं रूपिद्रव्यविषयं विपरीतं आप्तागमपदार्थेषु विपरीतग्राहकं तिर्यग्मनुष्यगत्योः तीव्रकायक्लेशद्रव्यसंयमरूपगुणप्रत्यय, चशब्दाद्देवनारकगत्योर्भवप्रत्ययं च मिथ्यात्वादिकर्मबंधबीजं, चशब्दात् कदाचिन्नारकादिगतौ पूर्वभवदुराचारसंचितदुष्कर्मफलतीव्रदुःखवेदनाभिभवजनितसम्यग्दर्शनज्ञानरूपधर्मबीजं वा अवधिज्ञानं विभंग इति समाप्तज्ञानिनां केवलज्ञानिना समये स्याद्वादशास्त्रे प्रोच्यते कथ्यते । नारकाणां विभंगज्ञानेन वेदनाभिभवतत्कारणदर्शनस्मरणानुसंधानप्रत्ययबलात् सम्यग्दर्शनोत्पत्तिप्रतीते । विशिष्टस्य अवधिज्ञानस्य भंगः—विपर्ययः विभंग इति निरुक्तिसिद्धार्थस्यैव अनेन प्ररूपितत्वात् ॥ ३०५ ॥ अथ नवभिर्गाथाभि· स्वरूपोत्पत्तिकारणभेदविषयान् आश्रित्य मतिज्ञान प्ररूपयति[1]——

मं० प्र०—मिथ्यादर्शनकलंकितस्य जीवस्य अवधिज्ञानावरणवीर्यांतरायक्षयोपशमादुत्पन्नं द्रव्यक्षेत्रकालभावसीमाश्रित रूपिद्रव्यविषयं विपरीतं आप्तागमपदार्थेषु विपरीतग्राहकं तिर्यग्मनुष्यगत्योः तीव्रकायक्लेशद्रव्यसंयमरूपगुणप्रत्ययं, चशब्दाद्देवनारकगत्योर्भवप्रत्ययं च मिथ्यात्वादिकर्मबंधबीज, चशब्दात् कचित् नारकादौ पूर्वभवदुराचारसंचितदुष्कर्मफलतीव्रदुःखवेदनाभिभवजनितसम्यग्दर्शनज्ञानरूपधर्मबीजं चावधिज्ञानं विभंगं इति समाप्तज्ञानिनां—केवलज्ञानिनां समये प्रोच्यते नारकाणा विभंगज्ञानेन वेदनाभिभवतत्कारणदर्शनस्मरणानुसधानप्रत्ययबलात्सम्यग्दर्शनोत्पत्तिप्रतीतेः । विशिष्टस्य अवधिज्ञानस्य भगः—विपर्ययः, विभग इति निरुक्तिसिद्धार्थस्यैव अनेन प्ररूपितत्वात् ॥ ३०५ ॥ अथ नवभिर्गाथाभिः स्वरूपोत्पत्तिकारणभेदविषयानाश्रित्य मतिज्ञानं प्ररूपयति—

स० चं०—मिथ्यादृष्टी जीवनिकैं अवधिज्ञानावरण वीर्यांतरायके क्षयोपशमतैं उत्पन्न भया ऐसा द्रव्य-क्षेत्र काल भावकी मर्यादा लीएं रूपी पदार्थ है विषय जाका ऐसा आप्त आगम पदार्थनिविषैं विपरीतका ग्राहक सो विभंग नाम पावै है । वि कहिए विशिष्ट जो अवधिज्ञान ताका भंग कहिए विपरीत भाव सो वि-

[1] 'अथ स्वरूपोत्पत्तिकारणभेदविषयान् आश्रित्य गाथानवकेन मतिज्ञानमाह ।' इति घपुस्तके पाठ ।

भंग कहिए सो तिर्यंच मनुष्य गतिविषैं तौ तीव्र काय क्लेशरूप द्रव्य संयमादिककरि उपजे है सो गुण प्रत्यय हो है। बहुरि देव नरकगतिविषैं भव प्रत्यय हो है सो सब ही विभंगज्ञान मिथ्यात्वादि कर्मबंधका बीज कहिए कारण है चकारतैं कदाचित् नारकादिक गतिविषैं पूर्वभवसंबंधी दुराचारके दुःख फलकौं जानि कहीं सम्यग्दर्शन ज्ञानरूप धर्मका भी बीज हो है ऐसा विभंगज्ञान समासज्ञानी जो संपूर्ण ज्ञानी केवली तिनिके मतविषैं कह्या है ॥ ३०५ ॥ आगैं स्वरूप वा उपजनेका कारण वा भेद वा विषय इनिका आश्रयकरि मतिज्ञानका निरूपण नव गाथानिकरि कहैं हैं—

**अहिमुहणियमियबोहणमाभिणिबोहियमणिंदिइंदियजं ।**
**अवगहईहावायाधारणगा होंति पत्तेयं ॥ ३०६ ॥**

अभिमुखनियमितबोधनमाभिनिबोधिकमनिंद्रियेंद्रियजं ।
अवग्रहेहावायधारणका भवंति प्रत्येकं ॥ ३०६ ॥

जी० प्र०—स्थूलवर्तमानयोग्यदेशावस्थितोऽर्थः अभिमुखः, अस्येंद्रियस्य अयमेवार्थः इत्यवधारितो नियमितः। अभिमुखश्चासौ नियमितश्चासौ अभिमुखनियमितः। तस्यार्थस्य बोधनं ज्ञानं आभिनिबोधिकं मतिज्ञानमित्यर्थः। अभिनिबोध एव आभिनिबोधिकमिति स्वार्थिकेन ठण्प्रत्ययेन सिद्धं भवति। स्पर्शनादींद्रियाणां स्थूलादिष्वेव स्पर्शादिषु स्वार्थेषु ज्ञानजननशक्तिसंभवात्। सूक्ष्मांतरितदूरार्थेषु परमाणुशंखचक्रवर्तिमेर्वादिषु तेषां ज्ञानजननशक्तिर्न संभवतीत्यर्थः। अनेन मतिज्ञानस्य स्वरूपमुक्तं। कथंभूतं तत्? अनिंद्रियेंद्रियजं—अनिंद्रियं मनः, इंद्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि। तेभ्यः जातमुत्पन्नं अनिंद्रियेंद्रियजं, अनेन इंद्रियमनसोर्मतिज्ञानोत्पत्तिकारणत्वं दर्शितं। एवं च कारणभेदात्कार्यभेद इति मतिज्ञानं षट्प्रकारमुक्तं। पुनः प्रत्येकमेकैकस्य मतिज्ञानस्य अवग्रहः ईहा अवायः धारणा चेति चत्वारो भेदा भवंति। तद्यथा—मानसोऽवग्रहः मानसीहा मानसोवायः मानसी धारणा इति चत्वारः। स्पर्शनजोऽवग्रहः, स्पर्शनजा ईहा स्पर्शनजोवायः स्पर्शनजा धारणा। रसनजोऽवग्रहः रसनजा ईहा रसनजोऽवायः रसनजा धारणा। घ्राणजोऽवग्रहः घ्राणजा ईहा घ्राणजोवायः घ्राणजा धारणा ४। चाक्षुषोऽवग्रहः चाक्षुषीहा चाक्षुषोवायः चाक्षुषी धारणा ४। श्रोत्रजोऽवग्रहः श्रोत्रजा ईहा श्रोत्रजोऽवायः श्रोत्रजा धारणा। एवं मतिज्ञानं चतुर्विंशतिविकल्पं भवति अवग्रहादीनां लक्षणं उत्तरत्र ग्रंथकारः स्वयमेव वक्ष्यति॥ ३०६ ॥

मं० प्र०—स्थूलवर्तमानयोग्यदेशावस्थितोऽर्थः अभिमुखः । अस्येंद्रियस्यायमर्थ इत्यवधारितो नियमितः । अभिमुखश्चासौ नियमितश्चासौ अभिमुखनियमितः । तस्यार्थस्य बोधनं–ज्ञानं, आभिनिबोधिकं मतिज्ञानमित्यर्थः । अभिनिबोध एव आभिनिबोधिकमिति स्वार्थिकेन ठण्प्रत्ययेन सिद्धं । स्पर्शनादींद्रियाणां स्थूलादिष्वेव स्पर्शादिषु स्वार्थेषु ज्ञानजननशक्तिसंभवात् । सूक्ष्मांतरितदूरार्थेषु परमाणुशंखचक्रवर्तिमेर्वादिषु तेषां ज्ञानजननशक्त्यसंभवात् । अनेन मतिज्ञानस्य स्वरूपमुक्तं । कथंभूतं तत् ? अनिंद्रियेंद्रियजं–अनिंद्रियं–मनः, इंद्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि तेभ्यो जातं–उत्पन्नं । अनेन इंद्रियमनसोर्मतिज्ञानोत्पत्तिकारणत्वं दर्शितं । एवं च कारणभेदात्कार्यभेद इति मतिज्ञानं षट्प्रकारमुक्तं । पुनः प्रत्येकमेकैकस्य मतिज्ञानस्य अवग्रहः, ईहा अवायः धारणा चेति चत्वारो भेदा भवंति । तद्यथा—मानसोऽवग्रहः मानसीहा मानसोऽवायः मानसी धारणा । ४ । स्पर्शनजोवग्रहः स्पर्शनजा ईहा स्पर्शनजोऽवायः स्पर्शनजा धारणा । ४ । रसनजोऽवग्रहः रसनजा ईहा रसनजोऽवायः रसनजा धारणा । ४ । घ्राणजोऽवग्रहः घ्राणजा ईहा घ्राणजोऽवायः घ्राणजा धारणा । ४ । चाक्षुषोऽवग्रहः चाक्षुषी ईहा चाक्षुषोऽवायः चाक्षुषी धारणा । ४ । श्रोत्रजोऽवग्रहः श्रोत्रजा ईहा श्रोत्रजोऽवायः श्रोत्रजा धारणा ।४। एवं मतिज्ञानं चतुर्विंशतिविकल्पं भवति अवग्रहादीनां लक्षणमुत्तरत्र ग्रंथकारः स्वयमेव वक्ष्यति ॥ ३०६ ॥

स० चं०—स्थूलवर्तमान जिस क्षेत्रविषैं इंद्रियमनकी प्रवृत्ति होइ तहां तिष्ठता ऐसा जो इंद्रिय मनके ग्रहण योग्य पदार्थ सो अभिमुख कहिए बहुरि इस इंद्रियका यहु ही विषय है ऐसा नियमरूप जो पदार्थ सो नियमित कहिए ऐसैं पदार्थका जो जानना सो अभिनिबोध कहिए । अभि कहिए अभिमुख अर 'नि' कहिए नियमित जो अर्थ ताका निबोध कहिए जानना ऐसा आभिनिबोध सोई आभिनिबोधिक है इहां स्वार्थविषैं ठण् प्रत्यय आया है सो यह आभिनिबोधिक मतिज्ञानका नाम जानना । इंद्रियनिकैं स्थूल रूप स्पर्शादिक अपने विषयके ज्ञान उपजावनेकी शक्ति है बहुरि सूक्ष्म अंतरित दूर पदार्थके ज्ञान उपजावनेकी शक्ति नाहीं है । तहां सूक्ष्म पदार्थ तौ परमाणु आदिक, अंतरित पदार्थ अतीत अनागत काल संबंधी, दूर पदार्थ मेरु गिरि स्वर्ग नरक पटल आदि दूर क्षेत्रवर्ती जानने ऐसैं मतिज्ञानका स्वरूप कह्या है । सो मतिज्ञान कैसा है ? अनिंद्रिय जो मन अर इंद्रिय स्पर्शन रसन घ्राण चक्षु श्रोत्र इनिकरि उपजै है । मतिज्ञान उपजनेके कारण इंद्रिय अरु मन हैं । कारणके भेदतैं कार्यविषैं भी भेद कहिए तातैं मतिज्ञान छह प्रकार है तहां एक एकके च्यारि च्यारि भेद हैं अवग्रह ईहा अवाय धारणा । सो मनतैं वा स्पर्शनतैं वा रसनातैं वा घ्राणतैं वा चक्षुतैं वा श्रोत्रतैं ए अवग्रहादि च्यारि

च्यारि उत्पन्न होंइ तातैं चौबीस भेद भए। अवग्रह ईहा अवाय धारणाका लक्षण शास्त्र कर्ता आगैं स्वयमेव कहैगा।

## वेंजणअत्थअवग्गहभेदा हु हवंति पत्तपत्तत्थे।
## कमसो ते वावरिदा पढमं ण हि चक्खुमणसाणं ॥३०७॥

व्यंजनार्थावग्रहभेदौ हि भवतः प्राप्ताप्राप्तार्थे।
क्रमशस्तौ व्यापृतौ प्रथमो नहि चक्षुर्मनसोः ॥ ३०७ ॥

जी० प्र०—मतिज्ञानविषयो द्विविधः व्यंजनं अर्थश्चेति। तत्र इद्रियैः प्राप्तो विषयः व्यजनं तैरप्राप्तः अर्थः। तयोः प्राप्ताप्राप्तयोरर्थयोः क्रमशः यथासख्य व्यंजनार्थावग्रहभेदौ तौ व्यापृतौ प्रवृत्तौ भवतः। इंद्रियैः प्राप्तार्थविशेषग्रहणं व्यंजनावग्रहः। तैरप्राप्तार्थविशेषग्रहणं अर्थावग्रह इत्यर्थः। व्यंजनं—अव्यक्तं शब्दादिजातं इति तत्त्वार्थविवरणेषु प्रोक्तं कथमनेन व्याख्यानेन सह संगतमिति चेदुच्यते विगतं—अंजनं—अभिव्यक्तिर्यस्य तद्व्यजनं। व्यज्यते म्रक्ष्यते प्राप्यते इति व्यंजनं अंजु गतिव्यक्तिम्रक्षणेष्विति व्यक्तिम्रक्षणार्थयोर्ग्रहणात्। शब्दाद्यर्थः श्रोत्रादींद्रियेण प्राप्तोऽपि यावन्नाभिव्यक्तस्तावद् व्यंजनमित्युच्यते एकवारजलकणसिक्तनूतनशरावत्। पुनरभिव्यक्तौ सत्यां स एवार्थो भवति। यथा पुनः पुनर्जलकणसिच्यमाननूतनशरावः अभिव्यक्तसेको भवति। अतः कारणात् चक्षुर्मनसोऽप्राप्ते विषये प्रथमो व्यंजनावग्रहो नास्ति। चक्षुर्मनसी स्वविषयमर्थं प्राप्यैव तत्र ज्ञान जनयतः, इति नैयायिकादीनां मतं स्याद्वादतर्कग्रंथेषु बहुधा निराकृतमित्यत्राहेतुवादे आगमांशे नोपक्रम्यते। व्यजनरूपे विषये स्पर्शनरसनघ्राणश्रोत्रैः चतुर्भिरिंद्रियैः अवग्रह एक एवोत्पद्यते नेहादयः। ईहादीनां ज्ञान नां देशसर्वाभिव्यक्तौ सत्यामेव उत्पत्तिसंभवात्। तदा तद्विषयस्य अव्यक्तरूपव्यंजनत्वाभावात्। इति व्यजनावग्रहाश्चत्वार एव ॥ ३०७ ॥

मं० प्र०—मतिज्ञानाविषयो द्विविध—व्यंजनमर्थश्चेति। तत्र इंद्रियैः प्राप्तो विषयो व्यजनं। तैरप्राप्तोऽर्थः। तयो. प्राप्ताप्राप्तयोरर्थयोः क्रमशः—यथासंख्यं व्यंजनार्थावग्रहभेदौ तौ व्यापृतौ प्रवृत्तौ भवतः। इंद्रियैः प्राप्तार्थविशेषग्रहणं व्यंजनावग्रहः। तैरप्राप्तार्थविशेषग्रहणमर्थावग्रहः इत्यर्थः। व्यंजनमव्यक्त शब्दादिजात इति तत्त्वार्थविवरणेषु प्रोक्तं कथमनेन व्याख्यानेन सह सगतमिति चेदुच्यते—विगतमंजनं—अभिव्यक्तिर्यस्य तद् व्यंजनं। व्यज्यते—म्रक्ष्यते प्राप्यते इति व्यंजनं इति च व्यक्तिम्रक्षणयोर्ग्रहणात्। शब्दादिकं श्रोत्रादिना इंद्रियेण प्राप्तमपि यावत् नाभिव्यक्तं तावदेव व्यजनमित्युच्यते एकवारजलकणसिक्तनूतनशरावत्। पुनरभिव्यक्तौ सत्या तदेवार्थो भवति यथा पुनः पुनर्जलकणसिच्यमाननूतनशरावोऽभिव्यक्तसेको भवति अत कारणात् चक्षुर्मनसोरप्राप्ते विषये प्रथमो

व्यजनावग्रहो नास्ति । चक्षुर्मनश्च स्वविषयमर्थं प्राप्यैव तत्र ज्ञानं जनयत इति नैयायिकादीनां मतं स्याद्वादतर्कशास्त्रेषु बहुधा निराकृतमित्यत्राहेतुवादे आगमाशे न प्रक्रम्यते । व्यंजने विषये स्पर्शनरसनघ्राणचक्षुःश्रोत्रैश्चतुर्भिरिंद्रियैरवग्रह एक एवोत्पद्यते नेहादयः, ईहादीनां ज्ञानानां देशसर्वाभिव्यक्तौ सत्यामेवोत्पत्तिसंभवात् तत्काले तद्विषयस्य अव्यक्तरूपव्यंजनत्वाभावात् इति व्यजनावग्रहाश्चत्वार एव ॥ २०७ ॥

स० चं०—मतिज्ञानका विषय दोय प्रकार एक व्यंजन एक अर्थ । तहां जो विषय इंद्रियनिकरि प्राप्त होइ स्पर्शित होइ सो व्यंजन कहिए । जो प्राप्त न होइ सो अर्थ कहिए । तिनिका विशेष ग्रहणरूप व्यंजनावग्रह अर अर्थावग्रह भेद प्रवर्तै है। इहां प्रश्न—जो तत्त्वार्थ सूत्रकी टीकाविषैं तौ अर्थ ऐसा कीया है जो व्यंजन नाम अव्यक्त शब्दादिकका है इहां प्राप्त अर्थकौं व्यंजन कह्या सो कैसैं है? ताका समाधान—व्यंजन शब्दके दोऊ अर्थ हो हैं 'विगतं अंजनं व्यंजनं' दूरि भया है अंजन कहिए व्यक्तभाव जाकैं सो व्यंजन कहिए । सो तत्त्वार्थ सूत्रकी टीकाविषैं तौ इस अर्थका मुख्य ग्रहण कीया है 'अर व्यज्यते म्रक्ष्यते प्राप्यते इति व्यंजनं' जो प्राप्त होइ ताकौं व्यंजन कहिए सो इहां यहु अर्थ मुख्य ग्रहण कीया है जातैं अंजु धातु गति व्यक्ति म्रक्षण अर्थविषैं प्रवर्तै है तातैं व्यक्ति अर्थका अर म्रक्षण अर्थका ग्रहण करनेतैं कर्णादिक इंद्रियनिकरि शब्दादिक अर्थ प्राप्त हूवे भी यावत् व्यक्त न होइ तावत् व्यंजनावग्रह है व्यक्त भएं अर्थावग्रह हो है जैसैं नवा माटीका शरावा जलकी बूंदनिकरि सीचिए तहां एक दोय बार आदि जलकी बूंद परैं व्यक्त न होइ शोषित होइ जाय बहुतवार जलकी बूंद परैं व्यक्त होइ तैसैं कर्णादिककरि प्राप्त हूवा जो शब्दादिक तिनिका यावत् व्यक्तरूप ज्ञान न होइ जो मैंने शब्द सुन्या ऐसा व्यक्त ज्ञान न होइ तावत् व्यंजनावग्रह कहिए । बहुरि बहुत समय पर्यंत इंद्रिय अर विषयका संयोग रहैं व्यक्तरूपज्ञान भएं अर्थावग्रह कहिए बहुरि नेत्र इंद्रिय अर मन ए दूरहीतैं पदार्थकौं जानैं हैं तातैं इनि दोऊनिकैं व्यंजनावग्रह नाहीं अर्थावग्रह ही है । इहां प्रश्न -जैसैं कर्णादिककरि दूरितैं शब्दादिक जानिए है तैसैं ही नेत्रकरि वर्ण जानिए है, वाकौं प्राप्त कह्या अर याकौं अप्राप्त कह्या सो कैसैं हैं ? ताका समाधान-दूरि जो शब्द हो है ताकौं यहु नाहीं जानैं है जो दूरि भया शब्द ताके निमित्ततैं आकाशविषैं जे अनेक स्कंध तिष्ठै हैं ते शब्दरूप परिणए है तहां कर्ण

इंद्रियके समीपवर्ती भी स्कंध शब्दरूप परिणए हैं सो तिनिका कर्ण इंद्रियकरि स्पर्श भया है तब शब्दका ज्ञान हो है। ऐसें ही दूरि तिष्ठता सुगंध दुर्गंध वस्तुके निमित्ततैं पुद्गल स्कंध तत्काल तद्रूप परिणवे हैं तहां जो नासिका इंद्रियके समीपवर्ती स्कंध परिणए हैं तिनिके स्पर्शतैं गंधका ज्ञान हो है ऐसें ही अग्न्यादिकके निमित्ततैं पुद्गल स्कंध उष्णादिरूप परिणवे हैं तहां जो स्पर्शन इंद्रियके समीपवर्ती स्कंध परिणए हैं तिनिके स्पर्शतैं स्पर्श ज्ञान हो है ऐसें ही आम्लादि वस्तुके निमित्ततैं स्कंध तद्रूप परिणवे है तहां रसना इंद्रियके समीपवर्ती जो स्कंध परिणए तिनिके संयोगतैं रसका ज्ञान हो है। बहुरि यहु श्रुतज्ञानके बलकरि जाके निमित्ततैं शब्द आदि भए ताकौं जानि ऐसा मानैं है कि मैं दूर वर्ती वस्तुकौं जान्या ऐसें दूरवर्ती वस्तुके जाननेविषैं भी प्राप्त होना सिद्ध भया अर समीपवर्तीकौं तो प्राप्त होकर जानैं ही है। इहां शब्दादिक परमाणु अर कर्णादिक इंद्रिय परस्पर प्राप्त होंइ अर यावत् जीवकैं व्यक्त ज्ञान न होइ तावत् व्यंजनावग्रह है व्यक्तज्ञान भएं अर्थावग्रह हो है। बहुरि मन अर नेत्र दूरिहीतैं जानैं हैं ऐसा नाहीं जो शब्दादिककी ज्यों जानैं तातैं पदार्थ तो दूरि तिष्ठै है ही जब इननैं ग्रहै तब व्यक्त ही ग्रहै तातैं व्यंजनावग्रह इनि दोऊनिकैं नाहीं अर्थावग्रह ही है। उक्तं च—

पुट्ठं सुणेदि सद्दं अपुट्ठं पुण पस्सदे रूवं।
गंधं रसं च फासं बद्धं पुट्ठं वियाणादि ॥ १ ॥

बहुरि नैयायिकमतवाले ऐसा कहैं हैं--मन अर नेत्र भी प्राप्त होइकरि ही वस्तुकौं जानैं हैं ताका निराकरण जैन न्यायके शास्त्रनिविषैं अनेक प्रकार कीया है। बहुरि व्यंजन जो अव्यक्त शब्दादिक तिनिविषैं स्पर्शन रसन घ्राण श्रोत्र इंद्रियनिकरि केवल अवग्रह हो है ईहादिक न हो हैं जातैं ईहादिक तो एकदेश वा सर्वदेश व्यक्त भएं ही हो हैं। व्यंजन नाम अव्यक्तका है तातैं च्यारि इंद्रियनिकरि व्यंजनावग्रहके च्यारि भेद हैं ॥ ३०७ ॥

**विसयाणं विसईणं संजोगाणंतरं हवे णियमा।**

# अवगहणाणं गहिदे विसेसकंखा हवे ईहा ॥ ३०८ ॥

विषयाणां विषयिणां संयोगानंतरं भवेन्नियमात्।
अवग्रहज्ञानं गृहीते विशेषाकांक्षा भवेदीहा ॥ ३०८ ॥

जी॰ प्र०—विषयाणां-अर्थानां, विषयिणां इंद्रियाणां च संयोगः-योग्यदेशावस्थानरूपसंबंधः तस्मिन् जाते सति अनंतरं-तदनंतरमेव वस्तुसत्तामात्रलक्षणसामान्यस्य निर्विकल्पग्रहणमिदमिति प्रकाशरूपं दर्शनं नियमादुत्पद्यते-नियमाज्जायते। अनंतरं तदनंतरं दृष्टस्यार्थस्य वर्णसंस्थानादिविशेषग्रहणरूपं अवग्रहाख्यं आद्य ज्ञानं भवेत् उत्पद्यते। 'अक्षार्थयोगे सत्तालोकोर्थाकारविकल्पधी· अवग्रह' इति श्रीमद्भट्टाकलंकपादैः, 'दर्शनपूर्वकं ज्ञानं छद्मस्थानां' इति श्रीनेमिचंद्रसैद्धांतचक्रवर्तिभिरपि प्रोक्तत्वात्, इंद्रियार्थसंबंधानंतरं दर्शनमुत्पद्यते इत्येतस्मिन् गाथासूत्रे अनुक्तमपि पूर्वाचार्यवचनानुसारेण व्याख्यानं ग्राह्यं। गृहीते-अवग्रहेण इदं श्वेतमिति ज्ञाते अर्थविशेषस्य बलाकारूपस्य पताकारूपस्य वा यथावस्थितस्य आकांक्षा बलाकया भवितव्यमिति भवितव्यताप्रत्ययरूपा बलाकायामेव संजायमाना ईहाख्यं द्वितीयं ज्ञानं भवेत्। अथवा पताकारूपं विषयमालंब्य उत्पद्यमाना अनया पताकया भवितव्यमिति भवितव्यताप्रत्ययरूपा पताकायामेव संजायमाना आकांक्षा ईहेति द्वितीयं ज्ञानं भवेत्। एवं इंद्रियांतरविषयेषु मनोविषये च अवग्रहगृहीते यथावस्थितस्य विशेषस्य आकांक्षारूपा ईहेति निश्चेतव्यं। मतिज्ञानावरणक्षयोपशमस्य तारतम्यभेदेन अवग्रहेहाज्ञानयोर्भेदसंभवात्। अस्मिन् सम्यग्ज्ञानप्रकरणे बलाका वा पताका इति संशयस्य, बलाकायां पताकया भवितव्यमिति विपर्ययस्य च मिथ्याज्ञानस्यानवतारात् ॥ ३०८ ॥

मं॰ प्र०—विषयाणा,अर्थाना, विषयिणां इंद्रियाणां च संयोगः-योग्यदेशावस्थानरूपः संबंधः। तस्मिन् सति तदनंतरमेव वस्तुसत्तामात्रलक्षणसामान्यस्य निर्विकल्पग्रहणमिदमिति प्रकाशरूप दर्शनं नियमादुत्पद्यते, तदनतरं दृष्टस्यार्थस्य वर्णसंस्थानादिविशेषग्रहणरूपमवग्रहाख्यमाद्यं ज्ञानं भवेत्—उत्पद्यते। अक्षार्थयोगे सत्तालोकोऽर्थाकारविकल्पधीः अवग्रह इति श्रीमद्भट्टाकलंकपादैः 'दर्शनपूर्वकं ज्ञानं छद्मस्थानामिति' श्रीनेमिचंद्रसैद्धांतचक्रवर्तिभिरपि प्रोक्तत्वात् इंद्रियार्थसंबंधानंतर दर्शनमुत्पद्यते इत्येतस्मिन् गाथासूत्रे अनुक्तमपि पूर्वाचार्यवचनानुसारेण व्याख्यातं ग्राह्यं। गृहीते अवग्रहेण इदं श्वेतमिति ज्ञाते अर्थे विशेषस्य बलाकारूपस्य पताकारूपस्य वा यथावस्थितस्य आकांक्षा बलाकया भवितव्यमिति भवितव्यताप्रत्ययरूपा बलाकायामेव संजायमाना ईहाख्यं द्वितीयं ज्ञानं भवेत्। अथवा पताकारूपविषयमालंब्य उत्पद्यमाना अनया पताकया भवितव्यमिति भवितव्यताप्रत्ययरूपा आकांक्षा ईहानाम द्वितीयं ज्ञानं भवेत्। एवमिंद्रियांतरविषयेषु मनोविषये च अवग्रहगृहीते यथावस्थितस्य विशेषस्य आकांक्षारूपा ईहेति निश्चेतव्यं। मतिज्ञानावरणक्षयोपशमस्य तारतम्यभेदेन अवग्रहेहाज्ञानयोर्भेदसंभवात्, अस्मिन् सम्यग्ज्ञानप्रकरणे बलाका वा पताका वा इति संशयस्य बलाकायां पताकया भवितव्यमिति विपर्ययस्य च मिथ्याज्ञानस्यानवतारात् ॥३०८॥

स० चं०----विषय जो शब्दादिक पदार्थ अर विषयी जे कर्णादिक इंद्रियां इनिका जो संयोग कहिये योग्य क्षेत्रविषैं तिष्ठनेरूप संबंध ताकौं होतैं संतैं ताके अनंतर ही वस्तुका सत्तामात्र निर्विकल्प ग्रहण जो यहु है इतना प्रकाशरूप सो दर्शन नियमकरि हो है। ताके अनंतर पीछै ही देख्या जो पदार्थ ताके वर्ण संस्थानादि विशेष ग्रहणरूप अवग्रह नामा ज्ञान हो है। इहां प्रश्न--जो गाथाविषैं तौ पहिलैं दर्शन न कह्या तुम कैसैं कहो हो? ताका समाधान--जो अन्य ग्रंथनिमैं कह्या है--'अक्षार्थयोगे सत्तालोकोर्थाकारविकल्पधीरवग्रहः' इंद्रिय अर विषयके संयोग होतैं प्रथम सत्तावलोकनमात्र दर्शन हो है पीछैं पदार्थका आकार विशेष जाननेरूप अवग्रह हो है ऐसा अकलंकाचार्यकरि कह्या है बहुरि "दंसणपुव्वं णाणं छद्मत्थाणं हवेदि णियमेण' छद्मस्थ जीवनिकै नियमतै दर्शन पूर्वक ही ज्ञान हो है ऐसा नेमिचंद्राचार्यने द्रव्यसहनामा ग्रंथमें कह्या है। बहुरि तत्त्वार्थ सूत्रकी टीकावालेनैं ऐसा कह्या है तातैं इहां ज्ञानाधिकारविषैं दर्शनका कथन न कीया तौ भी अन्यग्रंथनितैं ऐसैं ही जानना। सो अवग्रहकरि तौ इतना ग्रहण भया जो यहु श्वेत वस्तु है बहुरि श्वेत तौ बुगलनिकी पंक्ति भी हो है अर ध्वजा भी हो है परि बुगलेनिकी पंकतिरूप विषयकौं अवलंबि यहु बुगलेनिकी पंकति ही होसी वा ध्वजारूप विषयकौं अवलंबि यहु ध्वजा होसी ऐसा विशेष वांछारूप जो ज्ञान ताकौं ईहा कहिए। बहुरि बुगलनिकी यहु पंकति होसी कि ध्वजा होसी ऐसा संशयरूप ज्ञानका नाम ईहा नाही है। वा बुगलनिकी पंकतिविषैं यहु ध्वजा होसी ऐसा विपर्यय ज्ञानका नाम ईहा नाही है जातैं इहां सम्यग्ज्ञानका अधिकार है सम्यग्ज्ञान प्रमाण है अर संशय विपर्यय है सो मिथ्याज्ञान है तातैं संशय विपर्ययका नाम ईहा नाही। जो वस्तु है ताका यथार्थरूप ऐसा ज्ञान करना कि यहु अमुक ही वस्तु होसी ऐसैं होसीरूप जो प्रतीति ताका नाम ईहा है। अवग्रहतैं ईहाविषैं विशेष ग्रहण भया तातैं याके वाकेविषैं मतिज्ञानवरणके क्षयोपशमका तारतम्यकरि भेद जानना॥ ३०८॥

**ईहणकरणेण जदा सुणिण्णओ होदि सो अवाओ दु।**

## कालांतरेवि णिण्णिदवत्थुसमरणस्स कारणं तुरियं ॥ ३०९

ईहनकरणेन यदा सुनिर्णयो भवति स अवायस्तु ।
कालांतरेऽपि निर्णीतवस्तुस्मरणस्य कारणं तुर्यं ॥ ३०९ ॥

जी० प्र०—ईहनकारणेन-विशेषाकांक्षाक्रियायाः पश्चात् यदा ईहितविशेषार्थस्य सुनिर्णयः उत्पतनपतनपक्षविक्षेपादिभिश्चिन्हैः इयं बलाकैवेति बलाकात्वस्य यः सुनिश्चयो भवेत् तदा स अवाय इति व्यपदिश्यते । तुशब्दः प्रागाकांक्षितविशेषस्यैव सुनिर्णयोऽवाय इत्यवधारणार्थः । अनेन विपर्यासेन निर्णयो मिथ्याज्ञानतया अवायो न भवतीति ग्राह्यं ततः स एवावायः पुनः पुनः प्रवृत्तिरूपाभ्यासजनितसंस्कारात्मको भूत्वा कालांतरेऽपि निर्णीतवस्तुस्मरणकारणत्वेन तुर्यं चतुर्थं धारणाख्यं ज्ञान भवति ॥ ३०९ ॥

मं० प्र०—ईहनकरणात्-विशेषाकाङ्क्षाक्रियायाः, पश्चात् यदा ईहितविशेषस्य सुनिर्णयः उत्पतनपतनपक्षविक्षेपादिभिश्चिह्नैरियं बलाकैवेति बलाकात्वस्य यः सुनिश्चयो भवेत् तदा स अवाय इति व्यपदिश्यते । तुशब्दः प्रागाकाक्षितविशेषस्यैव सुनिर्णयोऽवाय इत्यवधारणार्थः । अनेन विपर्यासेन निर्णयो मिथ्याज्ञानतया अवायो न भवतीति ग्राह्यं । ततः स एव अवायः पुनः पुनः प्रवृत्तिरूपाभ्यासजानितसस्कारात्मकः सन् कालांतरेऽपि निर्णीतवस्तुस्मरणकारणत्वेन तुर्यं धारणाख्यं चतुर्थज्ञानं भवति ॥ ३०९ ॥

स० चं०—ईहाके करनेकरि ताके पीछैं जिस वस्तुकी ईहा भई थी ताका भलेप्रकार निर्णय रूप जो ज्ञान ताकौं अवाय कहिए। जैसैं पांखनिका हलावना आदि चिह्नकरि यहु निश्चय कीया जो बुगलनिकी पंकतिही है निश्चयकरि और किछू नाहीं ऐसा निर्णयका नाम अवाय है। तुशब्दकरि पूर्वे जो ईहाविषैं वांछित वस्तु था ताहीका भले प्रकार निर्णय सो अवाय है। बहुरि जो वस्तु किछू और है अर और ही वस्तुका निश्चयकरि लीया है तो वाका नाम अवाय नाहीं वह मिथ्याज्ञान है। बहुरि वहां पीछैं बार बार निश्चयरूप अभ्यासतैं उपज्या जो संस्कार तींहि स्वरूप होइ केते इक कालकौं व्यतीत भएं भी यादि आवनेकौं कारणभूत जो ज्ञान सो धारणा नाम चौथा ज्ञानका भेद हो है ऐसैं ही सर्व इंद्रिय वा मन संबंधी अवग्रह ईहा अवाय धारणा भेद जानने ॥३०९॥

## बहु बहुविहं च खिप्पाणिस्सिदणुत्तं धुवं च इदरं च ।

# तत्थेक्के जादे छत्तीसं तिसयभेदं तु ॥ ३१० ॥

बहु बहुविधं च क्षिप्रानिःसृदनुक्तं ध्रुवं च इतरच्च ।
तत्रैकैकस्मिन् जाते षट्त्रिंशत्त्रिशतभेदं तु ॥ ३१० ॥

जी० प्र०—अर्थो व्यंजनं वा मतिज्ञानविषयः बहु. बहुविधः क्षिप्र. अनिसृतः अनुक्त ध्रुवश्चेति षोढा । तथा इतरोऽपि एकः एकविधः अक्षिप्रः निसृत उक्त अध्रुवश्चेति षोढा एवं द्वादशधा भवति। तत्र द्वादशस्वपि एकैकस्मिन् विषये प्रागुक्ताष्टाविंशतिप्रकारे मतिज्ञाने जाते-उत्पन्ने सति मतिज्ञान तु पुनः षट्त्रिंशदुत्तरत्रिशतभेदं भवति ३३६ । तद्यथा--बहुविषये अर्थात्मके अनिन्द्रियेंद्रियभेदेन मतिज्ञानस्य भेदाः षट्, त एव पुनः अवग्रहेहावायधारणाभेदेन प्रत्येकं चत्वारश्चत्वारो भूत्वा चतुर्विंशतिः । तथा व्यंजनात्मके तु स्पर्शनरसनघ्राण-चक्षुःश्रोत्रैश्चत्वारोऽवग्रहा एव । एवमर्थव्यंजनात्मके बहुविषये मिलित्वा मतिज्ञानभेदा अष्टाविंशतिर्भवंति । अनेन प्रकारेण अर्थव्यंजनात्मक-बहुविधादिष्वपि प्रत्येकमष्टाविंशत्यष्टाविंशतिज्ञानभेदेषु जातेषु द्वादशविषयेषु मतिज्ञानभेदाः षट्त्रिंशदुत्तरत्रिशतीप्रमिता भवंति । यद्येकस्मिन्विषये अष्टाविंशतिर्मतिज्ञानभेदा भवंति तदा द्वादशसु विषयेषु कियंतो मतिज्ञानभेदा भवंतीति प्र १ । फ १८ । इ १२ त्रैराशिकं कृत्वा इच्छां फलेन संगुण्य प्रमाणेन भक्त्वा लब्धस्य तत्प्रमाणत्वात् ॥ ३१० ॥

म० प्र०—अर्थस्य व्यंजनस्य च मतिज्ञानविषयस्य द्वादश भेदा भवति—बहुर्बहुविधः क्षिप्रः अनिसृतः अनुक्तः ध्रुवश्चेति षट् । तदितरे च एकः एकविध. अक्षिप्र· निसृतः उक्तः अध्रुवश्चेति षट् । तत्र—तेषु बह्वादिषु विषयेषु एकैकस्मिन् विषये प्रागुक्ताष्टाविंशतिप्रकारे मतिज्ञाने जाते—उत्पन्ने सति मतिज्ञानं तु—पुनः षट्त्रिंशदुत्तरत्रिशतभेदं भवति । तद्यथा—बहौ विषये अर्थात्मके पंचभ्य इन्द्रियेभ्यः मनसश्च प्रत्येकमवग्रहेहावायधारणाख्या मतिज्ञानभेदा-श्चत्वारः, इतींद्रियानिंद्रियेभ्यः सपिंडिताश्चतुर्विंशतिरुत्पद्यंते । तथा व्यंजनात्मके बहौ विषये स्पर्शनरसनघ्राणश्रोत्राख्येंद्रियचतुष्कात् चत्वारोऽवग्रहा एव जायते इति बहौ विषये मिलित्वा मतिज्ञानभेदाः अष्टाविंशतिर्भवति । एवं बहुविधादिषु पंचसु तदितरेषु च षट्सु विषयेषु प्रत्येकमष्टाविंशतिमतिज्ञानभेदा जायते इत्यष्टाविंशत्या द्वादशसु विषयभेदेषु गुणितेषु सर्वे मतिज्ञानभेदाः षट्त्रिंशदुत्तरात्रिशतीप्रमिता भवति । ३३६ । यद्येकस्मिन् विषये प्र १, अष्टाविंशतिमतिज्ञानभेदा भवति फ २८ । तदा द्वादसु विषयेषु इ १२ कियंतो भवंतीति त्रैराशिकेन लब्धा मतिज्ञानभेदाः ॥ ३१० ॥

स० चं०—अर्थरूप वा व्यंजनरूप जो मतिज्ञानका विषय ताके बारह भेद हैं--बहु १ बहुविध १ क्षिप्र १ अनिसृत १ अनुक्त १ ध्रुव १ ए छह बहुरि इतर जे छहौं इनके प्रतिपक्षी एक एकविध अक्षिप्र निसृत उक्त अध्रुव ए छह ऐसैं बारह भेद जानने सो व्यंजनावग्रहके च्यारि इंद्रियनि करि च्यारि भेद भए अर अर्थके अवग्रह ईहा

अवाय धारणातैं पंच इंद्रिय छठा मन करि चौबीस भेद भए मिलाएं ते अठाईस भेद भए सो व्यंजन रूप बहु विषयका च्यारि इंद्रियनिकरि अवग्रह हो है सो च्यारि भेद तौ ए भए अर अर्थ रूप बहुविषयका पंच इंद्रिय छठा मनकरि गुणैं अवग्रह ईहा अवाय धारणा हो हैं तातैं चौबीस भए। ऐसैं एक बहुविषय संबंधी अठाईस भेद भए। ऐसैं ही बहुविध आदि भेदनिविषैं अठाईस अठाईस भेद हो हैं। सबकौं मिलाएं बारह विषयनिविषैं मतिज्ञान के तीनसै छत्तीस भेद हो हैं जो एक विषयविषैं अठाईस भेद होइ तौ बारह विषयनिविषैं केते होंहि ऐसैं त्रैराशिक कीएं लब्धराशिमात्र तीनसै छत्तीस मतिज्ञानके भेद हो हैं ॥ ३१० ॥

**बहुवत्तिजादिगहणे बहुबहुविहमियरमियरगहणम्हि।**
**सगणामादो सिद्धा खिप्पादी सेदरा य तहा ॥ ३११ ॥**

बहुव्यक्तिजातिग्रहणे बहुबहुविधमितरदितरग्रहणे।
स्वकनामतः सिद्धाः क्षिप्रादयः सेतराश्च तथा ॥ ३११ ॥

जी० प्र०— बहुव्यक्तीनां ग्रहणे मतिज्ञाने तद्विषयो बहुरित्युच्यते यथा खंडमुंडशवलादिबहुगोव्यक्तयः। बहुजातीनां ग्रहणे मतिज्ञाने तद्विषयो बहुविध इत्युच्यते यथा गोमहिषाश्वादिबहुजातयः इति। इतरग्रहणे एकव्यक्तिग्रहणे मतिज्ञाने तद्विषय एकः यथा खंडेयमिति। एकजातिग्रहणे मतिज्ञाने तद्विषय एकविधः यथा खंडो वा मुडो वा गौरिति। क्षिप्रादयः क्षिप्रानिसृतानुक्तध्रुवाः स्वेतरे च अक्षिप्रनिसृतोक्त ध्रुवाश्च स्वस्वनामत एव सिद्धाः। तथाहि क्षिप्रः शीघ्रपतज्जलधाराप्रवाहादिः। अनिसृतः गूढः जलमग्नहस्त्यादिः। अनुक्तः- अकथितः अभिप्रायगतः। ध्रुवः स्थिरः चिरकालावस्थायी पर्वतादिः। अक्षिप्रः मंदं गच्छन्नश्वादिः। निसृतः व्यक्तनिष्क्रांतः जलनिर्गतहस्त्यादिः। उक्तः अयं घटः इति कथितो दृश्यमानः। अध्रुवः क्षणस्थायी विद्युदादिः। तथाचेतिशब्दौ समुच्चयार्थौ ॥ ३११ ॥

मं० प्र०—बहुव्यक्तीनां ग्रहणे मतिज्ञाने तद्विषयो बहुरित्युच्यते यथा खंडमुडशवलादिबहुगोव्यक्तयः। बहुजातिना ग्रहणे मतिज्ञाने तद्विषयो बहुविध इत्युच्यते यथा गोमहिषाश्वादयो बहुजातयः इति। इतरग्रहणे एकव्यक्तिग्रहणे मतिज्ञाने तद्विषय एकः यथा खंडोऽयमिति। एकजातिग्रहणे मतिज्ञाने तद्विषय एकविधः खंडो वा मुंडो गौरिति। क्षिप्रादयः क्षिप्रानिसृतानुक्तध्रुवाः स्वेतरे च अक्षिप्रानिसृतोक्तध्रुवाः स्वस्वनामत एव सिद्धाः। तथाहि–क्षिप्र.–

शीघ्रपतज्जलधाराप्रवाहादिः । अनिसृतः--गूढः--जलमग्नहस्त्यादिः । अनुक्तः--अकथितः अभिप्रायगतः, ध्रुवः--स्थिरः चिरकालावस्थायी पर्वतादिः । अक्षिप्रः मंदं गच्छन्नश्वादिः । निसृतः--व्यक्तानिष्क्रातः जलनिर्गतहस्त्यादिः । उक्तः--अयं घट इति कथितो दृश्यमानः, अध्रुवः क्षणस्थायी विद्युदादिः तथाचेति समुच्चयार्थौ ॥ ३११ ॥

स० चं०--जहां बहुत व्यक्तिका ग्रहणरूप मतिज्ञान होइ ताके विषयकौं बहु कहिए । बहुरि जहां बहुजातिका ग्रहणरूप मतिज्ञान होइ ताके विषयकौं बहुविध कहिए । बहुरि ऐसैं ही इतरका ग्रहणविषैं जहां एक व्यक्तिका ग्रहण रूप मतिज्ञान होइ ताके विषयकौं एक कहिए । बहुरि जहां एक जातिका ग्रहणरूप मतिज्ञान होइ ताके विषयकौं एकविध कहिए । इहां उदाहरण दिखाइए हैं जैसैं खाड़ी गऊ सावली गऊ मूड़ी गऊ इत्यादिक अनेक गऊनिकी व्यक्तिकौं बहु कहिए । बहुरि गऊ भैंस घोड़े इत्यादि अनेक जातिकौं बहुविध कहिए । बहुरि एक खाडी गऊ ऐसी गऊकी एक व्यक्तिकौं एक कहिए । बहुरि खाड़ी मूडी सावली गऊ है ऐसी एक जातिकौं एकविध कहिए । एक जातिविषैं अनेक व्यक्ति पाइए हैं । ऐसैं बारह भेदनिविषैं च्यारि तौ कहे । बहुरि अवशेष क्षिप्रादिक च्यारि अर इनिके प्रतिपक्षी च्यारि ते अपने नामहीतैं प्रसिद्ध हैं । सोही कहिए है--क्षिप्र शीघ्रकौं कहिए जैसैं शीघ्र पडती जल धारा वा जल प्रवाह । बहुरि अनिसृत गूढकौं कहिए जैसैं जलविषैं मगन हूवा हाथी । बहुरि अनुक्त विना कहेकौं कहिए जैसैं विनाही कहे किछू अभिप्रायहीतैं जाननेमें आवै । बहुरि ध्रुव अचलकौं वा बहुत काल स्थायीकौं कहिए जैसैं पर्वतादिक । बहुरि अक्षिप्र ढीलेकौं कहिए जैसैं मंद चालता घोटकादिक । बहुरि निसृत प्रगटकौं कहिए जैसैं जलतैं निकस्या हूवा हाथी । बहुरि उक्त कहेकौ कहिए जैसैं काहूनैं कह्या यहु घट है । बहुरि अध्रुव चंचल वा विनाशीककौं कहिए जैसैं क्षणस्थायी विजुरी आदि । ऐसैं बारह प्रकार मतिज्ञानके विषय हैं । भावार्थ--जाकौं जानिए यहु शीघ्र प्रवर्तै है सो क्षिप्र कहिए । बहुरि जाकौं जानिए यह गूढ है सो अनिसृत कहिए । बहुरि जाकौं विना कहैं जानिए सो अनुक्त कहिए । बहुरि जाकौं जानिए यहु ध्रुव है सो ध्रुव कहिए इत्यादिक मतिज्ञानके विषय हैं । इनिकौं मतिज्ञानकरि जानिए है ॥ ३११ ॥

**वत्थुस्स पदेसादो वत्थुग्गहणं तु वत्थुदेसं वा ।**
**सयलं वा अवलंबिय अणिस्सिदं अण्णवत्थुगई ॥ ३१२ ॥**

वस्तुनः प्रदेशात् वस्तुग्रहणं तु वस्तुदेशं वा ।
सकलं वा अवलंब्य अनिसृतमन्यवस्तुगतिः ॥ ३१२ ॥

जी० प्र०—कस्यचिद्वस्तुनः, प्रदेशाद्-एकदेशाद् व्यक्तात् तदविनाभाविनोऽव्यक्तस्य वस्तुनो ग्रहणं अनिसृतज्ञानं । अथवा एकस्य वस्तुनः एकदेशं वा सकलं वस्तु वा अवलंब्य गृहीत्वा पुनरन्यस्य वस्तुनः गतिः—ज्ञानं यत्, तदप्यनिसृतज्ञानं भवति ॥ ३१२ ॥ तदुदाहरति—

मं० प्र०—कस्यचिद्वस्तुनः, प्रदेशात्—एकदेशात् व्यक्तात् तदविनाभाविनोऽव्यक्तस्य वस्तुनो ग्रहणमनिसृतज्ञानं । अथवा एकस्य वस्तुनः एकदेशं वा सकलवस्तु वा अवलंब्य—गृहीत्वा पुनरन्यस्य वस्तुनो गतिः—ज्ञानं यत्, तदप्यानिसृतज्ञानं भवति ॥ ३१२ ॥

स० चं०—किसी वस्तुका प्रदेश कहिए एकोदेश अंश प्रगट है तातैं जो वह एकोदेश अंश जिस वस्तु बिना न होइ ऐसे अप्रगट वस्तुका ग्रहण कीजिए सो अनिःसृतज्ञान है अथवा एक किसी वस्तुका एकोदेश अंशकौं वा सर्वांग वस्तुहीकौं अवलंबिकरि ग्रहण करि अन्य कोई अप्रकट वस्तुका ग्रहण करना सो भी अनिःसृत ज्ञान है इनिके उदाहरण आगें कहैं हैं ॥ ३१२ ॥

**पुक्खरगहणे काले हत्थिस्स य वदणगवयगहणे वा ।**
**वत्थंतरचंदस्स य धेणुस्स य बोहणं च हवे ॥ ३१३ ॥**

पुष्करग्रहणे काले हस्तिनश्च वदनगवयग्रहणे वा ।
वस्त्वंतरचंद्रस्य च धेनोश्च बोधनं च भवेत् ॥ ३१३ ॥

जी० प्र०—पुष्करस्य जलाद्बहिर्दृश्यमानस्य जलमग्नहस्तिकराग्रस्य ग्रहणकाले दर्शनकाले एव तदविनाभाविजलमग्नहस्तिग्रहणं जले ह-

स्ती मग्नोऽस्तीति प्रतीतिः । वा इव यथा अनेन अस्मात् साध्याविनाभावनियमनिश्चयात् साधनात् साध्यस्य ज्ञानमनुमानमिति अनुमानप्रमाणं संगृहीतं भवति। अथवा कस्याश्चित् युवतेर्वदनग्रहणकाले वस्त्वंतरस्य चंद्रस्य ग्रहणं। मुखसादृश्याचंद्रस्य स्मरणं चंद्रसदृशं मुखमिति प्रत्यभिज्ञानं वा। अरण्ये गवयग्रहणकाले गवयदर्शनकाल एव धेनोर्बोधनं स्मरणं गोसदृशो गवय इति प्रत्यभिज्ञानं वा भवेत् । वा इव यथा अत्र इवार्थद्योतको वाशब्दः उदाहरणप्रदर्शने प्रयुक्तः अनंतरगाथोक्तानिसृतार्थज्ञानस्य एतावंत्युदाहरणानि। पक्षांतरसूचको वा । यथा महानसे अग्नौ सत्येव धूम उपपन्नो दृष्टः। ह्रदे अग्न्यभावे धूमोऽनुपपन्नो निश्चितः। तथा सर्वदेशकालसंबंधितया अग्निधूमयोरन्यथानुपपत्तिरूपस्य अविनाभावसंबंधस्य ज्ञानं तर्कः सोपि च मतिज्ञानं भवति । एवमनुमानस्मृतिप्रत्यभिज्ञानतर्काख्यानि चत्वारि मतिज्ञानानि अनिसृतार्थविषयाणि केवलपरोक्षाणि एकदेशतोऽपि वैशद्याभावात् । शेषाणि स्पर्शनादींद्रियानिंद्रियव्यापारप्रभवानि बह्वाद्यर्थविषयाणि मतिज्ञानानि सांव्यवहारिकप्रत्यक्षाणि एकदेशतो वैशद्यसंभवात् । प्रत्यक्षं विशदं ज्ञानमिति पूर्वाचार्यैः प्रत्यक्षलक्षणस्योक्तत्वात् । तानि सर्वाणि मतिज्ञानानि प्रमाणानि सम्यग्ज्ञानत्वात् । सम्यग्ज्ञानं प्रमाणं, इति प्रवचने (प्रोक्तत्वात्) प्रतिपादनात् ॥ ३१३ ॥

म० प्र०––पुष्करस्य जलाद्बहिर्दृश्यमानस्य जलमग्नहस्तिकराग्रस्य ग्रहणकाले––दर्शनकाल एव तदविनाभाविजलमग्नहस्तिग्रहणं–जले हस्ती मग्नोऽस्तीति प्रतीतिः वा इव यथा अनेन साध्याविनाभावनियमानिश्चयतः साधनात्साध्यस्य विज्ञानमनुमानमित्यनुमानप्रमाणं संगृहीतं । अथवा कस्याश्चिद् युवतेः, वदनग्रहणे–काले एव वस्त्वंतरस्य चंद्रस्य ग्रहणं मुखसादृश्याच्चंद्रस्य स्मरणं चद्रसदृश मुखमिति प्रत्यभिज्ञानं, वा अरण्ये गवयग्रहणकाले एव धेनोर्बोधनं स्मरणं गोसदृशो गवय इति प्रत्यभिज्ञानं वा भवेत् वा-इव यथा । अत्र इवार्थद्योतको वाशब्दः उदाहरणप्रदर्शने प्रयुक्त , अनंतरगाथोक्तानिसृतार्थज्ञानस्य एतान्युदाहरणानि । पक्षांतरसूचको वा । यथा महानसे अग्नौ सत्येव धूम उपपन्नो दृष्टः, ह्रदे अग्न्यभावे धूमोऽनुपपन्नो निश्चितः, तथा सर्वदेशकालसंबंधितया अग्निधूमयोरन्यथानुपपत्तिरूपस्याविनाभावसंबंधस्य ज्ञानं तर्काख्यं च मतिज्ञानं भवति । एवमनुमानस्मृतिप्रत्यभिज्ञानतर्काख्यानि चत्वारि मतिज्ञानानि अनिसृतविषयाणि केवलपरोक्षाणि एकदेशतोऽपि वैशद्याभावात् । शेषाणि स्पर्शनादींद्रियानिंद्रियव्यापारप्रभवानि मतिज्ञानानि बह्वादिविषयाणि साव्यवहारिकप्रत्यक्षाणि एकदेशतो वैशद्यसंभवात्, प्रत्यक्ष विशद ज्ञानमिति पूर्वाचार्यैः प्रत्यक्षलक्षणस्योक्तत्वात्। तानि सर्वाणि मतिज्ञानानि प्रमाणानि सम्यग्ज्ञानत्वात् । सम्यग्ज्ञान प्रमाणमिति प्रवचने प्रोक्तत्वात् ॥ ३१३ ॥

स० चं०–पुष्कर कहिए जलतैं वाहिर प्रगट दीसती ऐसी जलविषैं डूब्या हूवा हस्तीकी सूंडि ताकौं जाननेतैं ऐसी प्रतीति हो है कि इस जलविषैं हस्ती मगन है जातैं हस्ती बिना सूंडि न हो है। जिस बिना जो न होइ ताकौं तिसका साधन कहिए जैसैं अग्नि बिना धूम नाहीं तातैं अग्नि साध्य है धूम साधन है। सो साधनतैं साध्यका जानना सो अनुमान प्रमाण है। इहां सूंडि साधन, हस्ती साध्य है। सूंडितैं हस्तीका ज्ञान भया तातैं इहां

अनुमान प्रमाण आया । बहुरि किसी स्त्रीका मुख देखा सो मुखका ग्रहण समयविषैं चंद्रमाका स्मरण भया आगैं चंद्रमा देख्या था स्त्रीके मुखकी अर चंद्रमाकी सदृशता है सो स्त्रीका मुख देखितेही चंद्रमा यादि आया सो चंद्रमा तिस काल विषैं प्रकट न था ताका ज्ञान भया सो यहु स्मृति प्रमाण है । अथवा चंद्रमासमान स्त्रीका मुख है सो स्त्रीका मुख देखतैं चंद्रमाका ज्ञान भया तातैं याकौं प्रत्यभिज्ञान प्रमाण भी कहिये । ऐसैं ही वनविषैं गवय नामा तिर्यंचकौं देख्या तहां ऐसा यादि आया कि गऊके सदृश गवय होहै तातैं यहु स्मृति प्रमाण है अथवा गऊ समान गवय हो है सो गऊका ज्ञान गवयकौं देखते ही भया तातैं याकौं प्रत्यभिज्ञान भी कहिए । वा कहिए जैसैं ए उदाहरण कहे तैसैं और भी जाननें । जैसैं रसोईविषैं अग्नि होते संतै धूवा हो है अर द्रहविषैं अग्नि नाही तातैं धूवां भी नाहीं तातैं सर्व देश कालविषैं अग्नि अर धूवांकैं अन्यथा अनुपपत्ति भाव है । अन्यथा कहिए अग्नि न होइ तौ अनुपपत्ति कहिए धूवां भी न होइ सो ऐसा अन्यथा अनुपपत्तिका ज्ञान सो तर्क नामा प्रमाण भी मतिज्ञान है । या प्रकार अनुमान स्मृति प्रत्यभिज्ञान तर्क ए च्यार्यो परोक्ष प्रमाण अनिःसृत है विषय जाका ऐसा मतिज्ञानके भेद जानने । पांचवां आगम नामा परोक्ष प्रमाण श्रुतज्ञानका भेद जानना । एकोदेशपनैं भी विशदता स्पष्टता इनिके जाननेविषैं नाहीं तातैं इनिकौं परोक्ष प्रमाण कहे और इनके बिना जो पांच इंद्रियनिकरि बहु बहुविध आदि जानिए है ते सांव्यवहारिक प्रत्यक्ष जानने जातैं इनिके जाननेमें एकोदेश विशदता निर्मलता स्पष्टता पाइए है व्यवहारविषैं भी ऐसैं कहिए है जो मैं नेत्रनिस्यौं प्रत्यक्ष देख्या बहुरि इस मतिज्ञान विषैं पारमार्थिक प्रत्यक्षपना है नाहीं जातैं अपने विषयकौं तारतम्य रूप संपूर्ण स्पष्ट न जानैं । पूर्वै आचार्यनिकरि प्रत्यक्षका लक्षण विशद वा स्पष्ट ही कह्या है ऐसैं ए सर्व मतिज्ञानके भेद जानने ते भेद प्रमाण हैं जातैं ए सर्व सम्यग्ज्ञान हैं बहुरि "सम्यग्ज्ञानं प्रमाणं" ऐसा सिद्धांतविषैं कह्या है ॥ ३१३ ॥

## एक्कचउक्कं चउवीसट्ठावीसं च तिप्पडिं किच्चा ।

इगिछव्वारसगुणिदे मदिणाणे होंति ठाणाणि ॥ ३१४ ॥

एकचतुष्कं चतुर्विंशत्यष्टाविंशतिश्च त्रिःप्रतिं कृत्वा ।
एकषड्द्वादशगुणिते मतिज्ञाने भवंति स्थानानि ॥ ३१४ ॥

जी०प्र०—मतिज्ञानं सामान्येन एकं १। अवग्रहेहावायधारणापेक्षया चत्वारि ४। इंद्रियानिंद्रियजनितार्थावग्रहेहावायधारणापेक्षया चतुर्विंशतिः २४। अर्थव्यंजनोभयावग्रहापेक्षया अष्टाविंशतिः २८। एतानि चत्वारि स्थानानि त्रिःप्रतिकानि—

| | | |
|---|---|---|
| २८ । १ | २८ । ६ | २८ । १२ |
| २४ । १ | २४ । ६ | २४ । १२ |
| ४ । १ | ४ । ६ | ४ । १२ |
| १ । १ | १ । ६ | १ । १२ |

कृत्वा यथाक्रमं प्रथमं स्थानचतुष्टयं विषयसामान्येनैकेन गुणयेत्। द्वितीयं स्थानचतुष्टयं बह्वादिविषयषट्केन गुणयेत्। तृतीयं स्थानचतुष्टयं बह्वादिभिर्द्वादशविषयैर्गुणयेत्। एवं गुणिते सति मतिज्ञाने सामान्यविषयार्धविषयसर्वविषयापेक्षया स्थानानि भवंति ॥ ३१४ ॥ अथ श्रुतज्ञानप्ररूपणां प्रारभमाणः प्रथमस्तावत्तत्सामान्यलक्षणमाह—

मं० प्र०—मतिज्ञानसामान्यापेक्षया एकोंकः । १ । अवग्रहेहावायधारणापेक्षया चतुरंकः । इंद्रियानिंद्रियजनितार्थावग्रहेहावायधारणापेक्षया चतुर्विंशत्यंकः । अर्थव्यंजनोभयावग्रहाद्यपेक्षया अष्टाविंशत्यंकः । २८ । एवं चत्वारि स्थानानि त्रिःप्रतिकं कृत्वा यथाक्रमं प्रथम स्थानचतुष्टयं विषयसामान्येनैकेन गुणयेत्, द्वितीयं स्थानचतुष्टयं बह्वादिविषयषट्केन गुणयेत्। तृतीयं स्थानचतुष्टयं बह्वादिभिर्विषयैः द्वादशभिर्गुणयेत् एवं गुणिते सति मतिज्ञाने विषयसामान्यार्धविषयसर्वविषयापेक्षाणि स्थानानि भवंति ॥ ३३४ ॥ अथ श्रुतज्ञानप्ररूपणा प्रारभमाणस्तावत्तत्सामान्यलक्षणमाह—

स० चं०—मतिज्ञान सामान्य अपेक्षा करि तौ एक है अर अवग्रह ईहा अवाय धारणाकी अपेक्षा च्यारि है बहुरि पांच इंद्रिय छठा मनकरि अर अवग्रह ईहा अवाय धारणाकी अपेक्षा चौवीस है। बहुरि व्यंजन अर अर्थका भेद कीएं अठाईस है सो एक च्यारि चौवीस अठाईस १ । ४ । २४ । २८ । ज्ञान च्यार्योंको जुदे जुदे तीन जायगा माडिए। तहां एक जायगा तौ सामान्यपनैं अपने अपने विषयकौं जानैं हैं ऐसा विषय संबंधी एक भेद

करि गुणिए तब तौ एक च्यारि चौबीस अठाईसभेद भए। बहुरि दूसरी जायगा बहु बहुविध क्षिप्र अनिःसृत अनुक्त ध्रुव ए छह प्रकार विषयके भेद करि गुणिए तब छह ६ चौबीस २४ के एकसौ चवालीस १४४ एकसौ अडसठि १६८ ऐसैं मतिज्ञानके विषय भेदनिकी अपेक्षा भेद भए। बहुरि तीसरी जायगा उनके प्रतिपक्षी सहित बारह विषय भेदनिकरि गुणिए तहां बारह १२ अडतालीस ४८ दोयसै अठ्यासी २८८ तीनसै छत्तीस ३३६ सर्व विषय भेदनिकी अपेक्षा मतिज्ञानके भेद भए। ऐसैं विवक्षा भेदकरि मतिज्ञानके स्थान दिखाए ॥३१४॥ आगैं श्रुतज्ञानकी प्ररूपणाका आरंभ करता संता प्रथमही श्रुतज्ञानका सामान्य लक्षण कहै हैं—

**अत्थादो अत्थंतरमुवलंभंतं भणंति सुदणाणं।**
**आभिणिबोहियपुव्वं णियमेणिह सद्दजं पमुहं ॥ ३१५ ॥**

अर्थादर्थांतरमुपलभमानं भणंति श्रुतज्ञानं।
आभिनिबोधिकपूर्वं नियमेनेह शब्दजं प्रमुखं ॥ ३१५ ॥

जी० प्र०—मतिज्ञानेन निश्चितमर्थमवलंब्य अर्थांतरं-तत्संबद्धमन्यार्थमुपलभ्यमानं-अवबुध्यमानं श्रुतज्ञानावरणवीर्यांतरायक्षयोपशमोत्पन्नं जीवस्य ज्ञानपर्यायं श्रुतज्ञानमिति मुनीश्वरा भणंति। तत्कथं भवेत्? आभिनिबोधिकपूर्वं-नियमेन आभिनिबोधिकं मतिज्ञानं पूर्वं कारणं यस्य तत् तथोक्तं आभिनिबोधिकपूर्वं, मतिज्ञानावरणक्षयोपशमेन मतिज्ञानमेव पूर्वं प्रथममुत्पद्यते पुनः--पश्चात् तद्गृहीतार्थमवलंब्य तद्बलादर्थांतरविषयं श्रुतज्ञानमुत्पद्यते नान्यप्रकारेणेति नियमशब्देन मतिज्ञानप्रवृत्त्यभावे श्रुतज्ञानाभाव इत्यवधार्यते। इह—अस्मिन् श्रुतज्ञानप्रकरणे अक्षरानक्षरात्मकयोः शब्दजलिंगजयोः श्रुतज्ञानभेदयोः मध्ये शब्दज-वर्णपदवाक्यात्मकशब्दजनितं श्रुतज्ञानं प्रमुखं प्रधानं दत्तग्रहणशास्त्राध्ययनादिसकलव्यवहाराणां तन्मूलत्वात्। अनक्षरात्मकं तु लिंगजं श्रुतज्ञानं एकेंद्रियादिपंचेंद्रियपर्यंतेषु जीवेषु विद्यमानमपि व्यवहारानुपयोगित्वादप्रधानं भवति। श्रूयते श्रोत्रेंद्रियेण गृह्यते इति श्रुतः शब्दः, तस्मादुत्पन्नमर्थज्ञानं श्रुतज्ञानमिति व्युत्पत्तेरपि अक्षरात्मकप्राधान्याश्रयणात्। अथ वा श्रुतमिति रूढिशब्दोयं मतिज्ञानपूर्वकस्य अर्थांतरज्ञानस्य प्रतिपादकः परमागमे रूढः। यथाकथंचिन्निरुक्तिसंभवः रूढिशब्दे अजहत्स्वार्थवृत्तिके कुशं लातीति कुशल इति कुशलादिशब्देषु निपुणाद्यर्थेषु रूढेषु तन्निरुक्तिवत्। तत्र जीवोऽस्तीत्युक्ते जीवोऽस्तीति शब्दज्ञानं श्रोत्रेंद्रियप्रभवं मतिज्ञानं भवति। ज्ञानेन

जीवोऽस्तीति शब्दवाच्यरूपे आत्मास्तित्वे वाच्यवाचकसंबंधसंकेतसंकलनपूर्वकं यत् ज्ञानमुत्पद्यते तदक्षरात्मकं श्रुतज्ञानं भवति, अक्षरात्मकशब्दसमुत्पन्नत्वेन कार्ये कारणोपचारात्। वातशीतस्पर्शज्ञानेन वातप्रकृतिकस्य तत्स्पर्शे अमनोज्ञज्ञानमक्षरात्मक लिंगजं श्रुतज्ञानं भवति, शब्दपूर्वकत्वाभावात् ॥ ३१५ ॥ अथ श्रुतज्ञानस्य अक्षरानक्षरात्मकभेदौ प्ररूपयति—

मं० प्र० —मतिज्ञानेन निश्चितादर्थात् तमर्थमालंब्य, अर्थांतरं--तत्सबद्धमन्यमर्थमुपलभमानं—अवबुध्यमानं श्रुतज्ञानावरणवीर्यांतरायक्षयोपशमोत्पन्नं जीवस्य ज्ञानपर्याय श्रुतज्ञानमिति मुनीश्वरा भणति। तत्कीदृश ? आभिनिबोधिकपूर्वं नियमेन—आभिनिबोधिकं—मतिज्ञानं पूर्वं—कारणं, यस्य तत्तथोक्तं। मतिज्ञानावरणक्षयोपशमात् मतिज्ञानमेव प्रथममुत्पद्यते। पुनस्तद्गृहीतार्थमवलंव्य तद्बलादर्थांतरविषय श्रुतज्ञानमुत्पद्यते नान्यथेति नियमशब्देन मतिज्ञानप्रवृत्त्यभावे श्रुतज्ञानाभाव इत्यवधार्यते। इह श्रुतज्ञानप्रकरणे, अक्षरानक्षरात्मकयोः श्रुतज्ञानभेदयोः, शब्दजं—वर्णपदवाक्यात्मकशब्दप्रभवं श्रुतज्ञान प्रमुख--प्रधानं दत्तग्रहशास्त्राध्ययनादिसकलव्यवहाराणां तन्मूलत्वात्। अनक्षरात्मकं तु श्रुतज्ञान एकेंद्रियादिपंचेंद्रियपर्यंतजीवेषु विद्यमानमपि व्यवहारानुपयोगात् अप्रधानं। श्रूयते—श्रोत्रेंद्रियेण गृह्यते इति श्रुतः शब्दः, तस्मादुत्पन्नमर्थज्ञानं श्रुतज्ञानमिति व्युत्पत्तेरप्यक्षरात्मकप्राधान्याश्रयात्। अथवा श्रुतमिति रूढिशब्दोय मतिज्ञानपूर्वस्यार्थोत्तरज्ञानस्य प्रतिपादकः परमागमे रूढः। यथा कथंचिन्निरुक्तिसंभवः रुढिशब्दे अजहत्स्वार्थवृत्तिके कुशं लातीति कुशल इति कुशलादि शब्देषु निपुणाद्यर्थेषु रूढेषु तन्निरुक्तिवत्। तत्र जीवोऽस्तीत्युक्ते जीवोऽस्तीति शब्दज्ञान श्रोत्रेंद्रियप्रभव मतिज्ञान। तस्माज्जीवोऽस्तीति शब्दवाच्ये आत्मास्तित्वे वाच्यवाचकसबधसकेतसकलनपूर्वक यत् ज्ञानमुत्पद्यते तदक्षरात्मकश्रुतज्ञानं, अक्षरात्मकाच्छब्दादुत्पन्नत्वात्। कार्ये कारणोपचारात्। वातशीतस्पर्शज्ञानात् वातप्रकृतेस्तत्स्पर्शे अमनोज्ञज्ञानमनक्षरात्मक श्रुत शब्दपूर्वकत्वाभावात् ॥ ३१५ ॥ अथ श्रुतज्ञानस्य अक्षरानक्षरात्मकभेदौ प्ररूपयति—

स० चं०—मतिज्ञानकरि निश्चय कीया जो पदार्थ तिसकौं अवलंबि करि तिसही पदार्थके संबंधकौं लीएं अन्य कोई पदार्थ, ताकौं जो जानैं सो श्रुतज्ञान है सो श्रुतज्ञानावरण वीर्यांतराय कर्मके क्षयोपशमतैं उपजै है असैं मुनीश्वर कहै हैं। कैसा है श्रुतज्ञान? आभिनिबोधिक जो मतिज्ञान सो है पहिलैं जाके, पहिलैं मतिज्ञानावरणके क्षयोपशमतैं मतिज्ञान होइ पीछैं मतिज्ञानकरि जो पदार्थ जान्या ताका अवलंबनकरि अन्य कोई पदार्थका जानना होइ सोई श्रुतज्ञान है। असा नियम जानना—पहिलैं मतिज्ञान भएं बिना सर्वथा श्रुतज्ञान न होइ। तीहि श्रुतज्ञानके दोय भेद हैं एक अक्षरात्मक। एक अनक्षरात्मक, इनिविषैं शब्दजं कहिए अक्षर पद छंदादिरूप शब्दतैं उत्पन्न भया जो अक्षरात्मक श्रुतज्ञान सो प्रमुख कहिए मुख्य प्रधान है जातैं देना लेना शास्त्र पढना इत्यादिक सर्व व्यवहारनिका मूल अक्षरात्मक श्रुतज्ञान है। बहुरि लिंग जो चिह्न तातैं उत्पन्न भया असा अनक्षरात्मक

श्रुतज्ञान सो एकेंद्रियतैं लगाइ पंचेंद्रिय पर्यंत सर्व जीवनिकैं है तथापि यातैं किछू व्यवहार प्रवृत्ति नाहीं तातैं प्रधान नाहीं। बहुरि 'श्रूयते इति श्रुतः शब्दः तदुत्पन्नमर्थज्ञानं श्रुतं' सुणिए ताकौं शब्द कहिए, शब्दतैं भया जो अर्थज्ञान ताकौं श्रुतज्ञान कहिए इस भी अर्थविषैं अक्षरात्मक श्रुतज्ञान ही प्रधान आया अथवा श्रुत ऐसा रूढि शब्द है सो मतिज्ञानपूर्वक अर्थांतरका जानने रूप ज्ञानका विशेष, तींहिं अर्थविषैं प्रवर्तै है जैसैं कुशल शब्दका अर्थ तौ यहु जो कुश कहिए डाभ ताकौं लाति कहिये दे सो कुशल परंतु रूढितैं प्रवीण पुरुषका नाम कुशल है तैसैं यहु श्रुतशब्द जानना। तहां 'जीवः अस्ति' ऐसा शब्द कह्या तहां कर्णरूप इंद्रिय मतिज्ञानकरि जीवः अस्ति ऐसे शब्दकौं ग्रह्या। बहुरि तींहिं ज्ञानकरि 'जीवनामा पदार्थ है' ऐसा जो ज्ञान भया सो श्रुतज्ञान है शब्द अर अर्थके वाच्य वाचक संबंध है। अर्थ वाच्य है शब्द वाचक है। अर्थ है सो उस शब्दकरि कहने योग्य है, शब्द उस अर्थका कहन हारा है ऐसा जो ज्ञान भया सो श्रुतज्ञान है। सो इहां 'जीवः अस्ति' ऐसैं शब्दका जानना तौ मतिज्ञान है अर उसके निमित्ततैं जीव नामा पदार्थका अस्तित्व जानना सो श्रुतज्ञान है। ऐसैं ही सर्व अक्षरात्मक श्रुतज्ञानका स्वरूप जानना। अक्षरात्मक जो शब्द तातैं उत्पन्न भया जो ज्ञान ताकौं भी अक्षरात्मक कह्या। इहां कार्यविषैं कारणका उपचार कीया है परमार्थतैं ज्ञान कोई अक्षररूप है नाहीं। बहुरि जैसैं शीतल पवनका स्पर्श भया तहां शीतल पवनका जानना तौ मतिज्ञान है बहुरि तिसका ज्ञानकरि वायुकी प्रकृति वालेकौं यहु शीतल पवन अनिष्ट है ऐसा जानना सो श्रुतज्ञान है सो यहु अनक्षरात्मक श्रुतज्ञान है। अक्षरके निमित्ततैं भया नाहीं। ऐसैं ही सर्व अनक्षरात्मक श्रुतज्ञानका स्वरूप जानना ॥३१५॥ आगैं श्रुतज्ञानके अक्षरात्मक अनक्षरात्मक भेदनिकौं दिखावैं हैं—

**लोगाणमसंखमिदा अणक्खरप्पे हवंति छट्ठाणा।**
**वेरूवछट्ठवग्गपमाणं रूऊणमक्खरगं ॥ ३१६ ॥**

लोकानामसंख्यमितानि अनक्षरात्मके भवंति पट्स्थानानि ।
द्विरूपषष्ठवर्गप्रमाणं रूपोनमक्षरगं ॥ ३१६ ॥

जी० प्र०—श्रुतज्ञानस्य अनक्षरात्मकाक्षरात्मकौ द्वौ भेदौ, तत्र अनक्षरात्मके श्रुतज्ञाने पर्यायपर्यायसमासलक्षणे सर्वजघन्यज्ञानमादिं कृत्वा स्वोत्कृष्टपर्यंतं असंख्येयलोकमात्रा ज्ञानविकल्पा भवति । ते च असंख्येयलोकमात्रवारपट्स्थानवृद्धया संवर्धिता भवंति । अक्षरात्मकं श्रुतज्ञानं द्विरूपवर्गधारोत्पन्नषष्ठवर्गस्य एकट्ठनाम्नो यावंति रूपाणि एकरूपोनानि संति तावंति अक्षराणि अपुनरुक्ताक्षराण्याश्रित्य संख्यातविकल्पं भवति । विवक्षितार्थाभिव्यक्तिनिमित्तं पुनरुक्ताक्षरग्रहणे ततोधिकप्रमाणं भवतीत्यर्थः ॥ ३१६ ॥ अथ श्रुतज्ञानस्य प्रकारांतरेण भेदान् गाथाद्वयेनाह—

मं० प्र०—अनक्षरात्मके श्रुतभेदे—पर्यायपर्यायसमासलक्षणे सर्वजघन्यज्ञानादारभ्य स्वोत्कृष्टपर्यंतमसंख्यातलोकमात्रा ज्ञानविकल्पा भवति । ते च असंख्येयलोकमात्रवारषट्स्थानवृद्धया संवृद्धाः । अक्षरात्मक श्रुतज्ञानं द्विरूपवर्गधारोत्पन्नषष्ठवर्गस्य एकट्ठनाम्नो यावति रूपाणि एकरूपहीनानि सति तावदपुनरुक्ताक्षराण्याश्रित्य संख्यातविकल्पं भवति । विवक्षितार्थाभिव्यक्तिनिमित्तपुनरुक्ताक्षरग्रहणे ततोऽधिकप्रमाणमपि भवतीत्यर्थः ॥ ३१६ ॥ अथ श्रुतज्ञानस्य प्रकारांतरेण भेदप्ररूपणार्थं गाथाद्वयमाह—

स० चं०—अनक्षरात्मक श्रुतज्ञानके भेद पर्याय अर पर्यायसमास, तीहिं विषैं जघन्यसौं लगाइ उत्कृष्ट पर्यंत असंख्यातलोक प्रमाण ज्ञानके भेद हो हैं ते भेद असंख्यात लोक बार षट्स्थानपतित वृद्धिकौं लीए हैं। बहुरि अक्षरात्मक श्रुतज्ञान है सो द्विरूप वर्गधाराविषैं जो एकट्ठी नामा छठा स्थानक कह्या तामैं एक घटाएं जो प्रमाण रहै तितने अपुनरुक्त अक्षर हैं तिनकी अपेक्षा संख्यात भेद लीएं है। विवक्षित अर्थकौं प्रकट करने निमित्त बार बार जिन अक्षरनिकौं कहिए ऐसे पुनरुक्त अक्षरनिका प्रमाण अधिक संभवै है सो कथन आगैं होइगा ॥३१६॥ आगैं श्रुतज्ञानका अन्य प्रकार करि भेद कहनेके निमित्त दोय गाथा कहैं हैं—

पज्जायक्खरपदसंघादं पडिवत्तियाणिजोगं च ।
दुगवारपाहुडं च य पाहुडयं वत्थुपुव्वं च ॥ ३१७ ॥

**तेसिं च समासेहि य वीसविहं वा हु होदि सुदणाणं ।**
**आवरणस्स वि भेदा तत्तियमेत्ता हवंतित्ति ॥ ३१८ ॥**

पर्यायाक्षरपदसघातं प्रतिपत्तिकानुयोगं च ।
द्विकवारप्राभृतं च च प्राभृतकं वस्तु पूर्वं च ॥ ३१७ ॥
तेषां च समासैश्च विंशविधं वा हि भवति श्रुतज्ञानं ।
आवरणस्यापि भेदाः तावन्मात्रा भवंति इति ॥ ३१८ ॥

जी० प्र०—वा–अथवा, पर्यायाक्षरपदसंघातं पर्यायश्च अक्षरं च पदं च संघातश्चेति द्वंद्वैकत्वं । प्रतिपत्तिकानुयोगं–प्रतिपत्तिकश्च अनुयोगश्चेति द्वंद्वैकत्वं । द्विकवारप्राभृतकं च प्राभृतकप्राभृतकमित्यर्थः । प्राभृतकं च वस्तु च पूर्वं च इति दशभेदा भवंति । तेषां पूर्वोक्तानां पर्यायादीनां दशभिः समासैः मिलित्वा श्रुतज्ञानं विंशतिविध भवति । अत्राक्षरादिविषयार्थज्ञानस्य भावश्रुतस्य विवक्षितत्वेन तेषां विंशतिविधत्वनियमे हेतुमाह–श्रुतज्ञानावरणस्य भेदा अपि तावन्मात्रा एव विंशतिविधा एव भवंति, इति इतिशब्दस्य हेत्वर्थवृत्तिसिद्धेः । तद्यथा–पर्यायः पर्यायसमासश्च, अक्षर, अक्षरसमासश्च, पद, पदसमासश्च, संघातः, संघातसमासश्च, प्रतिपत्तिकः, प्रतिपत्तिकसमासश्च, अनुयोगः, अनुयोगसमासश्च, प्राभृतकप्राभृतक, प्राभृतकप्राभृतकसमासश्च, प्राभृतकं, प्राभृतकसमासश्च, वस्तु वस्तुसमासश्च, पूर्वं, पूर्वसमासश्चेति तदालापक्रमो भवति ॥ ३१७–३१८ ॥ अथ पर्यायनाम्न प्रथमश्रुतज्ञानस्य स्वरूपं गाथाचतुष्टयेनाह—

मं० प्र०—वा अथवा पर्यायाक्षरपदसंघातं–पर्यायश्च अक्षरं च पद च संघातश्चेति द्वंद्वैकत्व । प्रतिपत्तिकश्च अनुयोगश्च प्रतिपत्तिकानुयोगं, अत्रापि तथा । चशब्दः समुच्चयार्थः । द्विकवारप्राभृत च प्राभृतकप्राभृतकमित्यर्थः । चशब्दः समुच्चयार्थः । द्वितीयश्चशब्दः छदःपूरणार्थः । तदभावपाठे वा । प्राभृतक वस्तु पूर्वं च । चशब्दः समुच्चयार्थः । इति दशभेदा ॥ ३१७ ॥

मं० प्र०—तेषां पूर्वोक्ताना पर्यायादीना दशभि. समासैः सह श्रुतज्ञानं विंशतिविधं भवति । अत्राक्षरादिविषयार्थज्ञानस्य भावश्रुतस्य विवक्षितत्वात् । तेषां विंशतिविधत्वनियमे हेतुमाह–श्रुतज्ञानावरणस्य भेदा अपि तावन्मात्रा एव–विंशतिविधा एव भवंति, इति–हेतोः, इतिशब्दस्य हेत्वर्थवृत्तेः प्रसिद्धत्वात् । तद्यथा–पर्यायः पर्यायसमासश्च, अक्षर अक्षरसमासश्च, पद पदसमासश्च, सघातः संघातसमासश्च, प्रतिपत्तिकः, प्रतिपत्तिकसमासश्च, अनुयोगः अनुयोगसमासश्च, प्राभृतकप्राभृतक प्राभृतकप्राभृतकसमासश्च, प्राभृतकं प्राभृतकसमासश्च, वस्तु वस्तुसमासश्च, पूर्वं पूर्वसमासश्चेति तदालापक्रमोयं ॥३१८॥ अथ पर्यायनाम्नः प्रथमश्रुतज्ञानभेदस्य स्वरूपप्ररूपणार्थं गाथाचतुष्टयमाह—

स० चं०—पर्याय १ अक्षर २ पद ३ संघात ४ प्रतिपत्तिक ५ अनुयोग ६ प्राभृत प्राभृत ७ प्राभृत ८ वस्तु ९ पूर्व १० दश तौ ए कहे ॥ ३१७ ॥

स० चं०—ते पर्याय आदिक दश भेद कहे तिनके समासनिकरि दश भेद भए मिलिकरि श्रुतज्ञानके बीस भेद भए। ते कहिए हैं—पर्याय १ पर्याय समास २ अक्षर ३ अक्षरसमास ४ पद ५ पदसमास ६ संघात ७ संघात समास ८ प्रतिपत्तिक ९ प्रतिपत्तिक समास १० अनुयोग ११ अनुयोग समास १२ प्राभृतक प्राभृतक १३ प्राभृतक प्राभृतक समास १४ प्राभृत १५ प्राभृत समास १६ वस्तु १७ वस्तु समास १८ पूर्व १९ पूर्वसमास २० ऐसैं बीस भेद हैं। इहां अक्षरादि गोचर जो अर्थ ताके जाननेरूप जो भाव श्रुतज्ञान ताकी मुख्यता जाननी। बहुरि जातैं श्रुतज्ञानावरणके भी तितने ही बीस भेद हैं तातैं श्रुतज्ञानके भी बीस भेद ही कहे हैं ॥३१८॥ आगैं पर्याय नामा प्रथम श्रुतज्ञानका भेद ताका निरूपणके अर्थि च्यारि गाथा कहैं हैं—

**णवरि विसेसं जाणे सुहमजहण्णं तु पज्जयं णाणं।**
**पज्जायावरणं पुण तदणंतरणाणभेदम्हि ॥ ३१९ ॥**

नवरि विशेषं जानीहि सूक्ष्मजघन्यं तु पर्यायं ज्ञानं।
पर्यायावरणं पुनः तदनंतरज्ञानभेदे ॥ ३१९ ॥

जी० प्र०—नवीन विशेषं जानीहि, सः क ? पर्यायज्ञानं—पर्यायाख्यं प्रथमं श्रुतज्ञानं, तु—पुनः, सूक्ष्मनिगोदलब्ध्यपर्याप्तकस्य संबंधि सर्वजघन्यं श्रुतज्ञानं भवति। पुनः—पश्चात् पर्यायज्ञानस्य आवरणं तदनंतरज्ञानभेदे अनंतभागवृद्धियुक्ते पर्यायसमासज्ञानप्रथमभेदे भवति, तद्यथा—उदयागतपर्यायज्ञानावरणसमयप्रबद्धोदयनिषेकस्यानुभागानां सर्वघातिस्पर्धकानामुदयाभावलक्षणः क्षयः, तेषामेव सदवस्थालक्षण उपशमः, देशघातिस्पर्धकानामुदये सति तदावरणोदयेन पर्यायसमासप्रथमज्ञानमेव आव्रियते न तु पर्यायज्ञानं। तदावरणे जीवगुणस्य ज्ञानस्याभावे गुणिनो जीवस्याप्यभावप्रसंगात्। अनुभागरचनायां विन्यस्ते सिद्धानंतैकभागमात्रे द्रव्यानुभागक्रमहानिवृद्धियुक्ते नानागुणहानिस्पर्धकवर्गणा-

त्मके श्रुतज्ञानावरणद्रव्ये सर्वतःस्तोकस्य सर्वपश्चिमप्रक्षीणोदयानुभागसर्वघातिस्पर्धकद्रव्यस्यैव पर्यायज्ञानावरणत्वात् । तावतः आवरणद्रव्यस्य सर्वकालेऽप्युदयाभावात् ॥ ३१९ ॥

म० प्र०—पर्यायज्ञान-पर्यायाख्य प्रथमं श्रुतज्ञानं तु-पुनः, सूक्ष्मनिगोदलब्ध्यपर्याप्तकस्य संबधि सर्वजघन्यं श्रुतज्ञानं भवति । पुनः पर्यायज्ञानस्यावरणं तदनंतरज्ञानभेदे अनतभागवृद्धियुक्ते पर्यायसमासज्ञानप्रथमभेदे भवति । तद्यथा- उदयागतपर्यायज्ञानावरणसमयप्रबद्धस्योदयनिषेकस्यानुभागाना सर्वघातिस्पर्धकाना उदयाभावः क्षयः, तेषामेव सदवस्था उपशमः, देशघातिस्पर्धकानामुदये सति तेन पर्यायसमासप्रथमज्ञानमेवाव्रियते, न तु पर्यायज्ञान, तदावरणे ज्ञानस्य जीवगुणस्याभावे गुणिनो जीवस्याप्यभावप्रसंगात् । अनुभागरचनाया विन्यस्ते सिद्धानंतैकभागमात्रद्रव्यानुभागक्रमहानिवृद्धियुक्ते नानागुणहानिस्पर्धकवर्गणात्मके श्रुतज्ञानावरणद्रव्ये सर्वतः स्तोकस्य सर्वपश्चिमप्रक्षीणोदयानुभागसर्वघातिस्पर्धकद्रव्यस्यैव पर्यायज्ञानावरणत्वात् तावदावरणद्रव्यस्य सर्वकालेप्युदयाभावात् ॥ ३१९ ॥

स० चं०--यहु नवीन विशेष जानहु जो पर्याय नामा प्रथम श्रुतज्ञानका भेद सो सूक्ष्म निगोदिया लब्धि अपर्याप्त संबंधी सर्वतैं जघन्य श्रुतज्ञान जानना । बहुरि पर्याय श्रुतज्ञानका आवरण सो पर्याय श्रुतज्ञानकौं नाहीं आवरै है। वाके अनंतरि जो पर्याय ज्ञानतैं अनंत भागवृद्धि लीए पर्यायसमास ज्ञानका प्रथम भेद तींहिं विषै पर्याय ज्ञानका आवरण है जातैं उदय आया जो पर्याय ज्ञान आवरणके समय प्रबद्धका उदयरूप निषेक ताकैं सर्वघाती स्पर्धकनिका उदय नाहीं सो क्षय है अर तेई सर्वघाती स्पर्धक जे अगिले निषेकसंबंधी सत्तामें तिष्ठैं हैं तिनिका उपशम है अर देशघाती स्पर्धकनिका उदय है सो ऐसा पर्याय ज्ञानावरणका क्षयोपशम सदा पाइए तातैं पर्याय ज्ञानका आवरणकरि पर्याय ज्ञान आवरै नाहीं । पर्यायसमासज्ञानका प्रथमभेद ही आवरै है। जो पर्याय ज्ञान भी आवरै तौ ज्ञानका अभाव होइ, ज्ञान गुणका अभाव भए गुणी जीव द्रव्यका भी अभाव होइ, सो ऐसैं होइ नाही तातैं पर्यायज्ञान निरावरण ही है। अनुभाग रचनाविषैं भी स्थापित कीया जो सिद्धराशिका अनंतवां भागमात्र श्रुतज्ञानावरणका द्रव्य जो परमाणूनिका समूह सो द्रव्यके अनुभागकी क्रमतैं हानि वृद्धि करि संयुक्त है बहुरि नानागुणहानि स्पर्धक वर्गणारूप भेद लीएं हैं तिस द्रव्यविषैं सर्वतैं थोरा उदय रूप अनुभाग जाका क्षीण भया ऐसा जो सर्वघाती स्पर्धक तिमहीकौं पर्याय ज्ञानका आवरण कह्या है तितने आवरणका सदा काल उदय न होइ तातैं भी पर्याय ज्ञान निरावरण ही है ॥ ३१९ ॥

**सुहमणिगोदअपज्जत्तयस्स जादस्स पढमसमयम्हि ।**
**हवदि हु सव्वजहण्णं णिच्चुग्घाडं णिरावरणं ॥ ३२० ॥**

सूक्ष्मनिगोदापर्याप्तकस्य जातस्य प्रथमसमये ।
भवति हि सर्वजघन्यं नित्योद्घाटं निरावरणं ॥ ३२० ॥

जी० प्र०—सूक्ष्मनिगोदलब्ध्यपर्याप्तकस्य जातं–जननं तस्य प्रथमसमये निरावरणं–प्रच्छादनरहितं नित्योद्घाटं अत एव सर्वदा प्रकाशमानं सर्वजघन्यं–सर्वनिकृष्टशक्तिकं पर्यायाख्यं श्रुतज्ञानं भवति खलु एतद्गाथासूत्रं पूर्वाचार्यप्रसिद्धं–स्वोक्तार्थसंप्रतिपत्तिप्रदर्शनार्थं उदाहरणत्वेन लिखितं ॥ ३२० ॥

मं० प्र०—सूक्ष्मनिगोदलब्ध्यपर्याप्तकस्य जातं–जननं, तस्य प्रथमसमये निरावरणं–प्रच्छादनरहितं नित्योद्घाटं अत एव सर्वदा प्रकाशमानं सर्वजघन्यं सर्वनिकृष्टशक्तिकं पर्यायाख्य श्रुतज्ञान भवति, खलु एतद्गाथासूत्रं पूर्वाचार्यप्रसिद्धं स्वोक्तार्थसंप्रतिपत्तिप्रदर्शनार्थमुदाहरणत्वेन लिखितं ॥ ३२० ॥

स० चं०—सूक्ष्म निगोद लब्धि अपर्याप्तक जीवका जन्म होतैं पहिला समयविषैं सर्वतैं जघन्य शक्तिकौं लीएं पर्याय नामा श्रुतज्ञान हो है सो निरावरण है इतने ज्ञानका कबहूं आच्छादन न होइ, याहीतैं नित्योद्घाट कहिए सदाकाल प्रकट प्रकाशमान है। सो यहु गाथा पूर्वाचार्यनिकरि प्रसिद्ध है इहां अपना कह्या व्याख्यानकी दृढताके निमित्त उदाहरणरूप लिखी है ॥ ३२० ॥

**सुहमणिगोदअपज्जत्तगेसु सगसंभवेसु भमिऊण ।**
**चरिमापुण्णतिवक्काणादिमवक्कट्ठियेव हवे ॥ ३२१ ॥**

सूक्ष्मनिगोदापर्याप्तगेषु स्वकसंभवेषु भ्रमित्वा ।
चरमापूर्णत्रिवक्राणां आदिमवक्रस्थिते एव भवेत् ॥ ३२१ ॥

एतस्योपरि एकस्मिन्नक्षरे वृद्धे सति प्रतिपत्तिकं नाम श्रुतज्ञानं भवति १६=१०००७। १०००७ । तच्च नारकादिचतुर्गतिस्वरूपसविस्तरप्ररूपकप्रतिपत्तिकाख्यग्रंथश्रवणजनितार्थज्ञानमिति निश्चेतव्यं ॥ ३३८ ॥ अथानुयोगश्रुतज्ञानं प्ररूपयति—

मं० प्र०—पूर्वोक्तप्रमाणस्य एकतमगतिनिरूपकसंघातश्रुतस्योपरि पूर्वोक्तप्रकारेण एकैकवर्णवृद्धिसहचरितैकैकपदवृद्धिक्रमेण संख्यातसहस्रपदमात्रसंघातेषु संख्यातसहस्रेषु रूपोनेषु संघातसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य संघातसमासोत्कृष्टविकल्पस्य । १६=१०००७। १०००७-१ । एतस्योपरि एकस्मिन्नक्षरे वृद्धे सति प्रतिपत्तिकनाम श्रुतज्ञान भवति १६=१०००७। १०००७ । तच्च नारकादिचतुर्गतिस्वरूपसविस्तरप्ररूपकप्रतिपत्तिकाख्यग्रंथश्रवणजनितार्थज्ञानमिति निश्चेतव्यं ॥ ३३८ ॥ अथानुयोगश्रुतज्ञानं प्ररूपयति—

स०चं०—एक गतिका निरूपण करणहारा जो संघातनामा श्रुतज्ञान ताके ऊपरि पूर्वोक्तप्रकारकरि एक एक अक्षरकी वधवारी लीयें एक एक पदकी वृद्धिकरि संख्यात हजार पदका समूहरूप संघात श्रुत होइ । वहुरि इस ही अनुक्रमतैं संख्यात हजार संघात श्रुत होइ तिहिमैंस्यों एक अक्षर घटाइये तहां पर्यंत संघात समासके भेद जानना । वहुरि अंतका संघात समास श्रुतज्ञानका उत्कृष्ट भेदविषैं वह अक्षर मिलाइये तव प्रतिपत्तिक नामा श्रुतज्ञान हो है सो नारकादि च्यारि गतिका स्वरूप विस्तारपनैं निरूपण करनहारा जो प्रतिपत्तिक नामा ग्रंथ ताके सुननेतैं जो अर्थज्ञान भया ताकौं प्रतिपत्तिक श्रुतज्ञान कहिए॥३३८॥ आगैं अनुयोग श्रुतज्ञानकौं प्ररूपै हैं—

**चउगइसरूवरूवयपडिवत्तीदो दु उवरि पुव्वं वा ।**
**वण्णे संखेज्जे पडिवत्तीउड्ढम्हि अणियोगं ॥ ३३९ ॥**

चतुर्गतिस्वरूपप्ररूपकप्रतिपत्तितस्तु उपरि पूर्वं वा ।
वर्णे संख्याते प्रतिपत्तिवृद्धे अनुयोगं ॥ ३३९ ॥

जी० प्र०—चतुर्गतिस्वरूपनिरूपकप्रतिपत्तिकात् परं तस्योपरि प्रत्येकमेकैकवर्णवृद्धिक्रमेण संख्यातसहस्रेषु पदसंघातप्रतिपत्तिकेषु वृद्धेषु रूपोनतावन्मात्रेषु प्रतिपत्तिकसमासज्ञानविकल्पेषु गतेषु तच्चरमप्रतिपत्तिकसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति अनुयोगाख्यं श्रुतज्ञानं भवति । तच्चतुर्दशमार्गणास्वरूपप्रतिपादकानुयोगसंज्ञशब्दसंदर्भश्रवणजनितार्थज्ञानमित्यर्थः ॥ ३३९ ॥ अथ प्राभृतकप्राभृतकस्य स्वरूपं गाथाद्वयेन प्ररूपयति—

म० प्र०—चतुर्गतिस्वरूपप्ररूपकप्रतिपत्तिकात्परं तस्योपरि प्रत्येकमेकैकवर्णवृद्धिक्रमेण संख्यातसहस्रेषु पदसंघातप्रतिपत्तिकेषु वृद्धेषु रूपोनतावन्मात्रेषु प्रतिपत्तिकसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य प्रतिपत्तिकसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति अनुयोगाख्यं श्रुतज्ञानं भवति तत्र चतुर्दश-मार्गणास्वरूपप्रतिपादकानुयोगसंज्ञशब्दसंदर्भश्रवणजनितार्थज्ञानमित्यर्थः ॥ ३३९ ॥ अथ प्राभृतप्राभृतकस्य गाथाद्वयेन स्वरूपं प्ररूपयति—

स० चं०—च्यारि गतिके स्वरूपका निरूपण करणहारा प्रतिपत्तिक श्रुतज्ञानके ऊपरि प्रत्येक एक अक्षरकी वृद्धि लीयें संख्यात हजार पदनिका समुदायरूप संख्यात हजार संघात अर संख्यात हजार संघातनिका समूह प्रतिपत्तिक सो ऐसैं प्रतिपत्तिक संख्यात हजार होइ तिनिविषैं एक अक्षर घटाइये तहां पर्यंत प्रतिपत्तिक समास श्रुतज्ञानके भेद भए। बहुरि तिसका अंत भेदविषैं वह एक अक्षर मिलायें अनुयोग नामा श्रुतज्ञान भया सो चौदै मार्गणाके स्वरूपका प्रतिपादक अनुयोग नामा श्रुत ताके सुननेतैं जो अर्थज्ञान भया ताकौं अनुयोग नामा श्रुतज्ञान कहिए ॥ ३३९ ॥ आगै प्राभृतप्राभृतकौं दोय गाथानिकरि कहै हैं—

**चोद्दसमग्गणसंजुदअणियोगादुवरि वड्ढिदे वण्णे ।**
**चउरादीअणियोगे दुगवारं पाहुडं होदि ॥ ३४० ॥**

चतुर्दशमार्गणासंयुतानुयोगादुपरि वर्धिते वर्णे ।
चतुराद्यनुयोगे द्विकवारं प्राभृतं भवति ॥ ३४० ॥

जी० प्र०—चतुर्दशमार्गणासंयुतानुयोगात्परं तस्योपरि पूर्वोक्तक्रमेण प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिश्चतुराद्यनुयोगेषु संवृद्धेषु सत्सु रूपोनतावन्मात्रानुयोगसमासज्ञानविकल्पेषु गतेषु तच्चरमानुयोगसमासोत्कृष्टविकल्पस्योपरि एकाक्षरवृद्धौ सत्यां द्विकवारप्राभृतकं नाम श्रुतज्ञानं भवति ॥ ३४० ॥

मं० प्र०—चतुर्दशमार्गणासंयुतानुयोगात्परं तस्योपरि पूर्वोक्तक्रमेण प्रत्येकं—एकैकवर्णवृद्धिसहचरितपदादिवृद्धया चतुरादिषु अनुयोगेषु वृद्धेषु रूपोनतावन्मात्रेष्वनुयोगसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य अनुयोगसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति द्विकवारप्राभृतक—प्राभृतकप्राभृतकं भवति।३४०।

स० चं०—चौदह मार्गणाकरि संयुक्त जो अनुयोग ताके ऊपरि प्रत्येक एक एक अक्षरकी वृद्धिकरि संयुक्त

पद संघात प्रतिपत्तिक इनिकी पूर्वोक्त अनुक्रमतैं वृद्धि होतैं च्यारि आदि अनुयोगनिकी वृद्धिविषैं एक अक्षर घटाइये तहां पर्यंत अनुयोग समासके भेद भए। बहुरि तिनिका अंत भेदविषैं वह एक अक्षर मिलायें प्राभृत प्राभृतक नामा श्रुतज्ञान हो है ॥ ३४० ॥

**अहियारो पाहुडयं एयट्ठो पाहुडस्स अहियारो ।**

**पाहुडपाहुडणामं होदित्ति जिणेहिं णिद्दिट्ठं ॥ ३४१ ॥**

अधिकारः प्राभृतमेकार्थः प्राभृतस्याधिकारः ।

प्राभृतप्राभृतनामा भवति इति जिनैर्निर्दिष्टं ॥ ३४१ ॥

जी० प्र०—वस्तुनामश्रुतज्ञानस्य अधिकारः प्राभृतकं चेति द्वौ एकार्थौ। प्राभृतकस्य अधिकारोऽपि प्राभृतकप्राभृतकनामा भवति ततः कारणात् एकार्थः पर्यायशब्दः इति जिनैः—अर्हद्भट्टारकैः निर्दिष्टं न स्वरुचिविरचितमित्यर्थः ॥ ३४१ ॥ द्विकवारप्राभृतानंतरं प्राभृतकस्वरूपं प्ररूपयति—

म० प्र०—वस्तुनः अधिकारः प्राभृतक, प्राभृतकप्राभृतकस्याधिकारः प्राभृतकनामा भवतीति एकार्थः—पर्यायशब्दः इति जिनैर्निर्दिष्ट न स्वरुचिविरचितमित्यर्थः ॥ ३४१ ॥ अथ प्राभृतकस्वरूप प्ररूपयति—

स० चं०—आगैं कहियेगा जो वस्तु नामा श्रुतज्ञान ताका जो एक अधिकार ताहीका नाम प्राभृत कहिये बहुरि जो उस प्राभृतकका एक अधिकार ताका नाम प्राभृतकप्राभृतक कहिये ऐसैं जिनदेवने कह्या है ॥ ३४१ ॥ आगैं प्राभृतकका स्वरूप कहैं हैं—

**दुगवारपाहुडादो उवरिं वण्णे कमेण चउवीसे ।**

**दुगवारपाहुडे संउड्ढे खलु होदि पाहुडयं ॥ ३४२ ॥**

द्विकवारप्राभृतादुपरि वर्णे क्रमेण चतुर्विंशतौ ।

द्विकवारप्राभृते संवृद्धे खलु भवति प्राभृतकं ॥ ३४२ ॥

जी० प्र०—द्विकवारप्राभृतकात्पर तस्योपरि पूर्वोक्तक्रमेण प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिः चतुर्विंशतिप्राभृतकप्राभृतकेषु वृद्धेषु रूपोनतावन्मात्रेषु प्राभृतकप्राभृतकज्ञानविकल्पेषु गतेषु तच्चरमसमासोत्कृष्टविकल्पकस्य उपरि एकाक्षरवृद्धौ सत्यां प्राभृतकं नाम श्रुतज्ञानं भवति॥३४२॥ अथ वस्तुनामश्रुतज्ञानस्वरूपमाह—

म० प्र०—द्विकवारप्राभृतकात्पर तस्योपरि पूर्वोक्तप्रकारेण प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धया चतुर्विंशतिप्राभृतकप्राभृतकेषु वृद्धेषु रूपोनतावन्मात्रेषु प्राभृतकप्राभृतकसमासज्ञानविकल्पेषु गतेषु तच्चरमस्य उत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति प्राभृतकं नाम श्रुतज्ञानं भवति ॥ ३४२ ॥ अथ वस्तुस्वरूपं प्ररूपयति—

स० चं०—द्विकवार प्राभृतक जो प्राभृतक प्राभृतक ताके ऊपरि पूर्वोक्त अनुक्रमतैं एक एक अक्षरकी वृद्धि लीयें चौवीस प्राभृतक प्राभृतकानिकी वृद्धिविषैं एक अक्षर घटाइये तहां पर्यंत प्राभृतक प्राभृतक समासके भेद जानने। बहुरि ताका अंत भेदविषैं वह एक अक्षर मिलायें प्राभृतक नामा श्रुतज्ञान हो है। भावार्थ—एक एक प्राभृतक नामा अधिकारविषैं चौबीस चौबीस प्राभृतक प्राभृतक नामा अधिकार हो है ॥ ३४२ ॥ आगैं वस्तु नामा श्रुतज्ञानकौं प्ररूपै हैं—

## वीसं वीसं पाहुडअहियारे एक्कवत्थुअहियारो ।
## एक्केक्कवण्णउड्ढी कमेण सव्वत्थ णायव्वा ॥ ३४३ ॥

विंशतौ विंशतौ प्राभृताधिकारे एको वस्त्वधिकारः।
एकैकवर्णवृद्धिः क्रमेण सर्वत्र ज्ञातव्या ॥ ३४३ ॥

जी० प्र०—पूर्वोक्तप्राभृतकस्याग्रे तदुपरि पूर्वोक्तक्रमेण एकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिः विंशतिप्राभृतकनामाधिकारेषु संवृद्धेषु सत्सु रूपोनतावन्मात्रेषु प्राभृतकसमासज्ञानविकल्पेषु गतेषु तच्चरमप्राभृतकसमासोत्कृष्टविकल्पस्योपरि एकाक्षरे वृद्धौ सत्यां एकं वस्तुनामाधिकारश्रुतज्ञानं भवति। वीसं वीसमिति उत्पादादिपूर्वाश्रितवस्तुवस्तुसमूहवीप्सायां द्विर्वचनमुक्तं। सर्वत्राक्षरसमासप्रथमविकल्पात् प्रभृति पूर्वसमासोत्कृष्टविक-

ल्पपर्यंतेषु क्रमेण पर्यायाक्षरपदसंघातेत्यादिपरिपाट्या एकैकवर्णवृद्धिः इदमुपलक्षणं, तेन एकैकवर्णपदसंघातादिवृद्धयो ज्ञातव्याः। एतत्सूत्रानुसारेण वृत्तौ तथा लिखितं ॥३४३॥ अथ गाथात्रयेण पूर्वनामश्रुतज्ञानस्वरूपं प्ररूपयंस्तदवयवभूतोत्पादपूर्वादिचतुर्दशपूर्वाणामुत्पत्तिक्रमं दर्शयति—

मं० प्र०—तस्मात्प्राभृतकात्परं प्राभृतकस्योपरि पूर्वोक्तक्रमेण एकैकवर्णवृद्धिसहचारितपदादिवृद्ध्या विंशतौ प्राभृतकनामाधिकारेषु वृद्धेषु प्राभृतकसमासज्ञानविकल्पेषु रूपोनतावन्मात्रेषु गतेषु तच्चरमस्य प्राभृतकसमासोत्कृष्टविकल्पस्योपरि एकस्मिन्नक्षरे वृद्धे सति एको वस्तुनामाधिकारो भवति। वीसं वीसमिति उत्पादादिपूर्वाश्रितवस्तुसमूहवीप्सायां द्विर्वचनमुक्तं। सर्वत्राक्षरसमासप्रथमविकल्पात्प्रभृति पूर्वसमासोत्कृष्टविकल्पपर्यंतेषु क्रमेण पर्यायाक्षरपदसंघातेत्यादिपरिपाट्या एकैकवर्णवृद्धिः। इदमुपलक्षण, तेन एकैकवर्णपदसंघातादिवृद्धिर्ज्ञातव्या। एतत्सूत्रानुसारेण वृत्तावपि तथैव लिखितं ॥३४३॥ अथ गाथात्रयेण पूर्वस्वरूपं प्ररूपयति—

स० चं०—तिहिं प्राभृतकके ऊपर पूर्वोक्त अनुक्रमतैं एक एक अक्षरकी वृद्धिनै लीएं पदादिककी वृद्धिकरि संयुक्त बीस प्राभृतककी वृद्धि होतैं संतैं वामैं एक अक्षर घटाइये तहां पर्यंत प्राभृतक समासके भेद जानने। बहुरि ताका अंत भेदविषैं वह एक अक्षर मिलायें वस्तु नामा अधिकार हो है। भावार्थ—पूर्वसंबंधी एक एक वस्तु नामा अधिकारविषैं बीस बीस प्राभृतक पाइये है। बहुरि सर्वत्र अक्षर समासका प्रथम भेदतैं लगाइ पूर्वसमासका उत्कृष्ट भेदपर्यंत अनुक्रमतैं एक एक अक्षर वधावना। बहुरि पदका वधावना बहुरि समासका वधावना इत्यादिक परिपाटीकरि यथासंभव वृद्धि सबनिविषैं जानना सो सूत्रके अनुसारि व्याख्यान टीकाविषैं करते ही आये हैं ॥ ३४३ ॥ आगैं तीन गाथानिकरि पूर्वनामा श्रुतज्ञानकौं कहैं हैं—

**दसचोद्दसट्ठ अट्ठारसयं वारं च वार सोलं च।**
**वीसं तीसं पण्णारसं च दस चदुसु वत्थूणं ॥ ३४४ ॥**

दश चतुर्दशाष्ट अष्टादशकं द्वादश च द्वादश षोडश च।
विंशतिः त्रिंशत् पंचदश च दश चतुर्षु वस्तूनां ॥ ३४४ ॥

जी० प्र०—पूर्वोक्तवस्तुश्रुतज्ञानस्य उपरि प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धिभिः वक्ष्यमाणोत्पादादिचतुर्दशपूर्वाधिकारेषु यथासंख्यं दशचतुर्दशाष्टाष्टादशद्वादशद्वादशषोडशविंशतित्रिंशत्पंचदशदशदशदशदशवस्तुषु वृद्धेषु सत्सु— ॥ ३४४ ॥

मं० प्र०—तस्माद्वस्तुनः परं वस्तुन उपरि प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्ध्या वक्ष्यमाणोत्पादादिचतुर्दशपूर्वाधिकारेषु यथासंख्यं दशचतुर्दशाष्टाष्टादशद्वादशद्वादशषोडशविंशतित्रिंशत्पंचदशदशदशदशदशवस्तुषु वृद्धेषु रूपोनतावन्मात्रवस्तुसमासज्ञानविकल्पेषु गतेषु तत्तच्चरमाणां वस्तुसमासोत्कृष्टविकल्पाना चतुर्दशानामुपरि प्रत्येकमेकैकस्मिन्नक्षरे वृद्धे सति—॥३४४॥

स० च०—तिहि वस्तु श्रुतके ऊपरि एक एक अक्षरकी वृद्धि लीएं अनुक्रमतैं पदादिककी वृद्धिकरि संयुक्त क्रमतैं दश आदि वस्तुनिकी वृद्धि होतसंतै उनमैंसौं एक एक अक्षर घटावनै पर्यंत वस्तु समासके भेद जाननें। बहुरि तिनके अंत भेदनिविषैं अनुक्रमतैं एक एक अक्षर मिलाएं चौदह पूर्वनामा श्रुतज्ञान होइ तहां आगैं कहिए हैं उत्पाद नामा पूर्व आदि चौदह पूर्व तिनिविषैं अनुक्रमतैं दश १० चौदह १४ आठ ८ अठारह १८ बारह १२ बारह १२ सोलह १६ बीस २० तीस ३० पंद्रह १५ दश १० दश १० दश १० दश १० वस्तु नामा अधिकार पाइए है ॥ ३४४ ॥

**उप्पायपुव्वगाणियविरियपवादत्थिणत्थियपवादे ।**
**णाणासच्चपवादे आदाकम्मप्पवादे य ॥ ३४५ ॥**
**पच्चाक्खाणे विज्जाणुवादकल्लाणपाणवादे य ।**
**किरियाविसालपुव्वे कमसोथ तिलोयबिंदुसारे य ॥३४६॥**

उत्पादपूर्वाग्रायणीयवीर्यप्रवादास्तिनास्तिकप्रवादानि ।
ज्ञानसत्यप्रवादे आत्मकर्मप्रवादे च ॥ ३४५ ॥

प्रत्याख्यानं वीर्यानुवादकल्याणप्राणवादानि च ।
क्रियाविशालपूर्वं क्रमशः अथ त्रिलोकविंदुसारं च ॥ ३४६ ॥

जी० प्र०—यथाक्रमं उत्पादपूर्वं आग्रायणीयपूर्वं वीर्यप्रवादपूर्वं अस्तिनास्तिप्रवादपूर्वं ज्ञानप्रवादपूर्वं सत्यप्रवादपूर्वं आत्मप्रवादपूर्वं कर्मप्रवादपूर्वं प्रत्याख्यानपूर्वं विद्यानुवादपूर्वं कल्याणवादपूर्वं प्राणावादपूर्वं क्रियाविशालपूर्वं त्रिलोकविंदुसारपूर्वं चेति चतुर्दशपूर्वाणि भवंति । एतेषु पूर्वोक्तवस्तुश्रुतज्ञानस्य उपरि—अग्रे प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धया दशवस्तुप्रमितवस्तुसमासज्ञानविकल्पेषु गतेषु रूपोनैतावन्मात्रवस्तुश्रुतसमासज्ञानविकल्पेषु चरमवस्तुसमासोत्कृष्टविकल्पस्योपरि एकाक्षरवृद्धौ सत्यां उत्पादपूर्वश्रुतज्ञानं भवति । ततः उत्पादपूर्वश्रुतज्ञानस्य उपरि प्रत्येकमेकैकाक्षरवृद्धिसहचरितपदादिवृद्धया चतुर्दशवस्तुषु वृद्धेषु रूपोनतावन्मात्रोत्पादपूर्वसमासज्ञानविकल्पेषु गतेषु तच्चरमोत्कृष्टोत्पादपूर्वसमासज्ञानविकल्पस्य उपरि एकाक्षरवृद्धौ सत्यां अग्रायणीयपूर्वश्रुतज्ञानं भवति । एवमग्रेऽग्रेऽष्टादशद्वादशद्वादशषोडशविंशतित्रिंशत्पंचदशदशदशदशदशवस्तुषु क्रमेण वृद्धेषु रूपोनतावन्मात्रतावन्मात्रतत्तत्पूर्वसमासज्ञानविकल्पेषु गतेषु तत्तत्पूर्वसमासोत्कृष्टज्ञानविकल्पस्योपरि एकैकाक्षरे वृद्धे सति तत्तद्वीर्यप्रवादपूर्वास्तिनास्तिप्रवादपूर्वज्ञानप्रवादपूर्वसत्यप्रवादपूर्वात्मप्रवादपूर्वकर्मप्रवादपूर्वप्रत्याख्यानपूर्वविद्यानुवादपूर्वकल्याणवादपूर्वप्राणवादपूर्वक्रियाविशालपूर्वत्रिलोकविंदुसारपूर्वनामश्रुतज्ञानान्युत्पद्यंते । अत्र त्रिलोकविंदुसारस्य तु समासो नास्ति उत्तरज्ञानविकल्पाभावात् ॥ ३४५ ॥ ३४६ ॥ अथ चतुर्दशपूर्वगतवस्तुप्राभृतकसंख्यां कथयति—

मं० प्र०—यथाक्रमं उत्पादाग्रायणीयवीर्यप्रवादास्तिनास्तिप्रवादज्ञानप्रवादसत्यप्रवादात्मप्रवादकर्मप्रवादप्रत्याख्यानविद्यानुवादकल्याणप्राणावायक्रियाविशालत्रिलोकविंदुसारनामानि चतुर्दशपूर्वाणि भवंति । चशब्दाः समुच्चयार्थाः । तस्मात् पूर्वापर प्रत्येकमेकैकवर्णवृद्धिसहचरितपदादिवृद्धया चतुर्दशसु पूर्वेषु मिलितेषु तावन्मात्राः पूर्वसमासज्ञानविकल्पा भवंति ॥ ३४५–३४६ ॥ अथ चतुर्दशपूर्वसर्ववस्तुप्राभृतकसंख्या प्ररूपयति—

स० चं०—चौदह पूर्वनिके नाम अनुक्रमतैं ऐसैं जानने । उत्पाद १ आग्रायणीय १ वीर्यप्रवाद १ अस्ति नास्ति प्रवाद १ ज्ञानप्रवाद १ सत्यप्रवाद १ आत्मप्रवाद १ कर्मप्रवाद १ प्रत्याख्यानप्रवाद १ विद्यानुवाद १ कल्याणवाद १ प्राणवाद १ क्रियाविशाल १ त्रिलोकविंदुसार १ ये चौदह पूर्वनिके नाम जानने । इनिके लक्षण आगें कहेंगे—इहां ऐसैं जानना। पूर्वोक्त वस्तुश्रुतज्ञानके ऊपरि क्रमतैं एक एक अक्षरकी वृद्धि लीएं पदादिककी वृद्धि होतैं दश वस्तु प्रमाणमेंस्यों एक अक्षर घटाइए तहां पर्यंत वस्तु समासज्ञानके भेद हैं । ताके अंत भेदविषैं वह एक अक्षर मिलाएं उत्पाद पूर्वनामा श्रुतज्ञान हो है । बहुरि उत्पादपूर्व श्रुतज्ञानके ऊपरि एक एक अक्षर-

अक्षरकी वृद्धि लीयें पदादिकी वृद्धिसंयुक्त चौदहवस्तु होंहि। तामैं एक अक्षर घटाइये तहां पर्यंत उत्पादपूर्व समासके भेद जानने ताके अंतभेदविषैं वह एक अक्षरबंधै अग्रायणीय पूर्वनामा श्रुतज्ञान होहै असैंही क्रमतैं आगैं आगैं आठ आदि वस्तुकी वृद्धि होतैं तहां एक अक्षर घटावने पर्यंत तिस तिसपूर्व समासके भेद जानने। तिस तिसका अंत भेदविषैं सो सो एक अक्षर मिलाएं वीर्यप्रवाद आदि पूर्वनामा श्रुतज्ञान हो है। अंतका त्रिलोक विंदुसार नामा पूर्व आगैं ताकै समासके भेद नाहीं है जातैं याके आगैं श्रुतज्ञानके भेदका अभाव है।३४५। ३४६॥ आगैं चौदह पूर्वनिविषै वस्तुनाम अधिकारनिकी वा प्राभृतनामा अधिकारनिकी संख्या कहै हैं—

**पणणउदिसया वत्थू पाहुडया तियसहस्सणवयसया।**

**एदेसु चोद्दसेसु वि पुव्वेसु हवंति मिलिदाणि॥ ३४७॥**

पंचनवतिशतानि वस्तूनि प्राभृतकानि त्रिसहस्रनवशतानि।

एतेषु चतुर्दशस्वपि पूर्वेषु भवंति मिलितानि॥ ३४७॥

जी० प्र०—उत्पादपूर्वमादिं कृत्वा त्रिलोकविंदुसारावसानेषु चतुर्दशपूर्वेषु वस्तूनि सर्वाणि मिलित्वा पंचनवत्युत्तरशतप्रमितानि १९५ भवंति प्राभृतकानि तु सर्वाणि मिलित्वा नवशतोत्तरत्रिसहस्रप्रमितानि भवंति ३९०० । वस्तुसंख्यायां विंशत्या गुणितायां तत्संख्यासंभवात् ॥ ३४७॥ अथ पूर्वोक्तविंशतिविधश्रुतज्ञानविकल्पोपसंहारं गाथाद्वयेनाह—

मं० प्र०—एतेषु उत्पादपूर्वादिषु त्रिलोकविंदुसारपर्यंतेषु चतुर्दशसु पूर्वेषु वस्तूनि सर्वाणि मिलितानि पंचनवत्युत्तरशतसंख्यानि १९५। प्राभृतकानि तु सर्वाणि मिलितानि नवशतोत्तरत्रिसहस्रसंख्यानि भवति ३९०० वस्तुसंख्याया विंशत्या गुणिताया प्राभृतकसंख्यासंभवात् ॥ ३४७ ॥ अथ पूर्वोक्तविंशतिविधश्रुतज्ञानविकल्पोपसंहार गाथाद्वयेन प्ररूपयति—

स० चं०—जो उत्पाद आदि त्रिलोकविंदुसार पर्यंत चौदह पूर्व तिनिविषैं मिलाए हुवे दश आदि वस्तु नामा अधिकार सर्व एकसौ पिच्याणवै १९५ हो हैं। बहुरि एक एक वस्तुविषैं बीस बीस प्राभृत कहे ते सर्व प्राभृतक

उपसंहार दोय गाथानिकरि कहै हैं—

**अत्थक्खरं च पदसंघातं पडिवत्तियाणिजोगं च ।**
**दुगवारपाहुडं च य पाहुडयं वत्थु पुव्वं च ॥ ३४८ ॥**
**कमवण्णुत्तरवड्ढिय ताण समासा य अक्खरगदाणि ।**
**णाणवियप्पे वीसं गंथे बारस य चोद्दसयं ॥ ३४९ ॥**

अर्थाक्षरं च पदसंघातं प्रतिपत्तिकानुयोगं च ।
द्विकवारप्राभृतं च च प्राभृतकं वस्तु पूर्वं च ॥ ३४८ ॥
क्रमवर्णोत्तरवर्धिते तेषां समासाश्च अक्षरगताः ।
ज्ञानविकल्पे विंशतिः ग्रंथे द्वादश च चतुर्दशकं ॥ ३४९ ॥

जी० प्र०—अर्थाक्षरं रूपोनैकट्टविभक्तश्रुतकेवलमात्रमेकाक्षरज्ञानं के १८= तच्च तथा पदं च संघातं प्रतिपत्तिकं अनुयोगं द्विकवारप्राभृतकं प्राभृतकं वस्तु, पूर्वं चेति नव पुनः एषामेव नवानां क्रमवर्णोत्तरवर्धिताः समासाश्च नव एवमष्टादशभेदा अक्षरगतद्रव्यश्रुतविकल्पा भवंति। तद्द्रव्यश्रुतश्रवणसंजनितश्रुतज्ञानमेव पुनः अनक्षरात्मकपर्यायपर्यायसमासज्ञानद्वययुतं सत् विंशतिविधं श्रुतज्ञानं भवति। ग्रंथे शास्त्रसंदर्भे विवक्षिते सति आचारांगादिद्वादशांगविकल्प उत्पादपूर्वादिचतुर्दशपूर्वभेदं च द्रव्यश्रुतं तच्छ्रवणसंजनितज्ञानस्वरूपं भावश्रुतं। चशब्दात् अंगबाह्यसामायिकादिचतुर्दशप्रकीर्णकभेदद्रव्यभावात्मकश्रुतं पुद्गलद्रव्यरूपं वर्णपदवाक्यात्मकं द्रव्यश्रुतं, तच्छ्रवणसमुत्पन्नश्रुतज्ञानपर्यायरूपं भावश्रुतं च समुच्चीयते इति आचार्यस्य अभिप्रायः। पर्यायादिशब्दानां निरुक्तिः प्रदर्श्यते। तद्यथा—परीयंते व्याप्यंते सर्वे जीवा अनेनेति पर्यायः-सर्वजघन्यज्ञानं, ईदृशज्ञानरहितस्य जीवस्याभावात्। केवलज्ञानवत्स्वपि तत्संभवात् महासंख्यायां कोट्यादौ एकाद्यल्पसंख्यावत्। अक्षाय-श्रोत्रेंद्रियाय राति ददाति स्वमर्पयतीत्यक्षरं। पद्यते गच्छति जानात्यर्थमात्मा

अनेनेति पदं । सं–संक्षेपेण एकदेशेन हन्यते गम्यते ज्ञायते एका गतिः अनेनेति संघातः । प्रतिपद्यंते सामस्त्येन ज्ञायंते चतस्रो गतयः अनयेति प्रतिपत्तिः, संज्ञायां कप्रत्ययविधानात् प्रतिपत्तिकः, अनु गुणस्थानानुसारेण गत्यादिषु मार्गणासु युज्यंते संबध्यंते जीवा अस्मिन्ननेनेति चानुयोगः । प्रकर्षेण–नामस्थापनाद्रव्यभावनिर्देशस्वामित्वसाधनाधिकरणस्थितिविधान-सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वादिविशेषेण वस्त्वधिकारार्थैराभृतं परिपूर्णं प्राभृतं-वस्तुनोऽधिकारः, प्राभृतमिति संज्ञा अस्यास्तीति प्राभृतकं, प्राभृतकस्याधिकारः प्राभृतकप्राभृतकं वसंति पूर्वमहार्णवस्य अर्थाः एकदेशेन संत्यस्मिन्निति वस्तु। पूर्वाधिकारः पूरयति श्रुतार्थान् संविभर्त्तीति पूर्वं । सं–संगृह्य पर्यायादीनि पूर्वपर्यंतानि स्वीकृत्य अस्यंते क्षिप्यंते विकल्प्यंते इति समासाः । पर्यायज्ञानादुत्तरविकल्पाः पर्यायसमासाः । अक्षरज्ञानादुत्तरविकल्पा अक्षरसमासाः । एवमग्रेऽपि सर्वत्र पदसमासादयो योज्याः । अत्र पूर्वाणि १४, वस्तूनि १९५, प्राभृतकानि ३९००, द्विकवारप्रभृतकानि ९३६००, अनुयोगाः ३७४४००, प्रतिपत्तिकसंघातपदानि संख्यातसहस्रगुणितक्रमाणि एकपदाक्षराणि १६३४८३०७८८८, समस्ताक्षराणि रूपोनैकट्ठप्रमितानि १८४४६७४४०-७३७०९५५१६१५ । एतेष्वक्षरेषु एकपदाक्षरैः प्रमाणितेषु यल्लब्धं तद्द्वादशांगपदप्रमाणं शेषमंगबाह्याक्षराणि ॥ ३४८–३४९ ॥ तत्र प्रथमं तत्पदप्रमाणमाह—

मं० प्र०—अर्थाक्षरं रूपोनैकट्ठविभक्तश्रुतकेवलमात्रमेकमक्षरं अर्थाक्षरं । अर्थाक्षरं च पदं च संघातश्च प्रतिपत्तिकश्च अनुयोगश्च प्राभृतकप्राभृतकं च प्राभृतकं च वस्तु च पूर्वं च तेषामक्षरादीनां नवानां क्रमवर्णोत्तरवर्धितसमासाश्च नवेत्यष्टादशभेदा अक्षरगता द्रव्यश्रुतविकल्पा भवंति । ज्ञाने–तद्द्रव्यश्रुतश्रवणसंजनितश्रुतज्ञाने विवक्षिते अनक्षरात्मकपर्यायपर्यायसमासज्ञानद्वयेन सह विंशतिविकल्पं श्रुतज्ञानं भवति। ग्रंथे शास्त्रसंदर्भे विवक्षिते द्वादशविकल्पं आचारांगादिद्वादशागभेद, उत्पादपूर्वादिचतुर्दशपूर्वकं च द्रव्यश्रुतं तच्छ्रवणजनितज्ञानस्वरूपं भावश्रुतं च । चशब्देन अंगबाह्यं सामायिकादिचतुर्दशप्रकीर्णकभेदमपि द्रव्यभावश्रुत समुच्चीयते । पुद्गलद्रव्यरूप वर्णपदवाक्यात्मकं द्रव्यश्रुतं तच्छ्रवणसमुत्पन्नश्रुतज्ञानपर्यायरूपं भावश्रुतमित्याचार्यस्य तात्पर्यं । पर्यायादिशब्दानां निरुक्तिः प्रदर्श्यते। तद्यथा–परीयंते–व्याप्यते सर्वे जीवा अनेनेति पर्यायः-सर्वजघन्यं ज्ञानं । ईदृशज्ञानरहितस्य जीवस्यैवाभावात् । केवलज्ञानवत्स्वपि जीवेषु तत्संभवत्येव महासंख्यायां कोट्यादौ एकाद्यल्पसंख्यावत् । अक्षाय–श्रोत्रेंद्रियाय, राति ददाति, स्वमर्पयतीत्यक्षरं, । पद्यते–गच्छति जानात्यर्थमात्मा अनेनेति पदं । सं–संक्षेपेण–एकदेशेन हन्यते- गम्यते ज्ञायते एका गतिरनेनेति संघातः । प्रतिपद्यंते सामस्त्येन ज्ञायंते चतस्रो गतयः अनयेति प्रतिपत्तिः । संज्ञाया कप्रत्ययविधानात्प्रतिपत्तिकः । अनु–गुणस्थानानुसारेण गत्यादिषु मार्गणासु, युज्यते संबध्यंते जीवाः अस्मिन्ननेनेति वा अनुयोगः । प्रकर्षेण नामस्थापनाद्रव्यभावनिर्देशस्वामित्वसाधनाधिकरणस्थितिविधानसत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वादिविशेषेण वस्त्वधिकारार्थैराभृतं परिपूर्णं प्राभृतं वस्तुनोऽधिकारः । प्राभृतमिति संज्ञास्यास्तीति प्राभृतकं । प्राभृतकस्य अधिकारः प्राभृतकप्राभृतकं । वसंति पूर्वमहार्णवस्य अर्थाः एकदेशेन संत्यस्मिन्निति वस्तु । पूर्वाधिकारः–पूरयति श्रुतार्थान् संबिभर्त्तीति पूर्वं । सं सगृह्य पर्यायादीनि पूर्वपर्यंतानि स्वीकृत्य अस्यते क्षिप्यते विकल्प्यंते इति समासाः । पर्यायज्ञानादुत्तरविकल्पाः पर्यायसमासाः अक्षरज्ञानादुत्तरविकल्पा अक्षरसमासाः एवमुत्तरत्रापि पदसमासादयो योज्याः ॥३४८–३४९॥ अथ द्वादशांगपदसंख्यां प्ररूपयति—

स० चं०----अर्थाक्षर १ पद २ संघात ३ प्रतिपत्तिक ४ अनुयोग ५ प्राभृतकप्राभृतक ६ प्राभृतक ७ वस्तु ८ पूर्व ९ ए नव भेद बहुरि एक एक अक्षरकी वृद्धि आदि यथा संभव वृद्धि लीएं इनही अक्षरादिकनिके समास तिनिकरि नवभेद ऐसैं सर्व मिलिकरि अठारह भेद अक्षरात्मक द्रव्यश्रुतके हैं अर ज्ञानकी अपेक्षा इनही द्रव्यश्रुतानिके सुननेतैं जो ज्ञानभया सो उस ज्ञानके भी अठारह भेद कहिए। बहुरि अनक्षरात्मक श्रुतज्ञानके पर्याय १ अर पर्यायसमास २ ए दोय भेद मिलाएं सर्व श्रुतज्ञानके वीस भेद भए। बहुरि ग्रंथ जो शास्त्र ताकी विवक्षा करिए तौ आचारांग आदि द्वादश अंग अर उत्पाद पूर्व आदि चौदह पूर्व अर चकारतैं सामायिकादि चौदह प्रकीर्णक तिनिस्वरूप द्रव्यश्रुत ज्ञान जानना ताके सुननेतैं जो ज्ञान भया सो भावश्रुतज्ञान जानना। पुद्गल द्रव्यस्वरूप अक्षर पदादिकमय तौ द्रव्यश्रुत है ताके सुननेतैं जो श्रुतज्ञानका पर्यायरूप ज्ञान भया सो भावश्रुत है। अब जो पर्याय आदि भेद कहे तिनि शब्दनिकी निरुक्ति व्याकरण अनुसारि कहिए हैं परीयंते कहिए सर्व जीव जाकरि व्याप्त हैं सो पर्याय कहिए पर्यायज्ञान विना कोऊ जीव नाहीं। केवल ज्ञानीनिके भी पर्यायज्ञान संभवै है। जैसैं किसीकैं कोटि धन पाइए है तो वाकै एक धनतौ सहज ही वामें आया तैसैं महाज्ञानविषैं स्तोकज्ञान गर्भित भया जानना। बहुरि अक्ष कहिए कर्ण इंद्रिय ताकौं अपना स्वरूपकौं राति कहिए ज्ञान द्वारकरि दे है तातैं अक्षर कहिए। बहुरि पद्यते कहिए जाकरि आत्मा अर्थकौं प्राप्त होइ ताकौं पद कहिए। बहुरि सं कहिए संक्षेपतैं हन्यते गम्यते कहिए जानिए एक गतिका स्वरूप जिहिकरि सो संघात कहिएं। बहुरि प्रतिपद्यते कहिए विस्तारतैं जानिए हैं च्यारि गति जाकरि सो प्रतिपत्ति कहिए नामसंज्ञाविषैं कप्रत्ययतै प्रतिपात्तिक कहिए। बहुरि अनु कहिए गुणस्थाननिके अनुसारि युज्यंते कहिए संबंधरूप जीव जा विषैं कहिए है सो अनुयोग कहिए। बहुरि प्रकर्षेण कहिए नाम १ स्थापना १ द्रव्य १ भाव १ अथवा निर्देश १ स्वामित्व १ साधन १ अधिकरण १ स्थिति १ विधान १ अथवा सत् १ संख्या १ क्षेत्र १ स्पर्शन १ काल १ अंतर १ भाव१ अल्पबहुत्व इत्यादि विशेषकरि प्राभृत कहिए परिपूर्ण होइ ऐसा जो वस्तुका अधिकार सो प्राभृत कहिए। अर जाकी प्रा-

प्राभृत संज्ञा होइ सो प्राभृतक कहिए। बहुरि प्राभृतकका जो अधिकार सो प्राभृतकप्राभृतक कहिए बहुरि वसंति कहिए पूर्वरूपी समुद्रका अर्थ जिस विषैं एकोदेशपनै पाइए सो पूर्वका अधिकार वस्तु कहिए। बहुरि पूरयति कहिए शास्त्रके अर्थकौं पोषै सो पूर्व कहिए। ऐसैं दश भेदनिकी निरुक्ति कही। बहुरि सं कहिए संग्रह करि पर्याय आदि पूर्वपर्यंत भेदनिकौं अंगीकार करि अस्यंते कहिए प्राप्त करिए भेद करिए ते समास कहिए, पर्याय ज्ञानतैं जे पीछैं भेद तिनिकौं पर्यायसमास कहिए। अक्षर ज्ञानतैं जे पीछैं भेद तिनकौं अक्षरसमास कहिए ऐसैं ही दश भेद जानने। ऐसैं पूर्व चौदह अर वस्तु एकसौ पिच्याणवैं अर प्राभृतक तीन हजार नवसै अर प्राभृतक प्राभृतक तिराणवै हजार छसै अर अनुयोग तीन लाख चौहत्तरि हजार च्यारिसै अर प्रतिपत्तिक अर संघात अर पद क्रमतैं संख्यात हजार गुणे अर एक पदके अक्षर सोलहसौ चौंतीस कोडि तियासी लाख सात हजार आठसै अठ्यासी अर समस्त श्रुतके अक्षर एकघाटि एकट्ठी प्रमाण इनिकौं पदके अक्षरानिका भाग दीएं जो लब्धराशि होइ सो द्वादशांगके पदोंका प्रमाण जानना। अब शेष अक्षर हैं ते अंगवाह्य श्रुतके जानने। ३४८ ३४९। तहां प्रथम द्वादशांगके पदनिकी संख्या कहैं हैं—

**बारुत्तरसयकोडी तेसीदी तहय होंति लक्खाणं।**
**अट्ठावण्णसहस्सा पंचेव पदाणि अंगाणं॥ ३५०॥**

द्वादशोत्तरशतकोट्यः त्र्यशीतिस्तथा च भवति लक्षाणां।
अष्टापंचाशत्सहस्राणि पंचैव पदानि अंगानां॥ ३५०॥

जी० प्र०—द्वादशोत्तरशतकोट्यः त्र्यशीतिलक्षाणि अष्टपंचाशत्सहस्राणि पंच च द्वादशांगानां मध्यमसर्वपदप्रमाणं भवति ११२,८३,५८,००५। अंग्यते मध्यमपदैर्लक्ष्यते इत्यंगं। अथवा आचारादिद्वादशशास्त्रसमूहरूपश्रुतस्कंधस्य अंगं अवयवः एकदेशः आचाराद्येकैकशास्त्रमित्यर्थः॥ ३५०॥ अथांगवाह्याक्षरसंख्यां कथयति—

मं० प्र०—द्वादशोत्तरशतं कोट्यः त्र्यशीतिलक्षाणि अष्टापंचाशत्सहस्राणि पंच द्वादशानामंगानां पदानि यथा प्रत्येकं वक्ष्यंते तथैव मिलितानि सर्वाण्यपि भवंति । ११२८३५८००५ । अग्यते मध्यमपदैर्लक्ष्यते इत्यंग । अथवा आचारादिद्वादशशास्त्रसमूहस्य श्रुतस्कंधस्य अंग-अवयवः-एकदेशः, आचाराद्यैकैकशास्त्रमित्यर्थः ॥ ३५० ॥ अथांगवाह्यस्य अक्षरसंख्यां प्ररूपयति—

स० च०—एकसौ बारह कोडि तियासी लाख अठावन हजार पांच पद ११२८३५८००५ सर्व द्वादशांगके जानने । अंग्यते कहिए मध्यम पदनिकरि जो लखिये सो अंग कहिए अथवा सर्व श्रुतका जो एक एक आचारांगादिक रूप अवयव सो अंग कहिए । ऐसैं अंग शब्दकी निरुक्ति है ॥ ३५० ॥ आगें जो अंगवाह्य प्रकीर्णक तिनिके अक्षरनिकी संख्या कहै हैं—

**अडकोडिएयलक्खा अट्ठसहस्सा य एयसदिगं च ।**
**पण्णत्तरि वण्णाओ पइण्णयाणं पमाणं तु ॥ ३५१ ॥**

अष्टकोट्येकलक्षाणि अष्टसहस्राणि च एकशतकं च ।
पंचसप्ततिः वर्णाः प्रकीर्णकानां प्रमाणं तु ॥ ३५१ ॥

जी० प्र०—अष्टकोट्येकलक्षाष्टसहस्रैकशतपंचसप्ततिप्रमाणाः प्रकीर्णकानां अंगवाह्यानां सामायिकादीनां च चतुर्दशानां वर्णा भवंति ८०१०८१७५ तुशब्दः पूर्वसूत्रे द्वादशांगपदसंख्योक्ता, अस्मिन् सूत्रे च अंगवाह्याक्षरसंख्योक्तेति विशेषं ज्ञायति ॥ ३५१ ॥ अथामुमेवार्थं गाथाद्वयेनाह—

मं० प्र०—अष्टकोट्येकलक्षाष्टसहस्रपंचसप्तत्युत्तरैकशतप्रमाणाः प्रकीर्णकानामंगवाह्याना सामायिकादीना चतुर्दशाना वर्णा भवंति । ८०१०८१७५ । तुशब्दो विशेषार्थः । पूर्वसूत्रे द्वादशांगाना पदसंख्या उक्ता । अस्मिन् सूत्रे अंगवाह्यानामक्षरसंख्या उक्ता इत्यय विशेषः । द्विरूपवर्गधाराया रूपोने षष्ठवर्गे एकट्ठिमात्रे मध्यमपदवर्णैर्भक्ते सति लब्ध द्वादशांगपदप्रमाणं । अवशिष्टमंगवाह्याक्षरप्रमाण भवति॥३५१॥अथैतदर्थनिर्णयार्थं गाथाचतुष्टयेन प्रक्रिया प्ररूपयति—

स० चं०—बहुरि सामायिकादिक प्रकीर्णकानिके अक्षर आठ कोडि एक लाख आठ हजार एकसौ पिचहत्तरि ८०१०८१७५ जानने । ३५१ । आगैं इस अर्थके निर्णय करनेके अर्थि च्यारि गाथानिकरि अक्षरनिकी प्रक्रिया कहै हैं

# तेत्तीस वेंजिणाइं सत्तावीसा सरा तहा भणिया ।
# चत्तारि य जोगवहा चउसट्ठी मूलवण्णाओ ॥ ३५२ ॥

त्रयस्त्रिंशत् व्यंजनानि सप्तविंशतिः स्वरास्तथा भणिताः ।
चत्वारश्च योगवहाः चतुःषष्टिः मूलवर्णाः ॥ ३५२ ॥

ओ–अहो भव्य ! व्यंजनानि अर्धमात्राणि क् ख् ग् घ् ङ् । च् छ् ज् झ् ञ् । ट् ठ् ड् ढ् ण् । त् थ् द् ध् न् । प् फ् ब् भ् म् । य् र् ल् व् श् ष् स् ह् । इत्येतानि त्रयस्त्रिंशत् ३३ । स्वराः एकद्वित्रिमात्राः । अ इ उ ऋ ऌ ए ऐ ओ औ इत्येते नव, प्रत्येकं ह्रस्वदीर्घप्लुतभेदैस्त्रिभिर्गुणिताः अ आ आ ३, इ ई ई ३, उ ऊ ऊ ३, ऋ ॠ ॠ ३, ऌ ॡ ॡ ३, ए १ ए २ ए ३, ऐ १ ऐ २ ऐ ३, ओ १ ओ २ ओ ३, औ १ औ २ औ ३ इत्येते सप्तविंशतिः २७ । योगवाहाः अं अः ᳲक ᳳप इत्येते चत्वारः ४, एवं मिलित्वा मूलवर्णाश्चतुःषष्टिः ६४ । यथानादिधने परमागमे प्रसिद्धास्तथैवात्र भणिताः संजानीहि । व्यज्यते स्फुटीक्रियते अर्थो यैस्तानि व्यंजनानि । स्वरंति–अर्थं कथयंतीति स्वराः । योगं–अन्याक्षरसंयोगं वहंतीति योगवाहाः । मूलानि संयुक्तोत्तरवर्णोत्पत्तिकारणानि वर्णाः, मूलवर्णाः इति समासार्थबलेन असंयुक्ता एव चतुःषष्टिरिति लभ्यंते । ऌवर्णः संस्कृते दीर्घो नास्ति तथापि अनुकरणे देशांतरभाषायां चास्ति । ए ऐ ओ औ इति चत्वारोऽपि संस्कृते ह्रस्वा न संति तथापि प्राकृते देशांतरभाषायां च संति ॥ ३५२ ॥

म० प्र०—व्यंजनानि अर्धमात्राणि क् ख् ग् घ् ङ् । च् छ् ज् झ् ञ् । ट् ठ् ड् ढ् ण् । त् थ् द् ध् न् । प् फ् ब् भ् म् । य् र् ल् व् श् ष् स् ह् इत्येतानि त्रयस्त्रिंशत् ३३ । स्वराः एकद्वित्रिमात्राः अ इ उ ऋ ऌ ए ऐ ओ औ इत्येते नव प्रत्येकं ह्रस्वदीर्घप्लुतभेदैस्त्रिभिर्गुणिताः अ आ आ ३ । इ ई ई ३ । उ ऊ ऊ ३ । ऋ ॠ ॠ ३ । ऌ ॡ ॡ ३ । ए १ ए २ ए ३ । ऐ १ ऐ २ ऐ ३ । ओ १ ओ २ ओ ३ । औ १ औ २ औ ३ । इत्येते सप्तविंशतिः २७ । योगवाहाः अं अः ᳲक ᳳप इत्येते चत्वारः । ४ । सर्वे मिलिताः, मूलवर्णाः असंयुक्तवर्णाः चतुष्षष्टिः । ६४ । यथा अनादिनिधने परमागमे प्रसिद्धाः तथात्र भणिताः कथिताः । चशब्दः समुच्चयार्थः । व्यज्यते स्फुटीक्रियते अर्थो यैस्तानि व्यंजनानि । स्वरंति-अर्थं कथयंतीति स्वराः । योगमन्याक्षरसंयोग वहंतीति योगवाहाः । मूलानि-संयुक्तोत्तरवर्णोत्पत्तिकारणानि भूताः वर्णा मूलवर्णाः इति समासार्थबलेन असंयुक्ता एव एते चतुःषष्टिवर्णा ग्राह्याः । ऌकारस्य दीर्घस्य संस्कृते अभावेपि अनुकरणे देशभाषांतरेषु च सद्भावः । ए ऐ ओ औ इत्येतेषां चतुर्णां संस्कृते ह्रस्वस्याभावेऽपि प्राकृते देशभाषासु च सद्भावोस्ति ॥ ३५२ ॥

स.चं.–ओ कहिये हो भव्य ! तेतीस ३३ तौ व्यंजन अक्षर हैं आधी मात्रा जाके बोलनेके कालविषैं होइ ताकौं व्यंजन कहिये क् ख् ग् घ् ङ् । च् छ् ज् झ् ञ् । ट् ठ् ड् ढ् ण् । त् थ् द् ध् न् । प् फ् ब् भ् म् । य् र् ल् व् । श् ष् स् ह् ए तेतीस व्यंजन अक्षर हैं। बहुरि सत्ताईस स्वर अक्षर हैं अ १ इ १ उ १ ऋ १ ऌ १ ए १ ऐ १ ओ १ औ १ ए नव अक्षर, इनिके एक एकके ह्रस्व दीर्घ प्लुत तीन भेदनिकरि गुणैं सत्ताईस भेद हो हैं। अ आ आ ३। इ ई ई ३। उ ऊ ऊ ३। ऋ ॠ ॠ ३। ऌ ॡ ॡ ३। ए ए ए ३। ऐ ऐ ऐ ३। ओ ओ ओ ३। औ औ औ ३ ! ए सत्ताईस स्वर हैं। जाकी एक मात्रा होय ताकौं ह्रस्व कहिये। जाकी दोय मात्रा होंइ ताकौं दीर्घ कहिए। जाकी तीन मात्रा होंइ ताकौं प्लुत कहिए। बहुरि च्यारि योगवाह अक्षर हैं अनुस्वार १ विसर्ग १ जिह्वामूलीय १ उपध्मानीय १ तहां अं ऐसा अक्षर अनुस्वार है। अः ऐसा अक्षर विसर्ग है। कः ✕ऐसा अक्षर जिह्वामूलीय है पः ✕ ऐसा अक्षर उपध्मानीय है। ए चौसठि मूल अक्षर अनादिनिधन परमागमविषै प्रसिद्ध हैं। 'सिद्धो वर्णः समाम्नायः' इति वचनात्। व्यज्यते कहिए अर्थ जिनिकरि प्रकट करिए ते व्यंजन कहिए। स्वरंति कहिए अर्थकौं कहैं ते स्वर कहिए। योग कहिए अक्षरके संयोगको वहंति कहिए प्राप्त होंइ ते योगवह कहिए। मूल कहिए और अक्षरके संयोगरहित चौसठि संयोगी अक्षर उपजनेकौं कारण ये चौसठि मूलवर्ण हैं। इस अर्थ करि द्वितीयादि अक्षरके संयोगरहित चौसठि अक्षर हैं इनिविषै दोय आदि अक्षर मिलैं संयोगी हो है। जैसे क्कार व्यंजन अकार स्वर मिलिकरि क ऐसा अक्षर हो है। आकारके मिलनेतें का ऐसा अक्षर हो है इत्यादि संयोगी अक्षर उपजनेकौं कारण चौसठि मूल अक्षर जानने। इहां प्रश्न–जो व्याकरणविषै ए ऐ ओ औ इनिकौ ह्रस्व न कहै है इहां ए भी ह्रस्व कैसें कहे ताका समाधान–जो संस्कृत भाषाविषैं ह्रस्वरूप ए ऐ ओ औ नाहीं हो है तातैं न कहे। प्राकृत भाषा विषैं वा देशांतरकी भाषाविषैं ए ऐ ओ औ ए अक्षर भी ह्रस्व हो हैं तातैं इहां कहे हैं। बहुरि एक दीर्घ ॡकार संस्कृत भाषाविषैं नाहीं हैं तथापि अनुकरणविषैं देशांतरकी भाषाविषैं हो है तातैं इहां कह्या है ॥ ३५२ ॥

**चउसट्ठिपदं विरलिय दुगं च दाऊण संगुणं किच्चा ।**
**रूऊणं च कुए पुण सुदणाणस्सक्खरा होंति ॥ ३५३ ॥**

चतुःषष्टिपदं विरलयित्वा द्विकं च दत्त्वा संगुणं कृत्वा ।
रूपोने च कृते पुनः श्रुतज्ञानस्याक्षराणि भवंति ॥ ३५३ ॥

जी० प्र०—मूलवर्णप्रमाणं चःपष्टिपदं एकैकरूपेण विरलयित्वा रूपं रूपं प्रति द्विकं दत्त्वा परस्परं संगुणय तल्लब्धे रूपोने कृते सति श्रुतज्ञानस्य द्वादशांगप्रकीर्णकरूपश्रुतस्कंधस्य द्रव्यश्रुतस्य अपुनरुक्ताक्षराणि भवंति । वाक्यार्थप्रतीत्यर्थं गृहीतानां पुनरुक्ताक्षराणां संख्यानियमाभावात् ॥३५३॥ तदपुनरुक्ताक्षरप्रमाणं कियदिति चेदाह—

म० प्र०—चतुःषष्टिपद मूलवर्णप्रमाणचतुःषष्ट्यंकस्थानरूपाणि विरलयित्वा पंक्तिरूपेण तिर्यक्संस्थाप्य रूपं प्रति द्विकं दत्त्वा संगुण--परस्परगुणनं कृत्वा लब्धे रूपोने कृते सति श्रुतज्ञानस्य—श्रुतकेवलस्य, द्वादशांगप्रकीर्णकश्रुतस्कधरूपस्य द्रव्यश्रुतस्य अपुनरुक्ताक्षराणि तल्लब्धप्रमितानि भवंति वाक्यार्थप्रतीतिनिमित्तपुनरुक्ताक्षराणा संख्यानियमाभावात् । चशब्दौ क्रियासमुच्चयार्थौ । पुनःशब्दो रूपोनकरणे विशेषमाह । एकद्विव्यादिसंयोगाक्षराणा चतुःषष्टिसयोगपर्यंतानां संकलने सति श्रुतस्कंधाक्षरप्रमाणोत्पत्तिर्भवति इत्ययं विशेषः ॥ ३५३ ॥

स० चं०—मूल अक्षर प्रमाण चौसठि स्थान तिनिका विरलन करिये बरोबरि पंक्तिरूप एक एक जुदा चौसठि जायगा माडिए तहां एक २ के स्थान दोय दोयका अंक २ माडिये पाछै उनकौं परस्पर गुणन करिये दोय दून्यों च्यारि ४ च्यारि दून्यो आठ ८ आठ दून्यो सोलह १६ ऐसैं चौसठि पर्यंत गुणन कीये जो एकट्ठी प्रमाण आवै तामें एक घटाइये इतने अक्षर सर्व द्रव्यश्रुतके जानने ते ये अक्षर अपुनरुक्त जानने जातैं जो वाक्यका अर्थकी प्रतीतिके निमित्त उनही कहै अक्षरनिकौं वारंवार कहे तौ उनका किछू संख्याका नियम है नाहीं ॥३५३॥ तिनि अपुनरुक्त अक्षरनिका प्रमाण कितना है सो कहै हैं—

**एकट्ठ च च य छस्सत्तयं च च य सुण्णसत्ततियसत्ता ।**

सुण्ण णव पण पंच य एक्कं छक्केक्कगो य पणगं च ॥ ३५४ ॥

एकाष्ट च च च षट्सप्तकं च च च शून्यसप्तत्रिकसप्त ।
शून्यं नव पंच पंच च एकं षट्कैककश्च पंचकं च ॥ ३५४ ॥

जी० प्र०—एकाष्टचतुश्चतुःषट्सप्तकं चतुश्चतुःशून्यसप्तत्रिकसप्तशून्यं नवपंचपंचएकं षट्कैकश्च पंचकं च इत्येकांकादिपंचांकावसानविंशतिस्थानात्मकद्विरूपवर्गधारोत्पन्नरूपोनषष्ठवर्गप्रमाणाक्षराणि भवंति—१८४४६७४४०७३७०९५५१६१५। एतानि अक्षराणि एकद्वित्रिसंयोगादीनि चतुःषष्टिसंयोगपर्यंतानि संति तेषामुत्पत्तिक्रमो दर्श्यते तद्यथा—उक्तमूलवर्णाश्चतुःषष्टिं तिर्यक्पंक्त्या लिखित्वा तत्र कवर्णे प्रत्येकभंगे एकः १। द्विसंयोगो नास्ति। खवर्णे प्रत्येकभंगः १ द्विसंयोगो भंगः १ एवं २। गवर्णे प्र १ द्वि २ त्रि १ एवं ४। घवर्णे प्र १ द्वि ३ त्रि ३ च १ एवं ८। ङ वर्णे प्र १ द्वि ४ त्रि ६ च ४ पं १ एवं १६। चवर्णे प्र १ द्वि ५ त्रि १० च १० पं ५ ष १ एवं ३२। छवर्णे प्र १ द्वि ६ त्रि १५ च २० पं १५ ष ६ सप्त १ एवं ६४। जवर्णे प्र १ द्वि ७ त्रि २१ च ३५ पं ३५ ष २१ सप्त ७ अष्ट १ एवं १२८। झवर्णे प्र १ द्वि ८ त्रि २८ च ५६ पं ७० ष ५६ सप्त २८ अष्ट ८ नव १ एवं २५६। ञवर्णे प्र १ द्वि ९ त्रि ३६ च ८४ पं १२६ ष १२६ सप्त ८४ अष्ट ३६ नव ९ दश १ एवं ५१२। अनेन क्रमेण चतुःषष्टिस्थानेषु गतेषु प्रत्येकादिभंगाः पूर्वपूर्वेभ्यः उत्तरोत्तरे द्विगुणा द्विगुणा भवंति। ३५४। तेषां संख्यासाधने करणसूत्रं श्रीमदभयचंद्रसूरिसैद्धांतचक्रवर्तिश्रीपादप्रसादेन केशववर्णिनः प्राहुः—

पत्तेयभंगमेगं बेसंजोगं विरूवपदमेत्तं। तियसंजोगादिपमा रूवाहियवारहीणपदसंकलिदं ॥

प्रत्येकभंगमेकं द्विसंयोगं रूपोनपदमात्रं। त्रिसंयोगादिप्रमाणां रूपाधिकवारहीनपदसंकलितं ॥

विवक्षितस्थानेषु सर्वत्र प्रत्येकभंगः एकैकः। द्विसंयोगभंगो रूपोनपदमात्रः। त्रिसंयोगादीनां प्रमाणं तु यथाक्रमं रूपाधिकवारहीनपदसंकलितं। एकवारादिसंकलितं तद्वारसंख्यया एकरूपाधिकया हीनस्य विवक्षितपदस्य यावत्तावद्भवति। यथा दशमे ञवर्णे। त्रिसंयोगाः द्विरूपोनपदस्य एकवारसंकलनमात्राः—$\frac{१०}{२}$—$\frac{२}{}$ । $\frac{१०}{१}$—$\frac{१}{}$ अपवर्तिताः ३६ चतुःसंयोगाः त्रिरूपोनपदस्य द्विकवारसंकलनमात्राः—

$\frac{७ । ८ । ९}{३ । २ । १}$ अपवर्तिताः ८४। पंचसंयोगाः चतूरूपोनपदस्य त्रिकवारसंकलनमात्राः $\frac{६ । ७ । ८ । ९}{४ । ३ । २ । १}$ अपवर्तिताः १२६। षट् संयोगाः पंच रूपोनपदस्य चतुर्वारसंकलनमात्राः $\frac{५ । ६ । ७ । ८ । ९}{५ । ४ । ३ । २ । १}$ अपवर्तिताः १२६। सप्तसंयोगाः षड्रूपोनपदस्य पंचवारसंकलनमात्राः $\frac{४ । ५ । ६ । ७ । ८ । ९}{६ । ५ । ४ । ३ । २ । १}$

द्वादशोत्तरपंचशतमेव द्विगुणा द्विगुणा भूत्वा चतुश्चरमत्रिचरमद्विचरमचरमेषु एकहस्य षोडशांशाष्टांशचतुर्थांशार्धप्रमिता भवंति । १ । २ । ४ । ८ । १६ । ३२ । ६४ । १२८ । २५६ । ५१२ । ००० । ०० । ००० । १८= । १८= । १८= । १८= । एवं स्थिताक्षरसंख्या चउसट्ठिपदं विरलिय इत्या-
१६ । ८ । ४ । २
दिना वा 'अंतधणं गुणगुणियं' इत्यादिना वा संकलिता सती द्वादशांगप्रकीर्णकश्रुतस्कंधसमस्ताक्षरसंख्या रूपोनैकट्टप्रमिता भवतीति तात्पर्यं ।३५४॥

मं० प्र०—एकाष्टचतुश्चतु षट्सप्तचतुश्चतु शून्यसप्तत्रिकसप्तशून्यनवपंचपचैकषडेकपंचप्रमितं श्रुतस्कंधापुनरुक्ताक्षरप्रमाणं । चतुःशब्दस्य आद्यक्षरश्चकारो गृहीतः । सत्तयं चेति चकारः समुच्चयार्थोऽव्ययः । पच चेति अंत्यचकारोऽपि समुच्चयार्थोऽव्ययः । मध्ये मध्ये विभक्तिर्दृश्यते । तदनुसारेण एकाष्टचतुश्चतुःषट्सप्तकं च चतुश्चतुःशून्यसप्तत्रिकसप्तशून्यं नव पच पंच च एकं षट्कं एकैकश्च पच च इति छाया द्रष्टव्या । १८४४६७४४०७३७०९५५१६१५ । इदानीं द्विसयोगाद्यक्षरभंगप्राक्रिया दर्श्यते । तद्यथा—अ आ आ ३ । इ ई ई ३ । इति षडक्षराणि लिखित्वा प्रत्येकाक्षराणि षट् । ६ । 'पढमक्खो अंतगदो' इत्यादिना अक्षसचारेणोत्पन्नानि द्विसंयोगाक्षराणि पंचदश १५ । त्रिसंयोगाक्षराणि विंशति । २० । चतुःसयोगाक्षराणि पंचदश १५ । पंचसंयोगाक्षराणि षट् ६ पट्सयोगाक्षरमेक १ । एव सर्वाणि मिलितानि त्रिषष्टिः ६३ । एव सप्तसयोगादिचतुःषष्टिसंयोगपर्यंताक्षराणि अव्यामोहेनाक्षसचारपूर्वकमानेतव्यानि । एवमानीतानि सर्वाण्यक्षराणि द्विरूपषष्ठवर्गस्य रूपोनस्य यावंति रूपाणि तावंति भवंति ॥ ३५४ ॥

स० चं०—एक आठ च्यारि च्यारि छह सात च्यारि च्यारि विंदी सात तीन सात विंदी नव पांच पांच एक छह एक पंच इतने अंक क्रमतैं लिखैं जो प्रमाण होइ तितने अक्षर सर्व श्रुतके जानने १८४४६७४४०७३७०९५-५१६१५ इतने अक्षर हैं। द्विरूप वर्गधाराका छठा वर्गस्थान एकट्ठी प्रमाण है तामैं एक घटायें ऐसैं एक आदि पंच पर्यंत वीस अंक रूप प्रमाण हो है बहुरि इहां विशेष कहिये है-एक अक्षर एक संयोगी द्विसंयोगी त्रिसंयोगी आदि चौसाठि संयोगी पर्यंत जानने। तिनकी उत्पत्तिका अनुक्रम दिखाइये है यहां कहे मूलवर्ण चौसठि तिनकौं वरोवरि पंक्तिकरि लिखिये। बहुरि तहां केवल कवर्णविषैं तौ एक प्रत्येक भंग ही है। द्विसंयोगी आदि नाहीं है। बहुरि ख वर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी एक ऐसैं दोय भंग है। बहुरि गवर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी दोय त्रिसंयोगी एक ऐसैं च्यारि भंग है। बहुरि घवर्णसहित विषैं प्रत्येक भंग एक द्विसंयोगी तीन त्रिसंयोगी तीन चतुः संयोगी एक ऐसैं आठ भंग जानना। बहुरि ङ वर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी च्यारि त्रिसंयोगी छह चतुः संयोगी च्यारि पंच संयोगी एक ऐसैं सोलह भंग हैं। बहुरि चवर्ण सहितविषैं प्रत्येक भंग एक द्विसंयोगी त्रिसंयोगी चतुः संयोगी पंच संयोगी षट् संयोगी क्रमतैं पांच दश दश पांच एक ऐसैं वत्तीस भंग हैं बहुरि छ वर्ण सहित विषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त संयोगी भंग क्रमतैं एक छह पंद्रह

वीस पंद्रह छह एक ऐसें चौसठि भंग हैं। बहुरि जवर्ण सहितविषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त अष्ट संयोगी भंग क्रमतें एक सात इकईस पैंतीस पैंतीस इकईस सात एक ऐसें एकसौ अठाइस भंग हैं। बहुरि झवर्ण सहित विषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त अष्ट नव संयोगी भंग क्रमतें एक आठ अठाईस छप्पन सत्तरि छप्पन अठाईस आठ एक ऐसें दोयसै छप्पन भंग हैं। बहुरि ञ वर्णसहितविषैं प्रत्येक द्वि त्रि चतुः पंच षट् सप्त अष्ट नव दश संयोगी भंग क्रमतें एक नव छत्तीस चौरासी एकसौ छब्बीस एकसौ छब्बीस चौरासी छत्तीस नव एक ऐसें पांचसै बारह भंग हैं इसही अनुक्रमकरि चौसठि स्थाननिविषै प्रत्येक आदि भंग पूर्व पूर्व स्थानतें उत्तर २ स्थानविषैं दूणे दूणे हो हैं॥

| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ००० चौसठि ६४ पंक्ति |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | प्रत्येक |
| १ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | द्विसंयोगी |
| जोड | २ | १ | ३ | ६ | १० | १५ | २१ | २८ | ३६ | त्रिसंयोगी |
| | जोड | ४ | १ | ४ | १० | २० | ३५ | ५६ | ८४ | चतुःसंयोगी |
| | | जोड | ८ | १ | ५ | १५ | ३५ | ७० | १२६ | पंचसंयोगी |
| | | | जोड | १६ | १ | ६ | २१ | ५६ | १२६ | षट्संयोगी |
| | | | | जोड | ३२ | १ | ७ | २८ | ८४ | सप्तसंयोगी |
| | | | | | जोड | ६४ | १ | ८ | ३६ | अष्टसंयोगी |
| | | | | | | जोड | १२८ | १ | ९ | नवसंयोगी |
| | | | | | | | जोड | २५६ | १ | दशसंयोगी |
| | | | | | | | | जोड | ५१२ | ०० |

इहां प्रत्येक आदि भंगनिका स्वरूप कहा? सो कहिये है—जुदे जुदे ग्रहणरूप प्रत्येक भंग हैं ते येकही प्रकार हैं। जैसैं दशवां ञवर्णकी विवक्षाविषैं ञवर्णकौं जुदा ग्रहण करिये यहु येक ही प्रत्येक भंग का विधान जानना। बहुरि दोय तीन आदि अक्षरनिके संयोगतैं जे भंग होंइ तिनकौं द्विसंयोगी त्रिसंयोगी आदि कहिये ते अनेक प्रकार हो हैं जैसैं दशवां ञ वर्णकी विवक्षाविषैं दोय अक्षरनिका संयोग—क् ञ्। ख ञ्। ग् ञ्। घ् ञ्। ङ ञ्। च् ञ्। छ् ञ्। ज् ञ् । झ् ञ्। ऐसैं नव प्रकार हो है। बहुरि तीनि अक्षरनिका संयोग क् ख् ञ्। क् ग् ञ्। क् घ् ञ्। क् ङ् ञ्। क् च् ञ्। क् छ् ञ्। क् ज् ञ्। क् झ् ञ्। ख् ग् ञ्। ख् घ् ञ्। ख् ङ् ञ्। ख् च् ञ् । ख् छ् ञ्। ख् ज् ञ्। ख् झ् ञ्। ग् घ् ञ्। ग् ङ् ञ्। ग् च् ञ्। ग् छ् ञ्। ग् ज् ञ्। ग् झ् ञ्। घ् ङ् ञ्। घ् च् ञ्। घ् छ् ञ्। घ् ज् ञ्। घ् झ् ञ्। ङ् च् ञ्। ङ् छ् ञ्। ङ् ज् ञ्। ङ् झ् ञ्। च् छ् ञ्। च् ज् ञ्। च् झ् ञ्। छ् ज् ञ्। छ् झ् ञ्। ज् झ् ञ्। ऐसैं छत्तीस प्रकार भंग हो हैं। ऐसैं ही अन्य जानने। बहुरि जितनेकी विवक्षा होइ तितनां संयोगी भंग एक ही प्रकार हो हैं। जैसैं दश अक्षरनिकी विवक्षा विषै दश अक्षरनिका संयोग रूप भंग एकही हो है ऐसैं भंगनिका स्वरूप जानना। इहां श्रीअभयचन्द्रसूरि सिद्धान्तचक्रवर्तीके चरणनिका प्रसादकरि केशववर्णी संस्कृत टीकाकार सो तिन एक दोय संयोगी आदि भंगनिकी संख्याका साधनविषै करण सूत्र कहै हैं—

पत्तेयभंगमेगं वेसंजोगं विरूवपदमेत्तं।
तियसंजोगादिपमा रूवाहियवारहीणपदसंकलिदं॥

विवक्षित स्थान विषैं सर्वत्र प्रत्येक भंग एक एक ही है बहुरि द्विसंयोगी भंग एक घाटि गच्छ प्रमाण है इहां जेथवां स्थान विवक्षित होइ तीहिं प्रमाण गच्छ जानना। बहुरि त्रिसंयोगी आदि भंगनिका क्रमतैं एक अधिक वार हीन गच्छका संकलन धनमात्र प्रमाण है। भावार्थ यहु जो त्रिसंयोगी चतुःसंयोगी आदि विषैं एकवार दोयवार आदि संकलन करना। बहुरि जेतीवार संकलन होइ तातैं एक अधिक प्रमाणकों विवक्षित गच्छमें घटाएं अवशेष जेता प्रमाण रहै तितनेका संकलन करना। जैसैं दशवां स्थानकी विवक्षा विषैं त्रिसंयोगी

भंग ल्यावनेकौं एकवार संकलन अर एकवारका प्रमाण एक तातैं एक अधिक दोय सो गच्छ दशमें घटाएं आठ होइ ऐसैं आठका एकवार संकलन धनमात्र तहां त्रिसंयोगी भंग जानना । ऐसैं ही अन्यत्र जानना । बहुरि संकलन धन ल्यावनेकौं पूर्वैं केशववर्णी करि उक्त सूत्र कहे थे—

तत्तो रूवहियकमे गुणगारा होंति उड्ढगच्छोत्ति।
इगिरूवमादिरूउत्तरहारा होंति पभवोत्ति ॥

इन सूत्रनिके अनुसारि विवक्षित संकलन धन ल्यावना। अब ऐसैं करण सूत्रके अनुसार उदाहरण दिखाइए है-विवक्षित दशमा अवर्ण तहां प्रत्येक भंग एक द्विसंयोगी एक घाटि गच्छमात्र नव त्रिसंयोगी भंग दोय घाटि गच्छमात्र आठ ताका एकवार संकलन धनमात्र सो संकलन धनके साधन करण सूत्रके अनुसारि आठ नवकौं दोय एकका भाग दीएं छत्तीस हो हैं। जातैं आठ नवकौं परस्पर गुणैं बहत्तरि भाज्य दोय एककौं परस्पर गुणैं भागहार दोय भागहारका भाग भाज्यकौं दीएं छत्तीस भए। ऐसैं ही चतुःसंयोगी भंग तीन घाटि गच्छका दोयवार संकलन धनमात्र है तहां सात आठ नवकौं तीन दोय एकका भाग दीएं चौरासी हो हैं। बहुरि पंचसंयोगी च्यारि घाटि गच्छ का तीनवार संकलधनमात्र है तहां छह सात आठ नवकौं च्यारि तीन दोय एकका भाग दीएं एकसौ छब्बीस हो हैं। बहुरि छह संयोगी पांच घाटि गच्छका च्यारिवार संकलनधनमात्र हैं तहां पांच छह सात आठ नवकौं पांच च्यारि तीन दोय एकका भाग दीएं एकसौ छब्बीस हो हैं। बहुरि सप्तसंयोगी छह घाटि गच्छका पांचवार संकलन धनमात्र है। तहां च्यारि पांच छह सात आठ नवकौं पांच च्यारि तीन दोय येकका भाग दीएं चौरासी हो हैं। बहुरि आठ संयोगी सात घाटि गच्छका छहवार संकलन धनमात्र है तहां तीन च्यारि पांच छह सात आठ नवकौं सात छह पांच च्यारि तीन दोय येकका भाग दीएं छत्तीस हो है। बहुरि नव संयोगी आठ घाटि गच्छका सातवार संकलनधनमात्र है तहां दोय तीन च्यारि पांच छह सात आठ नवकौं आठ सात छह पांच च्यारि तीन दोय एकका भाग दीएं नव हो हैं। बहुरि दश संयोगी नव घाटि गच्छका आठवार संकल धनमात्र

है। इहां परमार्थतैं संकलन नाहीं जातैं एकका सर्ववार संकलन एक ही हो है तातैं एक है ऐसैं सबनिका जोड दीएं दशवां स्थानविषैं पांचसै बारह भंग भए ॥ ऐसैं ही सर्व स्थाननि विषैं ल्यावना। तहां अंतका चौसठिवां स्थानविषैं प्रत्येक भंग एक बहुरि द्विसंयोगी भंग एक घाटि गच्छमात्र तरेसठि बहुरि त्रिसंयोगी भंग दोय घाटि गच्छका एकवार संकलन धनमात्र तहां बासठि तरेसठिकों दोय एकका भाग दीएं उगणीससै तरेपन हो हैं। बहुरि चतुःसंयोगी तीन घाटि गच्छ दोयवार संकलनधनमात्र तहां इकसठि बासठि तरेसठिकौं तीन दोय एकका भाग दीएं गुणतालीस हजार सातसै ग्यारह भंग हो हैं बहुरि पंचसंयोगी च्यारि घाटि गच्छका तीनवार संकलन धनमात्र तहां साठि इकसठि बासठि तरेसठिकों च्यारि तीन दोय एकका भाग दीएं पांचलाख पिच्याणवै हजार छसै पैसठि हो हैं ऐसैं ही षट् संयोगी आदि भंग पांच आदि एक एक बंधता घाटि गच्छका तीन आदि एक एक बंधतावार संकलनधनमात्र जानने। तहां पूर्वोक्ततैं गुणसठि अठावन आदि भाज्यविषैं अर पांच छह आदि भागहारनिविषैं अधिक अधिक माडि भाज्यकौं भागहारका भाग दीएं जेता जेता प्रमाण आवै तितना तितना तहां तहां षट्संयोगी आदि भंग जानने। तहां तरेसठि संयोगी भंग बासठि घाटि गच्छ दोय ताका एकसठिवार संकलन धनमात्र तहां दोय तीन आदि एक एक बंधता तरेसठि पर्यंतकौं बासठि इकसठि आदि एक एक घटता एकपर्यंतका भाग दीएं यथा संभव अपवर्तन कीएं तरेसठि भंग हो हैं। बहुरि चौसठि संयोगी भंग एकही है। ऐसैं चौसठिवां स्थानविषैं प्रत्येक आदि चौसठि संयोगी पर्यंत भंगनिकौं जोडैं एकट्ठीका आधा प्रमाणमात्र भंग होइ। ऐसैं एक आदि एक एक अधिक चौसठि पर्यन्त अक्षरनिके स्थाननिविषैं 'पत्तेयभंगमेगं' इत्यादि करण सूत्रनिकरि भंग हो है। अथवा गुणस्थानाधिकारविषैं प्रमादनिका व्याख्यान करते अक्ष संचार विधान कह्या था तिस विधान करि भी ऐसैं ही भंग हो हैं ते भंग क्रमतैं एक दोय चारि आठ सोलह बत्तीस चौसठि एक सौ अठाईस दोयसै छप्पन पांचसै बारह एक हजार चौबीस दोय हजार अडतालिस च्यारि हजार छिनवै आठ हजार एकसौ बानवै सोलह हजार तीनसौ चौरासी बत्तीस हजार सातसै अडसठि पैंसठ हजार पांचसै

छत्तीस एकलाख इकतीस हजार बहत्तरि दोय लाख बासठि हजार एकसौ चवालीस पांच लाख चौबीस हजार दोयसै अठासी दश लाख अडतालीस हजार पांचसै छिहत्तरि बीस लाख सित्ताणवै हजार एकसौ बावन इकतालीस लाख चौराणवे हजार तीनसै दोय तियासी लाख अठासी हजार छसै चारि एक कोडि सडसाठिलाख तेहत्तरि हजार दोयसै आठ इत्यादि दूणै दूणे हो हैं अंत स्थान तैं चौथा तीसरा दूसरा अन्तस्थानविषैं एकट्ठीका सोलवां आठवां चौथा दूसरा भागमात्र भए तिन सबनिकों जोडै 'चउसट्ठिपदं विरलिय' इत्यादि सूत्रोक्त एक घाटि एकट्ठी मात्र भंग हो है अथवा 'अन्तधणं गुणगुणियं 'आदि विहीणं रूउणुत्तारभजियं' इस करण सूत्रकरि अन्त धन एकट्ठीका आधा ताकौं गुणकार दोय करि गुणैं एकट्ठी तामैं एक घटाएं एक घाटि एकट्ठी एक घाटी गुणकार एक ताका भाग दिएं भी इतने ही सर्व भंग हो हैं ऐसै सर्वश्रुत संबंधी समस्त अक्षरनिकी संख्या एक घाटि एकट्ठी प्रमाण जानना इहां जैसैं अ आ आ इ ई ई इनि छह अक्षरनिविषैं प्रत्येक भंग छह द्विसंयोगी पंद्रह त्रिसंयोगी वीस चतुःसंयोगी पंद्रह पंचसंयोगी छह छह संयोगी एक मिलि तरेसठि भंग होंइ। छह जायगा दूवा मांडि परस्पर गुणे येक घटाय तरेसठि हो हैं तैसैं चौसठि मूल अक्षरनिविषैं पूर्वै एक एक स्थानविषैं एक एक प्रत्येक भंग मिलि चौसठि भए। ऐसैं ही सर्व स्थानकनिके द्विसंयोगी त्रिसंयोगी आदि भंग मांडि जितने जितने होंइ तितने तितने द्विसंयोगी त्रिसंयोगी आदि भंग जानने। सबनिकों जोडैं येक घाटि एकट्ठी प्रमाण हो हैं सोई चौसठि जायगा दोयका अंक मांडि परस्पर गुणैं तहां एक घटाएं एक घाटि एकट्ठी प्रमाण श्रुतज्ञानके अक्षर जानने ॥ ३५४ ॥

**मज्झिमपदक्खरवहिदवण्णा ते अंगपुव्वगपदाणि ।**
**सेसक्खरसंखा ओ पइण्णयाणं पमाणं तु ॥ ३५५ ॥**

**मध्यमपदाक्षरावहितवर्णास्ते अंगपूर्वगपदानि ।**
**शेषाक्षरसंख्या अहो प्रकीर्णकानां प्रमाणं तु ॥ ३५५ ॥**

जी० प्र०—मध्यमपदस्य परमागमप्रसिद्धस्याक्षरैः षोडशशतचतुस्त्रिंशत्कोटित्र्यशीतिलक्षसप्तसहस्राष्टशताष्टाशीतिप्रमितैः तेषु सकलश्रुतस्कंधाक्षरेषु रूपोनैकट्ठप्रमात्रेषु भक्तेषु यल्लब्धं तावंत्यंगपूर्वगतमध्यमपदानि भवंति। अवशिष्टाक्षरसंख्या अंगबाह्यप्रकीर्णकाक्षरप्रमाणं भवति। यद्येतावतामक्षराणां एकं मध्यमपदं तदा एतावदक्षराणां कियंति मध्यमपदानि भवंति ? इति त्रैराशिकं कृत्वा प्रमाणराशिना भक्ते यल्लब्धं तदंगपूर्वपदानि भवंति। ११-२८३५८००५। अवशिष्टाक्षराणि सामायिकाद्यंगबाह्यश्रुताक्षराणि भवंति। ८०१०८१७५। ओ ! अहो भव्य ! इत्यंगांगबाह्यश्रुतद्वयस्य यथासंभवं पदप्रमाणमक्षरप्रमाणं च त्वं जानीहि। प्राकृते ओ शब्दः अव्ययं संबोधनार्थः ॥३५५॥ अथांगपूर्वपदसंख्याविशेषं त्रयोदशगाथासूत्रैराख्याति—

म०प्र०—मध्यमपदस्य परमागमप्रसिद्धस्य, अक्षरैः—षोडशशतचतुस्त्रिंशत्कोटित्र्यशीतिलक्षसप्तसहस्राष्टशताष्टाशीतिप्रमितैः, तेषु सकलश्रुतस्कंधाक्षरेषु अवहृतेषु—भक्तेषु, यल्लब्धं तावंति अंगपूर्वगतमध्यमपदानि भवति। अवशिष्टाक्षरसंख्या अंगबाह्यप्रकीर्णकाना प्रमाणं भवति। यद्येतावद्भिरक्षरैः प्र १६३४८३०-७८८८ एकं मध्यमपद लभ्यते। फ १। तदा एतावद्भिरक्षरैः इ १८४४६७४४०७३७०९५५१६१५ कियंति मध्यमपदानि लभ्यते इति त्रैराशिकेन लब्धान्यंगपूर्वपदानि। ११२८३५८००५। अवशिष्टाक्षराणि ८०१०८१७५। ओ इति प्राकृते संबोधनार्थमव्यय। अहो भव्याः ! इत्थमंगप्रविष्टांगबाह्यश्रुतयोः पदाक्षरप्रमाणे भवद्भिर्ज्ञातव्ये इति। तुशब्दो विशेषार्थः पूर्ववत् ॥ ३५५ ॥ अथ श्रीमाधवचंद्रत्रैविद्यदेवा अंगपूर्वाणा पदसंख्याविशेषं त्रयोदशभिर्गाथाभिः प्ररूपयंति—

स. चं०—एक घाटि एकट्ठी प्रमाण समस्तश्रुतके अक्षर कहे तिनिकौं परमागमविषैं प्रसिद्ध जो मध्यम पद ताके अक्षरनिका प्रमाण सोलासै चौंतीस कोडि तियासीलाख सातहजार आठसै अठ्यासी ताका भाग दीएं जो पदनिका प्रमाण आवै तितने तौ अंगपूर्व संबंधी मध्यम पद जानने। बहुरि अवशेष जे अक्षर रहे ते प्रकीर्णकोंके जानने सो एक सौ बारह कोडि तियासीलाख अठावन हजार पांच इतने तौ अंग प्रविष्ट श्रुतका पदनिका प्रमाण आया अवशेष आठ कोडि एक लाख आठ हजार एकसौ पिचहत्तरि अक्षर रहे ते अंगबाह्य प्रकीर्णकके जानने। ऐसैं अंगप्रविष्ट अंगबाह्य दोय प्रकार श्रुतके पदनिका वा अक्षरनिका प्रमाण हे भव्य ! तू जानि ॥ ३५५ ॥ आगै श्रीमाधवचन्द्र त्रैविद्यदेव तेरह गाथानि करि अंगपूर्वनिके पदनिकी संख्या प्ररूपै हैं—

# आयारे सुद्दयडे ठाणे समवायणामगे अंगे ।
# तत्तो विक्खापण्णत्तीए णाहस्स धम्मकहा ॥ ३५६ ॥

आचारे सूत्रकृते स्थाने समवायनामके अंगे ।
ततो व्याख्याप्रज्ञप्तौ नाथस्य धर्मकथायां ॥ ३५६ ॥

जी० प्र०—द्रव्यश्रुतमधिकृत्य निरुक्तिप्रतिपाद्यार्थपदसंख्याविशेषाणां तत्तदंगपूर्वेषु प्ररूपणा क्रियते भावश्रुते निरुक्त्याद्यसंभवात् । अत्र द्वादशांगेषु प्रथमाचारांगं कथितं । कुतः ? मोक्षहेतुभूतसंवरनिर्जराकारणपंचाचारादिसकलचारित्रप्रतिपादकत्वेन मुमुक्षुभिराद्रियमाणस्य मोक्षांगभूतस्य परमागमशास्त्रस्य प्रथमतोवक्तव्यत्वस्य युक्तिसिद्धत्वात् । चतुर्ज्ञानसप्तर्धिसंपन्नगणधरदेवैः तीर्थकरमुखसरोजसंभूतसर्वभाषात्मकदिव्यध्वनिश्रवणावधारितसमस्तशब्दार्थैः शिष्यप्रशिष्यानुग्रहार्थं विरचितश्रुतस्कंधद्वादशांगानां मध्ये प्रथममाचारांगं विरचितं । आचरंति समंततोऽनुतिष्ठंति मोक्षमार्गमाराधयंति अस्मिन्ननेनेति वा आचारः तस्मिन् आचारांगे—

जदं चरे जदं चिट्ठे जदं आसे जदं सये ।
जदं भुंजेज्जमासेज्ज एवं पावं ण वज्झई ॥ १ ॥

कथं चरेत् ? कथ तिष्ठेत ? कथमासीत् ? कथं शयीत ? कथं भाषेत ? कथं भुंजीत ? कथं पापं न वध्यते ? इति गणधरप्रश्नानुसारेण यतं चरेत् । यतं तिष्ठेत् । यतमासीत । यतं शयीत । यतं भाषेत । यतं भुंजीत । एवं पापं न वध्यते इत्याद्युत्तरवाक्यप्रतिपादिमुनिजनसमस्ताचरणं वर्ण्यते । सूत्रयति—संक्षेपेण अर्थं सूचयति इति सूत्रं परमागमः । तदर्थं कृतं करणं ज्ञानविनयादिनिर्विघ्नाध्ययनादिक्रिया, अथवा प्रज्ञापना, कल्प्याकल्प्यं, छेदोपस्थापना, व्यवहारधर्मक्रिया, स्वसमयपरसमयस्वरूपं च सूत्रैः कृतं करणं क्रियाविशेषो यस्मिन् वर्ण्यते तत् सूत्रकृतं नाम द्वितीयमंगं । तिष्ठंति अस्मिन् एकाद्येकोत्तराणि स्थानानीति स्थानं तस्मिन् संग्रहनयेन एक एवात्मा । व्यवहारनयेन संसारी मुक्तश्चेति द्विविकल्पः उत्पादव्ययध्रौव्ययुक्त इति त्रिलक्षणः । कर्मवशात् चतुर्गतिषु संक्रामतीति चतुःसंक्रमणयुक्तः औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभेदेन पंचविशिष्टधर्मप्रधानः पूर्वदक्षिणपश्चिमोत्तरोर्ध्वाधोगतिभेदेन संसारावस्थायां षट्कोपक्रमयुक्तः स्यादस्ति स्यान्नास्ति स्यादस्तिनास्ति स्यादवक्तव्यः स्यादस्त्यवक्तव्यः स्यान्नास्त्यवक्तव्यः स्यादस्तिनास्त्यवक्तव्यः इत्यादि सप्तभंगीसद्भावेष्पुपयुक्तः अष्टविधकर्मास्रवयुक्तत्वादष्टास्रवः नव जीवाजीवास्रवबंधसंवरनिर्जरामोक्षपुण्यपापरूपा अर्थाः—पदार्थाः विषयाः यस्य स नवार्थः । पृथिव्यप्तेजोवायुप्रत्येकसाधारणद्वित्रिचतुःपंचेंद्रियभेदाद् दशस्थानकः इत्यादीनि जी-

वस्य, सामान्यार्पणादेकः पुद्गलः विशेषार्पणाया अणुस्कंधभेदाद् द्वितयः, इत्यादि पुद्गलादीनां च एकाद्येकोत्तरस्थानानि वर्ण्यंते इति स्थानं नाम तृतीयमंगं । सं—संग्रहेण सादृश्यसामान्येन अवेयंते ज्ञायंते जीवादिपदार्था द्रव्यक्षेत्रकालभावानाश्रित्य अस्मिन्निति समवायांगं। तत्र द्रव्याश्रयेण धर्मास्तिकायेन अधर्मास्तिकायः सदृशः । संसारिजीवेन संसारिजीवः सदृशः । मुक्तजीवेन मुक्तजीवः सदृशः इत्यादिर्द्रव्यसमवायः । क्षेत्राश्रयेण सीमंतनरक-मनुष्यक्षेत्र--ऋजुविमान--सिद्धक्षेत्राणि प्रदेशतः सदृशानि। अवधिस्थान-नरक-जंबूद्वीप- सर्वार्थसिद्धिविमानानि सदृशानि इत्यादि क्षेत्रसमवायः । एकसमयः एकसमयेन सदृशः,आवलिः आवल्या सदृशी,प्रथमपृथ्वीनारकभावनव्यंतराणां जघन्यायूंषि सदृशानि । सप्तमपृथ्वीनरकसर्वार्थसिद्धिदेवानां उत्कृष्टायुषी सदृशे इत्यादिः कालसमवायः । केवलज्ञानं केवलदर्शनेन सदृशमित्यादिर्भावसमवायः इति समवायाख्यं चतुर्थमंगं । विशेषैः बहुप्रकारैराख्यातं किमस्ति जीवः? किं नास्ति जीवः? किमेको जीवः? किमनेको जीवः? किं नित्यो जीवः? किमनित्यो जीवः? किं वक्तव्यो जीवः? किमवक्तव्यो जीव इत्यादीनि षष्टिसहस्रसंख्यानि भगवदर्हत्तीर्थकरसन्निधौ गणधरदेवप्रश्नवाक्यानि प्रज्ञाप्यंते कथ्यंते यस्यां सा व्याख्याप्रज्ञप्तिनाम पंचममंगं । नाथः-त्रिलोकेश्वराणांस्वामी तीर्थकरपरमभट्टारकः तस्य धर्मकथा जीवादिवस्तुस्वभावकथनं,घातिकर्मक्षयानंतरकेवलज्ञानसहोत्पन्नतीर्थकरत्वपुण्यातिशयविजृंभितमहिम्नः तीर्थकरस्य पूर्वाह्णमध्याह्नापराह्णार्धरात्रेषु षट्षट्घटिकाकालपर्यंतं द्वादशगणसभामध्ये स्वभावतो दिव्यध्वनिरुद्गच्छति अन्यकालेऽपि गणधरशक्रचक्रधरप्रश्नानंतरं चोद्भवति एवं समुद्भूतो दिव्यध्वनिः समस्तासन्नश्रोतृगणानुदिश्य उत्तमक्षमादिलक्षणं रत्नत्रयात्मकं वा धर्मं कथयति । अथवा ज्ञातुर्गणधरदेवस्य जिज्ञासमानस्य प्रश्नानुसारेण तदुत्तरवाक्यरूपा धर्मकथा तत्पृष्टास्तित्वनास्तित्वादिस्वरूपकथनं, अथवा ज्ञातॄणां तीर्थकरगणधरशक्रचक्रधरादीनां धर्मानुबंधिकथोपकथाकथनं नाथधर्मकथा ज्ञातृधर्मकथानाम वा षष्ठमंगं ॥ ३५६ ॥

मं० प्र०—द्रव्यश्रुतमाधिकृत्य निरुक्तिप्रतिपाद्यार्थपदसंख्याविशेषाणा तत्तदंगपूर्वेषु प्ररूपणा क्रियते भावश्रुते निरुक्त्याद्यसंभवात् । द्वादशांगानां प्रथममाचारांग मोक्षार्थस्य परमागमस्य मुमुक्षुभिराद्रियमाणत्वेन मोक्षहेतुसंवरनिर्जराकारणपंचाचारादिसकलचारित्रप्रतिपादकस्य शास्त्रस्य प्रथमतो वक्तव्यत्व युक्तिसिद्धमिति चतुर्ज्ञानसप्तर्धिसंपन्नैर्गणधरदेवैस्तीर्थकरमुखारविंदसंभूतसर्वभाषात्मक दिव्यध्वनिश्रवणावधारितसमस्तशब्दार्थैः शिष्यप्रशिष्यानुग्रहार्थं विरचितस्य श्रुतस्कंधस्य द्वादशांगानां मध्ये आचारांगं प्रथम विरचितं । आचरंति—समततः अनुतिष्ठंति मोक्षमार्गमाराधयंत्यस्मिन्ननेनेति वा आचारः, तस्मिन्नाचारांगे कथं चरेत् ? कथं तिष्ठेत् ? कथमासीत ? कथं शयीत ? कथं भाषेत ? कथं भुंजीत ? कथं पापं न बध्यते ? इत्यादि गणधरप्रश्नानुसारेण यतं चरेत् ? यतं तिष्ठेत् ? यतमासीत, यत शयीत, यतं भाषेत, यतं भुंजीत, एव पापं न बध्यते इत्याद्युत्तरवाक्यप्रतिपादितं मुनीनां समस्तमाचरणं वर्ण्यते । सूचयति—संक्षेपेणार्थं सूचयतीति सूत्रं परमागमः, तदर्थकृत—करणं ज्ञानविनयादिनिर्विघ्नाध्ययनादिक्रिया । अथवा प्रज्ञापना—कल्प्याकल्प्य—छेदोपस्थापना—व्यवहारधर्मक्रियाः स्वसमयपरसमयस्वरूपं च सूत्रैः कृतं—करणं क्रियाविशेषो यस्मिन्वर्ण्यते तत्सूत्रकृतं नाम द्वितीयमंगं। तिष्ठंत्यस्मिन्नेकाद्येकोत्तराणि स्थानानीति स्थानं तस्मिन् संग्रहनयेन एक एवात्मा, व्यवहारनयेन संसारी मुक्तश्चेति द्विविकल्पः। उत्पादव्ययध्रौव्ययुक्तः इति त्रिलक्षणः। कर्मवशाच्चतुर्गतिषु संक्रामतीति चतुःसंक्रमणयुक्तः । औपशमिकक्षायिकक्षायोपशमिकौदयिकपारणामिकभेदेन पंचविशिष्टधर्मप्रधानः । पूर्वदक्षिणपश्चिमोत्तरोर्ध्वाधोगतिभेदेन संसारावस्थायां षट्कोपक्रमयुक्तः । स्यादस्ति,

